**Government Oriental Library Series.**

BIBLIOTHECA SANSKRITA—No. 20.

# S'RI-S'ANKARA'CHA'RYA'S
## MISCELLANEOUS WORKS.
## Vol. II.

# श्रीशङ्करभगवत्पादीयप्रकरणप्रबन्धावलिः.
## द्वितीयसंपुटम्.

EDITED BY

A. MAHA'DEVA S'A'STRI, B. A.,
*Curator, Government Oriental Library, Mysore,*

AND

PANDITARATNAM K. RANGA'CHA'RYA,
*Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of
His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS.

1899.

## EDITOR'S NOTE.

The works collected in this volume have been edited from the printed editions and the manuscript copies found in the Government Oriental Library and in the Muṭṭ Libraries at Sringeri and Kudli.

A. M. S.

## II. शुद्धिपत्रिका.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १६४ | २२ | भवतो | भववतो |
| २३२ | १२ | तत्स्रष्ट्वौ | तत्स्रष्ट्वा । |

# अपरोक्षानुभूतिः.

---

## II. शतश्लोकी.

### विज्ञानात्मप्रकरणम् १—६४.

## आनन्दकोशप्रकरणम् ६५—७४. श्लो.



---

## जगन्मिथ्यात्वप्रकरणम् ७५—८२.



---

## कर्ममीमांसाप्रकरणम् ८३—१०१.

---

## III. हरिस्तुतिः.

---

## IV. दशश्लोकी.

### त्वंपदार्थप्रकरणम्.



### तत्पदार्थप्रकरणम्



---

श्रीगणेशाय नमः.

# अपरोक्षानुभूतिः सव्याख्या.

स्वप्रकाशश्च हेतुर्यः परमात्मा चिदात्मकः ।
अपरोक्षानुभूत्याख्यः सोहमस्मि परं सुखम् ॥ १ ॥
ईशगुर्वात्मभेदाद्यः सकलव्यवहारभूः ।
औपाधिकस्स्वचिन्मात्रः सोऽपरोक्षानुभूतिकः ॥ २ ॥
तदेवमनुसन्धाय निर्विघ्नां स्वेष्टदेवताम् ।
अपरोक्षानुभूत्याख्यामाचार्योक्तिं प्रकाशये ॥ ३ ॥
यद्यपीयं स्वतस्स्पष्टा तथाऽपि स्वात्मसिद्धये ।
यत्नोयं सोपि संक्षेपात्क्रियतेऽनर्थनाशनः ॥ ४ ॥
काहमुल्काकरः क्वायं सूर्यस्तेजोनिधिः किल ।
तथाऽपि भक्तिमान्कः किं न कुर्यात्स्वहितासये ॥ ५ ॥

**श्रीहरिं[1] परमानन्दमुपदेष्टारमीश्वरम् ।**
**व्यापकं सर्वलोकानां[2] कारणं तं नमाम्यहम् ॥ १ ॥**

तत्राचार्याः स्वेष्टपरदेवताऽनुसन्धानलक्षणं मङ्गळं निर्विघ्नग्रन्थसमाप्तये स्वमनसि कृत्वा शिष्यशिक्षायै ग्रन्थादौ निबध्नन्ति

[1] श्रीरामं. [2] भूतानां.

**श्रीहरिमिति** ॥ **अहं तं नमामि** इत्यन्वयः । अत्रेयं प्रक्रिया—पदार्थो द्विविधः, आत्माऽनात्मा चेति । तत्रात्मा द्विविधः, ईश्वरो जीवश्चेति । एतावपि द्विविधौ, शुद्धाशुद्धभेदात् । तत्राशुद्धौ मायाऽविद्योपाधित्वेन भेदव्यवहारहेतू । शुद्धौ त्वभेदव्यवहारहेतू । तथाऽनात्माऽपि त्रिविधः—कारणसूक्ष्मस्थूलभेदात् । एतदेव शरीरत्रयमिति व्यवह्रियते । एवं चिज्जडरूपवैलक्षण्यात्तमःप्रकाशयोरिव विभक्तयोरुभयोरात्माऽनात्मनोरविवेक एव बन्धकारणम् । तयोर्विवेकस्तु मोक्षकारणमिति दिक् ॥

तत्र तावदहंशब्देन देहत्रयविशिष्टत्वेनाशुद्धो जीवः; अस्यैवापकृष्टत्वात् । **तं नमामि** तं मायातत्कार्यहन्तृत्वेऽपि तदाश्रयभूतत्वेन सर्वकारणं वेदान्तप्रसिद्धमीश्वरम्, एतस्यैव सर्वोत्कृष्टत्वात् । नमामि नमस्करोमि स्वात्मत्वेनानुसन्दधामीत्यर्थः । तस्यैव सर्वोत्कृष्टत्वेनानुसन्धानयोग्यत्वमाह—**श्रीहरिमिति** । श्रियं दधानमित्यर्थः । यद्वा—स्वाश्रयतया श्रियते स्वीक्रियते प्रलयसुषुप्त्यादौ सर्वभूतैरिति श्रीर्जीवत्वोपाधिभूताऽविद्या तां हरत्यात्मज्ञानप्रदानेन नाशयतीति श्रीहरिस्तम् । यद्वा—स एव सर्वाधिष्ठानतया श्रीरित्युच्यते, श्रीरेव हरिस्तम् । ननु किमनेनाविद्यातत्कार्यहरणेनेत्याशङ्क्य परमपुरुषार्थप्राप्तिर्भवतीति सूचयितुं तस्य परमानन्दरूपतामाह—**परमानन्दमिति** । परमोऽविनाशित्वनिरतिशयत्वाभ्यामुत्कृष्ट आनन्दः सुखविशेषस्तद्रूपमित्यर्थः । तर्हि वैषयिकसुखवज्जडः स्यादित्यत आह—**उपदेष्टारमिति** । आचार्यद्वाराऽऽत्मसुखोपदेशकं चिद्रूपमित्यर्थः । ननु केवलानन्दस्य कथमुपदेष्टृत्वमित्यत आह—**ईश्वरमिति** । ईष्टेऽसावीश्वरः विचित्रशक्तित्वात्सर्वसमर्थः, तं नमामीत्यन्वयः । एवमपि परिच्छिन्नत्वात् घटादिवदनात्मत्वं स्यादित्यत आह—**व्यापकमिति** । स्वसत्ता-

प्रकाशाभ्यां नामरूपे व्याप्नोति स व्यापकः तं परिच्छेदकस्य देशकालादेर्मायिकत्वादनन्तमित्यर्थः । ननु व्याप्यव्यापकभावेनानन्तत्वमसिद्धमित्यत आह—**सर्वलोकानां कारणमिति** । अभिन्ननिमित्तोपादानमित्यर्थः । 'सत्यं ज्ञानमनन्तं ब्रह्म'* 'आत्मनाऽऽत्मानमभिसंविवेश'† इत्यादिश्रुतेः ॥ १ ॥

**अपरोक्षानुभूतिर्वै प्रोच्यते मोक्षसिद्धये ।**
**सद्भिरेव[1] प्रयत्नेन वीक्षणीया मुहुर्मुहुः ॥ २ ॥**

इदानीं प्रेक्षावत्प्रवृत्तयेऽनुबन्धिचतुष्टयं दर्शयन् स्वचिकीर्षितं प्रतिजानीते—**अपरोक्षेति** । **वै** इत्यव्ययेन विद्वदनुभवं प्रमाणयति । तथा चायमर्थः—विद्वदनुभवप्रसिद्धा या तत्त्वमस्यादिमहावाक्यश्रवणजा प्रत्यगभिन्नब्रह्मविषया **अपरोक्षानुभूतिः** अक्षाणामिन्द्रियाणां परमतीतं न भवतीत्यपरोक्षं इन्द्रियाधिष्ठानतत्प्रकाशत्वाभ्यां नित्यप्रत्यक्षस्वप्रकाशात्मतत्त्वं, तस्यानुभूतिर्वृत्त्यारूढाखण्डता । यद्वा—अपरोक्षा चासावनुभूतिश्चेत्यपरोक्षानुभूतिः विद्याऽपरपर्यायो ब्रह्मसाक्षात्कारः तत्साधनग्रन्थोप्युपनिषच्छब्दवत् अपरोक्षानुभूतिशब्देनोपचर्यते । झडित्यवलोकनमात्रेणैवोत्तमाधिकारिणां ब्रह्मात्मसाक्षात्कारकारणं ग्रन्थविशेष इत्यर्थः । अनेन नित्यापरोक्षब्रह्मात्मतत्त्वं विषयो दर्शितः । स **प्रोच्यते** प्रकर्षेण तत्तदाशङ्कानिराकरणपूर्वकं सिद्धान्तरहस्यप्रदर्शनरूपेणोच्यते कथ्यत इत्यर्थः । अस्माभिः पूर्वाचार्यैरित्यर्थाद्ध्याहारः । ननु प्रायः

**प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते ।**

इति न्यायान्नारम्भणीयो ग्रन्थ इत्याशङ्क्य प्रयोजनमाह—मोक्ष-

---

[1] रेवं. *त. उ. २-१. † तै. आ. १-२३.

**सिद्धय इति** । मोक्षो नाम स्वाविद्याकल्पितानात्मदेहाद्यात्मत्वाभिमानरूपबन्धनिवृत्तिद्वारा स्वस्वरूपावस्थानम् । तस्य सिद्धिः प्राप्तिः तदर्थम् । अनेन सर्वानर्थनिवृत्तिद्वारा परमानन्दावाप्तिरूपं प्रयोजनं दर्शितम् । किंलक्षणाऽपरोक्षानुभूतिः? **सद्भिः** साधुभिः नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसंपन्नैर्मुमुक्षुभिरित्यर्थः । **एव**शब्दान्नान्यैः कर्मोपासनाधिकारिभिरिति भावः । **मुहुर्मुहुः** नैरन्तर्यदीर्घकालाभ्यास**प्रयत्नेन** स्नानभिक्षादावप्यनादरं कृत्वेत्यर्थः । **वीक्षणीया** गुरुमुखादवगत्य विचारणीया । अनेन मुमुक्षुरधिकारी दर्शितः । एतेनैवार्थात् पूर्वकाण्डोत्तरकाण्डयोः साध्यसाधनभावः संबन्धश्च दर्शितो भवतीति बोद्धव्यम् ॥ २ ॥

**स्ववर्णाश्रमधर्मेण तपसा हरितोषणात् ।**
**साधनं प्रभवेत्पुंसां वैराग्यादिचतुष्टयम् ॥ ३ ॥**

ननु कार्यस्य कारणाधीनत्वात् पूर्वोक्तसाधनचतुष्टयस्य किं कारणमित्याशङ्क्याह—**स्ववर्णेति** ॥ अत्र स्वशब्देन मुख्यगौणमिथ्याभेदेन त्रिविधेषु साक्षिपुत्रादिदेहादिलक्षणेष्वात्मसु मध्ये मिथ्यात्मा योग्यत्वाद्गृह्यते । तस्य देहादेः ब्राह्मणादिवर्णब्रह्मचर्याद्याश्रमप्रयुक्तेन धर्मेण ब्रह्मार्पणकृतकर्मानुष्ठानजन्येनापूर्वेण पूर्वमीमांसाप्रसिद्धेन भाविफलाधारभूतेन पुण्यादिशब्दवाच्येनेत्यर्थः । तथा—**तपसा** कृच्छ्रचान्द्रायणादिना प्रायश्चित्तेनेत्यर्थः । पुनः—**हरितोषणात्** भगवत्प्रीतिकरात्सर्वभूतदयालक्षणात् कर्मविशेषात् । एतैस्त्रिभिः साधनैः **वैराग्यादिचतुष्टयरूपं साधनं** मोक्षसाधको धर्मविशेषः **पुंसां प्रभवेत्** । सम्भावनायां लिङ् । यद्वैवमन्वयः—स्ववर्णाश्रमधर्मरूपेण तपसा कृतं यद्धरितोषणं तस्मादिति । यद्यपि साधनचतुष्टयस्य

विवेकादिक्रमेण हेतुहेतुमद्भावः । तथाऽपि वैराग्यस्यासाधारणकारणतां द्योतयितुमादौ ग्रहणं कृतमिति बोद्धव्यम् ॥ ३ ॥

**ब्रह्मादिस्थावरान्तेषु वैराग्यं विषयेष्वनु ।**
**यथैव काकविष्ठायां वैराग्यं तद्धि निर्मलम् ॥ ४ ॥**

कीदृशं तद्वैराग्यादिचतुष्टयमित्याकांक्षायां तत्स्वयमेव व्याचष्टे— '**ब्रह्मादि**' इत्यारभ्य '**वक्तव्या सा मुमुक्षुता**' इत्यन्तेन श्लोकषट्कात्मकेन ग्रन्थेन । तत्रादौ वैराग्यस्य लक्षणमाह—**ब्रह्मादिस्थावरान्तेष्विति** । **ब्रह्मादिस्थावरान्तेषु** सत्यलोकादिमर्त्यलोकान्तेषु भोगसाधनेषु, **अनु** कर्मजन्यत्वेनानित्यत्वं लक्षीकृत्येत्यर्थः । **वैराग्यं** इच्छाराहित्यम् । तत्र दृष्टान्तमाह—**यथैवेति** । यथैव **काकविष्ठायां वैराग्यम्** । गर्दभादिविष्ठायामपि कदाचिन् कस्यचित् ज्वरशान्त्यर्थं ग्रहणेच्छा भवति, अतः काकविष्ठाया ग्रहणम् । उपलक्षणमेतद्वान्त्यादीनाम् । विषयेष्विच्छानुदये वैराग्यस्य हेतुगर्भितं विशेषणमाह—**तदिति** । **हि** यस्मात्तद्वैराग्यं **निर्मलं** रागादिमलरहितम् ॥ ४ ॥

**नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीतगम्**[1] ।
**एवं यो निश्चयस्सम्यग्विवेको वस्तुनस्स वै ॥ ५ ॥**

इदानीं वैराग्यकारणं विवेकं लक्षयति—**नित्यमिति** ॥ **वै** प्रसिद्धम् । **सः वस्तुनः** पदार्थस्य **विवेको** विवेचनविशेषो ज्ञेयः । स क इत्यत आह—**एवमिति** । **य** एवंप्रकारेण **सम्यक्** संशयादिशून्यो **निश्चयः** । एवं कथमित्यत आह—**नित्यमिति** । **हि** इति विद्वदनुभवप्रसिद्धं **आत्मस्वरूपं नित्यं** अविनाशि अबाध्यं सत्यमित्यर्थः, 'अविनाशी वा अरेऽयमात्मा'* इति श्रुतेः ।

---

[1] तकम्.

*बृह. ६-५-१४.

**दृश्यं** अनात्मस्वरूपम् । **तद्विपरीतगं** तदात्मस्वरूपं तस्माद्विपरीतत्वेन गच्छति प्राप्नोति व्यवहारभूमिमिति तथाविधं विनाशि बाध्यमित्यर्थः । अत्रेदमनुमानमपि सूचितं भवति—आत्मस्वरूपं नित्यं द्रष्टृत्वात्, यन्न नित्यं तन्न द्रष्टृ यथा घटादीति, केवलव्यतिरेकी हेतुः । तथा—अनात्मस्वरूपमनित्यं, दृश्यत्वात् यन्नानित्यं तन्न दृश्यं यथाऽऽत्मस्वरूपमिति । अयमपि केवलव्यतिरेकी हेतुः ॥ ५ ॥

**सदैव वासनात्यागश्शमोऽयमिति शब्दितः ।**
**निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते ॥ ६ ॥**

तदेवं वैराग्यकारणं विवेकं व्याख्याय वैराग्यकार्यं शमादिषट्कं लक्षयति—**सदैवे**त्यादिभिः त्रिभिः श्लोकैः । **सदैव** सर्वस्मिन्नपि काले **वासनात्यागः** पूर्वसंस्कारोपेक्षा, **अयं शम इति शब्दितः** । अन्तःकरणनिग्रहः शमशब्दार्थः । **बाह्यवृत्तीनां** श्रोत्रवागादीनां **निग्रहो** निषिद्धप्रवृत्तितिरस्कारो **दम इति** शब्देन **अभिधीयते** कथ्यते ॥ ६ ॥

**विषयेभ्यः परावृत्तिः परमोपरतिर्हि सा ।**
**सहनं सर्वदुःखानां तितिक्षा सा शुभा मता ॥ ७ ॥**

**विषयेभ्य इति** ॥ **हीति** प्रसिद्धौ । **विषयेभ्यो** बन्धकेभ्यः शब्दादिभ्यो या **परावृत्तिः** निवृत्तिः अनित्यत्वादिदोषदर्शनेन ग्रहणानिच्छा, **सोपरतिः** उच्यत इत्यर्थः । कीदृशी सेत्यत आह—**परमेति** । परमं उत्कृष्टमात्मज्ञानं यस्याः सकाशाज्जायते स परमा आत्मज्ञानसाधनभूतेत्यर्थः । अनया सर्वकर्मसंन्यासो लक्ष्यते । किंच—**सहनमिति** । सर्वदुःखानां सर्व-

दुःखसाधनानां शीतोष्णादिद्वन्द्वानां यत्सहनं प्रतीकारानिच्छा **सा शुभा** सुखरूपा **तितिक्षा मता** विदुषामित्यर्थः ॥ ७ ॥

**निगमाचार्यवाक्येषु भक्तिश्श्रद्धेति विश्रुता ।**
**चित्तैकाग्र्यं तु सल्लक्ष्ये[1] समाधानमिति स्मृतम्[2] ॥८॥**

अपिच—**निगमेति** । **निगमाचार्यवाक्येषु** वेदगुरुवचनेषु । यद्वा—उपनिषद्व्याख्यात्रुपदेशेषु **भक्तिः** भजनं विश्वास इत्यर्थः । सा **श्रद्धेति विश्रुता** वेदान्तप्रसिद्धा । **तु** पुनः **सल्लक्ष्ये**-'सदेव सोम्येदमग्र आसीत्'* इत्यादिश्रुतिलक्ष्ये प्रत्यगभिन्ने ब्रह्मणि **चित्तैकाग्र्यं** तदेकजिज्ञासेत्यर्थः, तत् **समाधानमिति स्मृतम्** ॥ ८ ॥

**संसारबन्धनिर्मुक्तिः कथं मे स्यात्कदा विधे[3] ।**
**इति या सुदृढा बुद्धिर्वक्तव्या सा मुमुक्षुता ॥ ९ ॥**

एवं शमादिषट्कमभिधायैतत्कार्यभूतां मुमुक्षुतामाह—**संसारबन्धेति** ॥ **इति या सुदृढा बुद्धिः मुमुक्षुता वक्तव्या** इत्यन्वयः । सा केत्यत आह—भो **विधे** मद्दैव! । यद्वा—सर्वकर्तर्विधातर्ब्रह्मन् **मे** मम **संसारबन्धनिर्मुक्तिः** नानायोनिसंबन्धनिवृत्तिः **कदा** कस्मिन्काले **कथं** केन प्रकारेण भवेदित्येवंरूपा **बुद्धिः मुमुक्षुता** इत्यर्थः ॥ ९ ॥

**उक्तसाधनयुक्तेन विचारः पुरुषेण हि ।**
**कर्तव्यो ज्ञानसिद्ध्यर्थमात्मनश्शुभ[4]मिच्छता ॥१०॥**

इदं साधनचतुष्टयं यदर्थमुपन्यस्तं तदिदानीं दर्शयति—**उक्तेति** ॥ उक्तानि **ब्रह्मादि** इत्यारभ्य **वक्तव्या सा मुमुक्षुता** इत्यन्तग्रन्थस-

---

[1]लक्ष्यं. [2]श्रुतम्. [3]विभो. [4]सुख. *छा. ६-२-१.

न्दर्भेण वर्णितानि यानि वैराग्यादिसाधनानि ज्ञानोपकरणानि तैः **युक्तेन पुरुषेण** अधिकारिणा देहवता मनुष्योत्तमेन। **हि** इति विद्वत्प्रसिद्धत्वेन वक्ष्यमाणलक्षणः । यद्वा—**हि** इत्यव्ययमेवार्थे अन्यनिषेधार्थ इत्यर्थः । **विचारो** विवेकः **कर्तव्यः** आवर्त्तयितव्यः । किमर्थमित्यत आह—**ज्ञानसिद्ध्यर्थमिति**। आत्मनो ज्ञानसिद्ध्यर्थं ब्रह्मात्मैक्यबोधोद्भवनाय । नन्वात्मज्ञानसिद्ध्या कः पुरुषार्थ इत्याशङ्क्य मोक्षाख्यं चतुर्थपुरुषार्थरूपं फलं द्योतयन् पुरुषार्थं विशिनष्टि—**शुभमिति** । **शुभं** परमानन्दरूपत्वेन मङ्गलं मोक्षसुखमित्यर्थः, **इच्छता** प्रार्थयता । **आत्मनः शुभं** इति वाऽन्वयः ॥ १० ॥

**नोत्पद्यते विना ज्ञानं विचारेणान्यसाधनैः ।**
**यथा पदार्थभानं हि प्रकाशेन विना क्वचित् ॥ ११ ॥**

ननु ज्ञानसिद्ध्यर्थं विचार एव कर्तव्य इति नियमः कुतः क्रियते इत्याशङ्क्य सदृष्टान्तमाह—**नोत्पद्यत** इति ॥ **विचारेण विना अन्यसाधनैः** कर्मोपासनालक्षणैः **ज्ञानं नोत्पद्यते** । तत्र दृष्टान्तमाह—**यथेति** । **यथा क्वचित्**कस्मिंश्चिद्देशे सूर्यादि**प्रकाशेन विना पदार्थभानं** घटादिवस्तुप्रकाशो न भवति । **हि** इति सर्वजनप्रसिद्धम् । अतो नियमः क्रियत इति भावः ॥११

**कोऽहं कथमिदं जातं को वा कर्ताऽस्य विद्यते ।**
**उपादानं किमस्तीह विचारस्सोयमीदृशः ॥ १२ ॥**

तर्हि स विचारः कीदृश इत्यत आह—**कोहमिति** ॥ अहं कर्ता सुखीत्यादिव्यवह्रियमाणः **कः** किंस्वरूपः? तथा—**इदं** जगत् स्थावरजङ्गमात्मकं **कथं** कस्मात् **जातं** किमधिष्ठानम्? इत्यर्थः । तथा—**अस्य** प्रत्यक्षादिप्रमाणसिद्धस्य जगतः **कर्ता**

उत्पादकः **को विद्यते**? **वा** इति विकल्पं द्योतयति । किं जीवादृष्टं कर्तृ? किं वेश्वरः? किं वाऽन्यदेव किंचित् इति विकल्पः । किंच—इह जगति उपादानं घटस्य मृद्वत् **किमस्ति**। **अयं** आत्मजगत्कारणविषयः **ईदृशः** एवंस्वरूपो **विचारः**। स एव ज्ञानसाधनमित्यर्थः ॥ १२ ॥

**नाहं भूतगणो देहो नाहं चाक्षगणस्तथा ।**
**एतद्विलक्षणः कश्चिद्विचारस्सोयमीदृशः ॥ १३ ॥**

ननु 'चैतन्यविशिष्टः कायः पुरुषः' इति बार्हस्पत्यसूत्राद्देहाकारेण परिणतानि पृथिव्यादिचत्वारि भूतान्येवात्मेति चार्वाका वदन्ति, स एव कर्ता सुखीत्यादिसर्वव्यवहारमूलमिति सर्वजनप्रसिद्धौ सत्यां आत्मविषयो विचारो न स्यादित्यत आह—**नाहमिति** ॥ **अहं** अहंशब्दप्रत्ययालम्बनः प्रत्यगात्मा **भूतगणो** यो **देहः** स **न** भवामि, तस्य घटादिवदृश्यत्वादित्यर्थः । तर्हि इन्द्रियगणस्त्वं स्याः इति चार्वाकैकदेशिमतमुत्थाप्य दूषयति—**नाहमिति** । **च** पुनः **अक्षगणः** श्रोत्रादीन्द्रियसङ्घातोप्यहं **न** भवामि । **तथा** इति पदेन देहवदिन्द्रियगणस्यापि भूतविकारत्वं दर्शितम् । 'स वा एष पुरुषोन्नरसमयः'* 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्'† इत्यादिश्रुतिरुभयत्र प्रमाणम् । ननु यदि देहद्वयं त्वं नासि, तर्हि शून्यमेव स्याः इत्याशङ्क्याह—**एतदिति** । **एतद्विलक्षणः** एताभ्यां स्थूलसूक्ष्मदेहाभ्यां विपरीतधर्मकोस्मि, 'अस्थूलमनण्वह्रस्वम्'‡ इत्यादिश्रुतेः । **कश्चिदिति** जात्यादिरहितत्वान्मनोवाचामगोचरत्वं दर्शितम् । **अयमीदृशः स विचारः** इति व्याख्यातार्थश्चतुर्थः पादः श्लोकचतुष्टयेऽपि बोद्धव्यः ॥ १३ ॥

---

*तै. २-१-१. †छा. ६-५-४. ‡बृह. ५-८-८.

**अज्ञानप्रभवं सर्वं ज्ञानेन प्रविलीयते ।**
**सङ्कल्पो विविधः कर्ता विचारस्सोयमीदृशः ॥१४॥**

तदेवं 'कोहमिति' एतन्निश्चित्येदानीं 'कथमिदं जातम्' इत्यस्य निश्चयः क्रियते । तत्र पृथिव्यादिभूतानि कार्यत्वात्स्वस्वपरमाणुभ्यो जायन्त इति तार्किकादयो मन्यन्ते । कर्मणो जायन्ते इति मीमांसकाः । प्रधानादेवेति सांख्याः । तदेतन्निराकुर्वन्नाह—**अज्ञानेति** ॥ **सर्वं** जगदिदं नामरूपात्मकं **अज्ञानप्रभवं** अज्ञानात्पूर्वोक्तस्वस्वरूपास्फुरणात्प्रभवति तथाविधम् । अत एवैतत् विरोधिना **ज्ञानेन** स्वस्वरूपस्फुरणेन तम इव प्रकाशेन **प्रविलीयते** निश्शेषलीनं भवतीत्यर्थः । 'को वा कर्ता' इत्यस्य निर्णयमाह—**सङ्कल्प इति । विविधो** नानाप्रकारः **सङ्कल्पः** इदं करिष्यामीत्यादिलक्षणोन्तःकरणपरिणामः । कारणानुकूलव्यापारवान् **कर्ता** । शेषं पूर्वोक्तम् ॥ १४ ॥

**एतयोर्यदुपादानमेकं सूक्ष्मं सदव्ययम् ।**
**यथैव मृद्घटादीनां विचारस्सोयमीदृशः ॥ १५ ॥**

अथ 'उपादानं किमस्ति' इत्यस्य निर्णयमाह—**एतयोरिति** ॥ **एतयोः** अज्ञानसङ्कल्पयोः **यदुपादानं** उत्पत्तिस्थितिनाशाय कारणं, तत्तु **सत्** कालत्रयाबाध्यं ब्रह्मैव, नान्यदित्यर्थः । अत एवाधिष्ठानज्ञाननिवर्त्याज्ञानकार्यत्वेन मिथ्याभूतमपि जगत् यावज्ज्ञानोदयं रज्जुसर्पादिवत् संसारभयव्यवहारक्षमं भवेदिति भावः । ब्रह्मणः सत्त्वे हेतुः—**अव्ययमिति । अव्ययं** अपक्षयरहितम् । अनेनैतत्पूर्वभूता अपि जन्मादिविकारा निरस्ताः, नाशश्च निरस्तः । षड्भावविकारराहित्ये हेतुः—**एकं** सजातीयादिभेदशून्यम् । तद्धि

कुतो न दृश्यते तत्राह—**सूक्ष्ममिति** । सूक्ष्मं मनोवागादीन्द्रियागोचरम्; तेषां प्रवृत्तिनिमित्तजातिक्रियादिशून्यत्वादित्यर्थः । ब्रह्मण उपादानत्वे दृष्टान्तमाह—**यथैवेति** । **यथैव मृत् घटादीनां उपादानं** तथैवेत्यर्थः । एवंप्रकारेण कार्यकारणभेदो नाममात्रमिति सूचितम् ॥ १५ ॥

**अहमेकोऽपि सूक्ष्मश्च ज्ञाता साक्षी सदव्ययः ।**
**तदहं नात्र[1] संदेहो विचारस्सोयमीदृशः ॥ १६ ॥**

ननु यद्यपि कार्यकारणभेदो वाचारम्भणमात्रः, तथाऽपि जीवब्रह्मणोर्भेदो वास्तवस्स्यादित्याशङ्क्याह—**अहमिति** ॥ अत्र 'यतः' इत्यध्याहारः, तथा चायमर्थः—यतः **अहं** अहंप्रत्ययवेद्योपि **एकः** सजातीयादिभेदशून्यः, मनुष्यमात्रेऽप्यहंबुद्धेरेकत्वप्रतीतेरित्यर्थः । **च** पुनः **सूक्ष्मः** इन्द्रियागोचरः । पुनः **ज्ञाता** अहंकारादिप्रकाशकत्वेन चेतन इत्यर्थः । तथा **साक्षी** साक्षादिन्द्रियार्थसन्निकर्षं विनैवेक्षते पश्यति प्रकाशयतीति साक्षी निर्विकार इत्यर्थः । अत एव **सदव्ययः** संश्चासावव्ययश्च विनाशापक्षयोपलक्षितसर्वविकारशून्य इत्यर्थः । यस्मादेवंभूतोऽहं, **तत्** तस्मात् **अहं** अहंप्रत्ययवेद्यः **तत्** सत्यज्ञानादिलक्षणं ब्रह्म **अत्र संदेहो** नास्तीत्यर्थः । **सोयमीदृशो विचार** इति॥१६॥

**आत्मा विनिष्कलो[2] ह्येको देहो बहुभिरावृतः ।**
**तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ १७॥**

एतदेव जीवब्रह्मैक्यमज्ञानप्रदर्शनेन द्रढयति—**आत्मेत्यादिपञ्चभिः** ॥ यतोऽहंप्रत्ययवेद्य **आत्मा,** अतति संततिभावेन जाग्रदादिसर्वावस्थास्वनुवर्तत इत्यात्मा, अवस्थात्रयभावाभावसाक्षित्वेन

[1]तत्र. [2]तु निश्चलो, तु निष्कळो.

सत्यज्ञानादिस्वरूप इत्यर्थः । स त्वंपदलक्ष्यार्थोऽपि तत्पदलक्षणार्थ एव । **विनिष्कलो** विशेषेण निर्गतकलो निरवयव इत्यर्थः । अन्यथा सावयवत्वे घटादिवद्विनाशित्वापत्तिरिति भावः । अत्र हेतुः—**एकः** । हीति 'एकमेवाद्वितीयम्'* इत्यादिश्रुतिप्रसिद्धिं द्योतयति । ननु तथा लिङ्गदेहोऽप्यस्तीति चेन्नेत्याह—**देह** इति । **देहो** लिङ्गदेहः, सूक्ष्मशरीरमिति यावत् । स **बहुभिः** कलाभिः श्रोत्रादिबुद्ध्यन्ताभिः सप्तदशभिः**आवृत** आच्छादितस्तत्सङ्घात इत्यर्थः । अत एव लिङ्गदेहस्य निरवयवत्वाद्यभावात् ज्ञानेन तत्कारणाऽज्ञाननिवृत्तौ निवृत्तिः, अन्यथाऽनिर्मोक्षप्रसङ्ग इति भावः । एवमतिवैलक्षण्ये सत्यपि **तयोः**आत्मदेहयोः प्रकाशतमसोरिव **ऐक्यं** ऐकात्म्यं **प्रपश्यन्ति** तार्किकादय इत्यर्थः । **अतो** विपरीतदर्शनात् **परं** अन्यत् **अज्ञानं किमस्ति**, एतदेवाज्ञानमित्यर्थः । विपर्ययरूपकार्यान्यथानुपपत्त्या तत्कारणं मूलाज्ञानं कल्प्यत इति भावः ॥ १७ ॥

**आत्मा नियामकश्चान्त[1] र्देहो बाह्योऽनियामकः[2] ।**
**तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ १८ ॥**

पुनर्वैलक्षण्यमाह—आत्मेति ॥ **आत्मा नियामको** नियन्ता **च** पुनः**अन्तः** पञ्चकोशान्तरः, देहस्तु **नियाम्यः** सन् **बाह्यः** । **तयोरैक्यं** इत्युत्तरार्धं व्याख्यातम् । एवमग्रेऽपि ज्ञेयम् ॥ १८ ॥

**आत्मा ज्ञानमयः पुण्यो देहो मांसमयोऽशुचिः ।**
**तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ १९ ॥**

अन्यदपि वैलक्षण्यमाह—आत्मेति ॥ **आत्मा ज्ञानमयः** प्रकाशस्वरूपोऽत एव **पुण्यः** शुद्धः । **देहस्तु** मांसादिविकार-

*छा. ६-२-१. [1]को ह्यन्त. [2]नियाम्यकः (कू)

वानत एवाशुचिः । एतेनात्मनः स्थूलदेहादपि वैलक्षण्यमुक्तं भवति । तयोरैक्यमित्यादि पूर्ववत् ॥ १९ ॥

**आत्मा प्रकाशकस्स्वच्छो देहस्तामस उच्यते ।**
**तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ २० ॥**

वैलक्षण्यान्तरमाह—आत्मेति ॥ आत्मा स्वयं प्रकाशकः सन् सूर्यादिवदन्यसर्वप्रकाशकोऽत एव स्वच्छः प्रकाश्यगुणदोषसंबन्धशून्य इत्यर्थः 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः। देहस्तु तामसो घटादिवत्प्रकाश्यत्वेन जडः । तयोरैक्यमित्यादि पूर्ववत् तत्र सर्वत्र पौनरुक्त्यं नाशङ्कनीयम्, आत्मनोऽलौकिकत्वेनात्यन्तदुर्बोधत्वादेव बहुधा वैलक्षण्यं प्रदर्श्यते परमकारुणिकैः श्रीमदाचार्यैः ॥ २० ॥

**आत्मा नित्यो हि सद्रूपो देहोऽनित्यो ह्यसन्मयः ।**
**तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ २१ ॥**

आत्मेति ॥ आत्मा नित्यो ध्वंसाप्रतियोगी । तत्र हेतुः—हि यस्मात् सद्रूपः अबाध्यस्वरूपः । देहस्तु अनित्यः ध्वंसप्रतियोगी । अत्रापि हेतुः—हि यस्मात् असन्मयो विकारित्वेन बाधयोग्य इत्यर्थः । यस्मादेवमात्मदेहयोरत्यन्तवैलक्षण्यं तस्मात्तयोरैक्यदर्शनं केवलमज्ञानमिति ॥ २१ ॥

**आत्मनस्तत्प्र[1]काशत्वं यत्पदार्थावभासनम् ।**
**नाग्न्यादिदी[2]प्तिवद्दीप्तिर्भवत्यान्ध्यं य[3]तो निशि ॥ २२**

---

[1]नः स्वप्र. [2]देदी. [3]त्यन्धय.

नन्वात्मनः प्रकाशत्वं किं नामेत्यत आह—**आत्मन** इति ॥ **आत्मनः प्रकाशत्वं** बोद्धव्यम् । किं तदित्यत आह—**यदि**ति । **यत्पदार्थावभासनं** घटपटादिवस्तुविषयप्रकाश इदंतया निर्दिश्यमानविषयदर्शनमिति यावत् । तर्ह्यग्न्यादिप्रकाशवद्विकारित्वं स्यादित्यत आह—**नाग्न्यादिदीप्तिवद्दीप्ति**रिति । इयमात्मदीप्तिरग्न्यादिर्दीप्तिवन्न कदाचिदुत्पत्तिविनाशादिविकारवतीत्यर्थः । तत्र हेतुमाह—**भवतीति** । **भवत्यान्ध्यं यतो निशि** यतः कारणान्निशि रात्रावग्न्यादिप्रकाश एकस्मिन्देशे सत्यपि तदन्यत्र लोकस्यान्ध्यं रूपग्रहाक्षमत्वं भवति । नैतादृश्यात्मदीप्तिरेकत्र विद्यमाना चैकत्राविद्यमाना परिछिन्ना चास्ति । किं तु दीपादिरूपस्याग्न्यादिप्रकाशस्य प्रकाशिका तदभावे चान्धकारस्य प्रकाशिका उत्पत्तिनाशरहिता च सदा सर्वत्र पूर्णैवास्ति । यद्वा—इयमात्मदीप्तिरग्न्यादिदीप्तिसदृशी न। कुतः? यतः कारणान्निशि रात्रावान्ध्यमन्धकारो भवति, अतस्तद्विलक्षणाऽऽत्मदीप्तिर्ज्ञेया । यद्यात्मदीप्तिरग्न्यादिदीप्तिसदृशी भवेत्तर्ह्यग्न्यादिदीप्त्या यथाऽन्धकारस्य नाशो भवति तथा आत्मदीप्त्याऽप्यन्धकारस्य नाशः स्यात् । परं त्वात्मनः सत्ताप्रकाशाभ्यां सवत्र सर्वदा विद्यमानत्वेऽप्यन्धकारस्य नाशो न भवति । अत आत्मदीप्तिरग्न्यादिदीप्तिसदृशी न, किंतु इयमग्न्यादिदीप्तिर्भाति, इदमान्ध्यं भातीत्याद्याकारेणाऽग्न्यादिदीप्तेरान्ध्यस्य चान्यस्य सर्वस्य च प्रकाशिका चाविरोधिन्यात्मदीप्तिः स्वप्रकाशैवाभ्युपेतव्या सर्वैरात्मज्ञानारूढैरित्यर्थः । तस्माद्ग्न्यादिदीप्तीनामपि दीपिका अन्यसाधननिरपेक्षा या दीप्तिः स आत्मप्रकाश इति भावः ॥ २२ ॥

**देहोहमित्ययं मूढः कृत्वा तिष्ठत्यहो जनः ।**
**ममायमित्यपि ज्ञात्वा घटद्रष्टेव सर्वदा ॥ २३ ॥**

तदेवं प्रकाश्यप्रकाशकत्वादिलक्षणवैलक्षण्ये सत्यपि आत्मानात्माभेददर्शनमुपसंहरन्नुभयोर्भेदं स्पष्टयति—देह इति ॥ **अहं** अहंशब्दप्रत्ययालम्बनः प्रत्यगात्मा **अयं** इदंतया निर्दिश्यमानो घटादिवत्प्रत्यक्षतया दृश्यमानो **देहोऽस्मीति** उभयोर्द्रष्टृदृश्ययोरैक्यं कृत्वा **मूढः** स्वाज्ञानकार्यविपर्ययमोहव्याप्तो **जनस्तिष्ठति** कृतकृत्यबुद्ध्या निर्व्यापारो भवतीत्यर्थः । एतत् **अहो** महदज्ञानमिति भावः । किं कृत्वाऽपीत्यत आह—**ममेति** । **मम** मत्सबन्धी **अयं** देह **इति** सामान्यतो भेदं **ज्ञात्वापि,** अत एवाश्चर्यमिति तात्पर्यम् । क इव? **सर्वदा घटद्रष्टेव** यथा सर्वकाले घटद्रष्टा पुरुषो ममायं घट इति जानाति, न त्वहं घट इति कदाचिदपि जानातीत्यर्थः ॥ २३ ॥

**ब्रह्मैवाहं समश्शान्तस्सच्चिदानन्दलक्षणः[1] ।**
**नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २४ ॥**

नन्वतस्मिंस्तद्बुद्धिरितिलक्षणभ्रमापरपर्यायमोहकार्यलिङ्गानुमेयमज्ञानमीदृक्, तर्हि तन्निवर्तकं किमित्याकाङ्क्षायां तद्विरोधित्वादात्मज्ञानमेवात्माज्ञाननिवर्तकमित्याभिप्रेत्य तल्लक्षणमाह—**ब्रह्मे**त्यादिपञ्चभिः ॥ **अहं** अहंशब्दप्रत्ययालम्बनः प्रत्यगात्मा **ब्रह्मैवा**स्मि । एतयोस्तत्त्वंपदार्थयोरैक्ये हेतुगर्भितानि विशेषणान्याह—**सम** इति । **समः** सत्ताप्रकाशाभ्यां सर्वाभिन्नः । पुनः किंलक्षणः—**शान्तः** निरस्तसमस्तोपाधित्वाद्विक्षेपादिविकारशून्यः । पुनः किंलक्षणः—**सच्चिदानन्दलक्षणः** सच्चिदानन्दैरनृतजडदुःखप्रातियोगिभिर्लक्ष्यते विरुद्धांशत्यागरूपया भागलक्षणया ज्ञायत इति सच्चिदानन्दलक्षणः, ब्रह्मबोधे हि द्विविधं द्वारं विधिर्निषेधश्चेति । तत्र सत्यज्ञानादिसा-

---

[1] मं शान्तं...णम्.

क्षाद्वाचकशब्दप्रयोगलक्षणो विधिरुक्तः । इदानीमतन्निरसनलक्षणो निषेधः प्रदर्श्यते—**नाहमिति** । अहमहंशब्दप्रत्ययालम्बन आत्मा देहो नेत्यन्वयः । देह इत्युपलक्षणं प्राणेन्द्रियादीनामपि । हीति विद्वज्जनप्रसिद्धम् । देहादेरनात्मत्वे हेतुमाह—असदिति । **असद्रूपः** असत् बाध्यमनृतं तादृग्रूपं स्वरूपं यस्य स तथाविधः । इत्येवंप्रकारमहं ब्रह्मास्मीत्यादिमहावाक्यजन्याखण्डाकारबुद्धिरूपं ज्ञानं बुधैरात्मतत्त्वज्ञैरुच्यते कथ्यत इत्यर्थः । एतद्विलक्षणः सर्वो ज्ञानाभास इति भावः ॥ २४ ॥

**निर्विकारो निराकारो निरवद्योहमव्ययः ।**
**नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २५ ॥**

नन्वहं जातो मृतः सुखी दुःखीत्याद्यनेकविकारवत्त्वेनाहंशब्दप्रत्ययालम्बनस्य प्रतीयमानत्वात् कथं तस्य ब्रह्मत्वमित्यत आह—**निर्विकार** इति ॥ अहं अहंशब्दप्रत्ययालम्बनः प्रत्यगात्मा **निर्विकारो**स्मीति शेषः । निर्गता विकारा जन्मादयो यस्मात् स तथाविधः, तेषां देहधर्मत्वादिति भावः । तत्र हेतुः—**निराकारः** देहाद्याकाररहितः । अत एव **निरवद्यो** वातापित्तादिजन्याध्यात्मिकादितापत्रयरहित इत्यर्थः । अत एव **अव्ययः** अपक्षयादिरहित इत्यर्थः । अहं मनुष्य इत्यादिप्रतीतिः कथं निर्विकारत्वमिति चेत्, सा प्रतीतिः शुक्तिरजतादिवद्बाध्यत्वाद्भ्रान्तिरित्याह—**नाहमिति** । नाहमित्युत्तरार्धं व्याख्यातं पूर्वश्लोके । एवमुत्तरत्रापि ज्ञेयम् । पुनरुक्तिस्तु ज्ञानप्रतिबन्धकस्य बुद्धिमान्द्यविपर्ययादेर्दार्ढ्यान्नाशङ्कनीया ॥ २५ ॥

**निरामयो निराभासो निर्विकल्पोहमाततः ।**
**नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २६ ॥**

पुनः किंलक्षणं ज्ञानमित्यत आह—**निरामय** इति ॥ **अहं निरामयः** सर्वरोगरहितः। **निराभासो** वृत्तिव्याप्यत्वेऽपि फलव्याप्यत्वशून्यः। **निर्विकल्पः** कल्पनाहीनः। **आततश्च** व्यापकः ॥२६॥

**निर्गुणो निष्क्रियो नित्यो नित्यमुक्तोहमच्युतः।**
**नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २७ ॥**

पुनः किंलक्षणं ज्ञानमित्यत आह—**निर्गुण** इति ॥ **अहं निर्गुणो** गुणरहितः, गुणानां मायामयत्वादित्यर्थः। अत एव **निष्क्रियः** क्रियारहितः। तथा—**नित्यो** विनाशरहितः। अत एव **नित्यमुक्तः** कालत्रयेऽपि बन्धशून्यः। तत्र हेतुः—**अच्युतः** अप्रच्युतः सच्चिदानन्दस्वभावः ॥ २७ ॥

**निर्मलो निश्चलोऽनन्तश्शुद्धोऽहमजरोऽमरः[1]।**
**नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २८ ॥**

पुनरपि ज्ञानलक्षणमाह—**निर्मल** इति ॥ **अहं निर्मलः** अविद्यातत्कार्यलक्षणमलरहितः। अत एव **निश्चलः** व्यापकत्वादाकाशवन्निश्चल इत्यर्थः। निश्चलत्वे हेतुः—**अनन्तः** देशकालवस्तुपरिच्छेदशून्यः। **शुद्धः** अशुद्धिरहितः। पुनरजरः जरारहितः। **अमरो** मरणरहितश्च। सर्वधर्माणां देहत्रयवर्तित्वादिति भावः ॥ २८ ॥

**स्वदेहे शोभनं सन्तं[2] पुरुषाख्यं च संमतम्।**
**किं मूर्ख शून्यमात्मानं देहातीतं करोषि भो॥२९॥**

---

[1]रामरः. [2]त्यक्त्वा.

नन्वात्मा प्रत्यक्षदेहरूपो न भवति । तर्हि शून्यत्वमात्मनः स्यादित्याशङ्क्याह—**स्वदेहे** इति ॥ **भो** हे **मूर्ख** शून्यवादिन्! **स्वदेहे पुरुषाख्यं** पुरि मनुष्यशरीरे उषति अहमाकारेण वसतीति पुरुष इत्याख्या नाम यस्य तम् । अत एव **शोभनं** मङ्गलं शरीरविलक्षणत्वादतिमङ्गलम् । तथा **संमतं** 'अयमात्मा ब्रह्म'* इत्यादिवाक्यनिर्णीतम् । **चकारात्** 'उत्तमः पुरुषस्त्वन्यः'† इत्यादिस्मृतिनिर्णीतम् । घटद्रष्टृवद्देहद्रष्टृत्वेन **देहातीतमात्मानं** सततं भावं **सन्तं** सर्वव्यवहाराधिष्ठानं **शून्यं** खपुष्पादिवत् अत्यन्ताभावरूपं **किं करोषि** कथं मन्यसे? मा मन्यथा इति भावः ॥ क्वचित् स्वदेहं इति द्वितीयान्तः पाठः । तस्मिन् पक्षे देहात्मवाद्येव वदति उक्तलक्षणं मनुष्यदेहं त्यक्त्वा । समानमन्यत् ॥ २९ ॥

**स्वात्मानं शृणु मूर्ख त्वं श्रुत्या युक्त्या च पूरुषम् ।**
**देहातीतं सदाकारं[1] सुदुर्दर्शं भवादृशैः ॥ ३० ॥**

ननु शून्यवादिन एवाभावापत्तेः शून्यं माऽस्तु, परं त्वात्मनो देहातीतत्वे प्रमाणाभावाद्देह एवात्मा स्यादित्याशङ्क्याह—**स्वात्मानमिति** ॥ भो **मूर्ख**! देहात्मवादिन् चार्वाक! **त्वं स्वात्मानं** स्वकीयमात्मानं **पुरुषं देहातीतं** देहातिरिक्तं **श्रुत्या** 'तस्माद्वा एतस्मादन्नरसमयात् । अन्योन्तर आत्मा'‡ इत्यादिकया पुनर्युक्त्या **च** एकस्मिन्कर्तृकर्मविरोध इत्यादिरूपया **शृणु** अवधारय । देहातीतत्वे किमाकार आत्मेत्यत आह—**सदाकारमिति** । **सदाकारं** अस्तीत्येतन्मात्रव्यवहारकारणभूत आकारो यस्य तम् । एवंविधो-

---

*बृह. ४-५-१९. †भगव. १५-१७.
[1]निराकारं. ‡ तै. उ. २-२.

स्तिचेत्कुतो न दृश्यत इत्यत आह—**सुदुर्दर्शमिति** । **भवादृशैः** श्रुत्याचार्यश्रद्धाशून्यैः **सुदुर्दर्शं** सर्वथा दर्शनायोग्यं, तस्य द्रष्टृरूपत्वादेवेत्यर्थः ॥ यद्वा—पूर्वश्लोकोक्तद्वितीयापेक्षया देहात्मवादिनः समाधानार्थोऽयं श्लोकः—**स्वात्मानमिति** ॥ ३० ॥

**अहंशब्देन विख्यात एक एव स्थितः परः ।**
**स्थूलस्त्वनेकतां प्राप्तः कथं स्याद्देहकः पुमान्॥३१**

तदेवाह—अहमित्यादिसप्तभिः ॥ **परः** देहादन्य आत्मा **अहंशब्देन** । शब्दइत्युपलक्षणं प्रत्ययस्यापि । **विख्यातः** प्रसिद्धः । किंलक्षण इत्यत आह—**एक** इति । **एक एव स्थितः** । एवेति प्रत्येकमवधारणम् । तुशब्दः पूर्वोक्तादात्मनः स्थूलदेहस्य वैलक्षण्यद्योतकः । **स्थूलो देहकः** देह एव देहकः, स्वार्थे कप्रत्ययः, **कथं पुमान्** पुरुषः आत्मा स्यात् न कथंचिदित्यर्थः । देहस्यानात्मत्वे हेतुमाह—**अनेकतामिति** । **अनेकतां** परस्परं भिन्नतां **प्राप्तः**। एवं तमःप्रकाशवदतिविलक्षणत्वेऽपि देहस्यात्मत्वं ब्रुवन्नतिमूढत्वादुपेक्ष्य इति भावः ॥ ३१ ॥

**अहं द्रष्टृतया सिद्धो देहो दृश्यतया स्थितः ।**
**ममायमिति निर्देशात्कथं स्याद्देहकः पुमान्॥३२॥**

तदेवातिवैलक्षण्यं दर्शयति—**अहमिति** ॥ **अहं** अहंशब्दप्रत्ययालम्बन आत्मा **द्रष्टृतया** शब्दादिविषयप्रकाशकतया **सिद्धः** शब्दं शृणोमीत्यादिव्यवहारेण प्रसिद्धः । **देहस्तु दृश्यतया** शब्दादिवत्प्रकाश्यतया **स्थितः** । तत्र हेतुमाह—**ममेति** । ममायं देह इति घटादिवत्स्वीयसंबन्धितया **निर्देशात्** व्यवहारात् । एव-

मुभयोर्वैलक्षण्ये सति **कथं देहकः पुमान्** स्यादिति व्याख्या-तार्थश्चतुर्थपादः । एवमग्रेऽपि बोद्धव्यम् ॥ ३२ ॥

**अहं विकारहीनस्तु देहो नित्यं विकारवान् ।**
**इति प्रतीयते साक्षात्कथं स्याद्देहकः पुमान् ॥३३॥**

पुनर्वैलक्षण्यान्तरमाह—**अहमिति** ॥ **अहं** व्याख्यातार्थः । **विकारहीनः** जायतेऽस्तीत्यादिषड्विकारहीनः । **तु** वैलक्षण्ये । **देहो नित्यं** सर्वकालं **विकारवान्** । अत्र किं प्रमाणमत आह—**इतीति** । **इति साक्षात्** प्रत्यक्षप्रमाणेन **प्रतीयते** अनुभूयते । एवं सति कथं **स्याद्देहकः पुमानिति** ॥ ३३ ॥

**यस्मात्परमिति श्रुत्या तया पुरुषलक्षणम् ।**
**विनिर्णीतं विमूढेन कथं स्याद्देहकः पुमान् ॥३४॥**

एवं युक्त्या देहात्मनोर्वैलक्षण्यमुक्त्वा श्रुत्याऽप्याह—**यस्मादिति** ॥

यस्मात्परं नापरमस्तिकिंचिद्यस्मान्नाणीयो न ज्यायोस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥*

इति **तया** प्रसिद्धया तैत्तिरीयश्रुत्या कृत्वेति करणे तृतीया । **पुरुषस्य** आत्मनो **लक्षणं विमूढेन** विगतमूढभावेनातिचतुरेण श्रु-त्यर्थविवेचनकुशलेनेत्यर्थः । इयं कर्त्तरि तृतीया । **विनिर्णीतं** विचार्य स्थापितम् । अन्यत्पूर्ववत् । यद्वा—**श्रुत्येति** कर्तृपदम्, अस्मिन् पक्षे **विमूढेन**! इति देहात्मवादिनं प्रति संबोधनं, वि-

---

*याज्ञिक्यु. १२.

मूढानां इन! स्वामिन्! मूर्खशिरोमणित्वादेव श्रुतिं नाद्रियस इति भावः ॥ ३४ ॥

**सर्वं पुरुष एवेति सूक्ते पुरुषसंज्ञिते[1] ।**
**अप्युच्यते यतश्श्रुत्या कथं स्याद्देहकः पुमान् ॥३५**

न केवलमनयैकया श्रुत्या विनिर्णीतं, किं त्वन्ययाऽपीत्याह— **सर्वमिति** ॥ **यतो** हेतोः **श्रुत्या** वेदाख्यपरदेवतया 'पुरुष एवेदं सर्वम्'* इति पुरुषसंज्ञिते सूक्तेऽप्युच्यते **पुरुषलक्षणमिति** पूर्वश्लोकादध्याहारः । अतः **कथं स्यादिति** पूर्ववत् ॥ ३५ ॥

**असङ्गः पुरुषः प्रोक्तो बृहदारण्यकेऽपि च ।**
**अनन्तमलसंश्लिष्टः कथं स्याद्देहकः पुमान् ॥३६॥**

अपरयाऽपि श्रुत्यैवमेव निर्णीतमित्याह—**असङ्ग इति** ॥ 'असङ्गो ह्ययं पुरुषः'† इति श्रुत्या **बृहदारण्यके** वाजसेनयोपनिषदि **पुरुषः असङ्गः प्रोक्तः** । **देहकस्त्वसन्तमलसंश्लिष्टः कथं पुमान्स्यादिति** ॥ ३६ ॥

**तत्रैव च समाख्यातस्स्वयंज्योतिर्हि पूरुषः ।**
**जडः परप्रकाश्योसौ[2] कथं स्याद्देहकः पुमान् ॥३७॥**

तत्रैवान्यप्रकारेणापि देहात्मनोर्वैलक्षण्यं निरूपितमित्याह— **तत्रैवेति** ॥ **तत्रैव** बृहदारण्यक एवेत्यर्थः । 'अत्रायं पुरुषः स्वयंज्योतिर्भवति '‡ इति श्रुत्या **स्वयंज्योतिः पुरुषः समाख्यातः** ।

---

[1] ज्ञिके. [2] श्योयं.

* तै. आ. ३-१२. † बृह. ६-३-१५. ‡ बृह. ६-३-९.

हीति विद्वत्प्रसिद्धिं द्योतयति । **असौ** घटादीव **दृश्योऽत एव परप्रकाश्यः** । तत एव **जडो देहकः कथं पुमान् स्यादिति** व्याख्यातम् ॥ ३७ ॥

**प्रोक्तोऽपि कर्मकाण्डेन ह्यात्मा देहाद्विलक्षणः ।**
**नित्यश्च तत्फलं भुङ्क्ते देहपातादनन्तरम् ॥ ३८ ॥**

अथास्तामिदं ज्ञानकाण्डं, कर्मकाण्डेऽपि देहात्मनोर्भेद एव निर्णीत इत्याह—**प्रोक्त इति** ॥ हि यस्मात् **कर्मकाण्डेनापि** 'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादिरूपेण कर्मप्रतिपादकेन वेदभागेनेत्यर्थः । **आत्मा देहाद्विलक्षणः प्रोक्तः** । कथमित्यत आह—**नित्य इति** । नित्यत्वं च कुत इत्यत आह—**तदिति** । **देहपातादनन्तरं तत्फलं** अनित्यं कर्मफलं यतः आत्मा **भुङ्क्ते** अतो नित्य इत्यर्थः । **चकारात्** न्यायसांख्यादावप्येवमेव देहात्मनोर्भेदो वर्णित इति दर्शितम् ॥ ३८ ॥

**लिङ्गं चानेकसंयुक्तं चलं दृश्यं विकारि च ।**
**अव्यापकमसद्रूपं तत्कथं स्यात्पुमानयम् ॥ ३९ ॥**

नन्वेवं सति वेदान्तिनामपसिद्धान्तः स्यादित्यत आह—**लिङ्गमिति** ॥ **लिङ्गं** लिङ्गशरीरं **तत्** परोक्षादिधर्मविशिष्टं **अयं** नित्यापरोक्षस्वभावः **पुमान् कथं स्यात्** न कथंचिदित्यर्थः । **चकारा**त्कारणशरीरमपि निराकृतम् । अनयोरपि भेदे लिङ्गदेहस्य वैलक्षण्यसूचकानि विशेषणान्याह—**अनेकेति** । **अनेकसंयुक्तं** देवमनुष्यादिनानास्थूलशरीरसंबन्धयुक्तम् । यद्वा—श्रोत्रादिबुद्ध्यन्तसप्तदशकलासंयुक्तं, तथा—**चलं** चञ्चलं; मनःप्रधानत्वा-

दित्यर्थः । पुनः—**दृश्यं** ममेदं श्रोत्रं ममेदं मन इत्यादिममताऽऽस्पदत्वेनात्मन उपसर्जनभूतं, **च** पुनः—**विकारि** उपचयादिमत्, **अव्यापकं** परिच्छिन्नं **असद्रूपं** आत्मज्ञानैकबाध्यं च । अत्रेदमाकूतं—यद्यपि लिङ्गशरीराध्यासेनात्मनः कर्तृत्वभोक्तृत्वादिभावः, तथाऽप्यात्मनः स्वतस्तदभावज्ञानेनाऽध्यासनिवृत्तावकर्तृत्वाभोक्तृत्वादिभावसिद्धिरिति वेदान्तिनां न किंचिदपसिद्धांन्तोन्यवदिति मङ्गलम् ॥ ३९ ॥

**एवं देहद्वयादन्य आत्मा पुरुष ईश्वरः ।**
**सर्वात्मा सर्वरूपश्च सर्वातीतोऽहमव्ययः ॥ ४० ॥**

इदानीं पूर्वोक्तमर्थमुपसंहरति—**एवमिति** ॥ **एवं** पूर्वोक्तप्रकारेण **देहद्वयात्** स्थूलसूक्ष्मलक्षणात् **अन्यो** भिन्न **आत्मा** । कोसावित्यत आह—**पुरुष** इति । **पुरुषः** शरीराधिष्ठाता । तर्हि किं जीवः? नेत्याह—**ईश्वर** इति । तत्र हेतुः—**सर्वात्मेति** । तर्ह्यद्वैतहानिः स्यादित्यत आह—**सर्वरूप इति** । एवं सति विकारित्वं स्यादित्यत आह—**सर्वातीत इति** । एतादृश आत्मा चेदस्ति तर्हि कुतो नोपलभ्यत इत्यत आह—**अहमिति** । **अहं** प्रत्यक्षः अहंशब्दप्रत्ययालम्बनत्वेन सर्वदोपलब्धिस्वरूप इत्यर्थः । तर्ह्यहंकारः स्यान्नेत्याह—**अव्यय** इति । **अव्ययः** अपक्षयादिविकारशून्यः अहंकारसाक्षीति भावः ॥ ४० ॥

**इत्यात्मदेहभागेन प्रपञ्चस्यैव सत्यता ।**
**यथोक्ता तर्कशास्त्रेण ततः किंपुरुषार्थता ॥ ४१ ॥**

अथेदानीमात्मनो देहद्वयातिरिक्तत्वप्रतिपादनमनर्थकमिति शङ्कते—**इतीति** ॥ इति पूर्वोक्तप्रकारेण वर्णितेन **आत्मदेहविभागेन**

**प्रपञ्चस्यैव सत्यता** तथा **उक्ता** । **यथा तर्कशास्त्रेण ततः** प्रपञ्चसत्यत्वप्रतिपादनात् **किंपुरुषार्थता** कुत्सितपुरुषार्थत्वं भयनिवृत्त्यभावादित्यर्थः । ‘ द्वितीयाद्वै भयं भवति ’* इति श्रुतेः ॥४१॥

**इत्यात्मदेहभेदेन देहात्मत्वं निवारितम्[1] ।**
**इदानीं देहभेदस्य ह्यसत्त्वं स्फुटमुच्यते ॥ ४२ ॥**

भेदज्ञानस्याभेदज्ञानं प्रति कारणत्वादात्मदेहविभागकथनं नानर्थकमित्याह—**इतीति** ॥ इति पूर्वोक्तेन **आत्मदेहभेदेन** आत्मनो देहात्पृथक्करणेन **देहस्यैव** प्राप्तं चार्वाकमतेन **आत्मत्वं** तत् **निवारितम्** । **इदानीं** उत्तरग्रन्थेन तस्य **देहभेदस्य असत्त्वं** आत्मसत्तातिरिक्तसत्ताराहित्यं **स्फुटं** स्पष्टं यथा स्यात्तथा—**हीति** प्रसिद्धं—**उच्यते** ॥ ४२ ॥

**चैतन्यस्यैकरूपत्वाद्भेदो युक्तो न कर्हि चित् ।**
**जीवत्वं च मृषा ज्ञेयं रज्जौ सर्पग्रहो यथा ॥४३॥**

तदेवाह—**चैतन्यस्येति** ॥ **चैतन्यस्य** सर्वभूतभौतिकप्रपञ्चाधिष्ठानप्रकाशस्य घटः प्रकाशते पटः प्रकाशते इत्यादिषु **एकरूपत्वात्** एकाकारत्वाद्धेतोः **कर्हि चित्** कस्यां चिदवस्थायामपि **भेदो न युक्तो** न यथार्थ इत्यर्थः । तर्हि जीवभेदः सत्यः स्यादित्यत आह—**जीवत्वमिति** । **जीवत्वं** चकारोप्यर्थः । **मृषा** मिथ्या **ज्ञेयं**; तदुपाधेरेवान्तःकरणादेर्मायामयत्वादित्यर्थः । अधिष्ठानसत्यत्वेन कल्पितस्य मिथ्यात्वबोधे दृष्टान्तमाह—**रज्जाविति** । **यथा रज्जौ** तदज्ञानात् वक्रतादिसादृश्येन मन्दान्धकारे **सर्पग्रहः**

---

*बृह. ३-४-२.

[1]निराकृतम्.

सर्पबुद्धिरव्युत्पन्नस्य भवति, न तु व्युत्पन्नस्य, तथैवात्मन्यात्मत्वाज्ञानात् प्रकाशसादृश्यादविशेषप्रकाशोऽचिज्जडग्रन्थिरूपचिदाभासभ्रमो भवत्यविवेकिनां, न तु विवेकिनामिति वेदान्तसिद्धान्तरहस्यम् ॥ ४३ ॥

**रज्ज्वज्ञानात् क्षणेनैव यद्वद्रज्जुर्हि सर्पिणी ।**
**भाति तद्वच्चितिस्साक्षाद्विश्वाकारेण केवला[1] ॥४४॥**

इदानीं पूर्वोक्तमेव दृष्टान्तं विवृण्वन् सर्वस्यापि प्रपञ्चस्य ब्रह्मरूपतामाह—**रज्ज्वति** ॥ **केवला** इति विशेषणेन पूर्वावस्थामपरित्यज्यावस्थान्तरप्राप्तिलक्षणविवर्तोपादानत्वमेवोक्तं, नारम्भोपादानत्वं, नापि परिणामोपादानत्वमिति बोध्यम् । अन्यत् स्पष्टम् ॥ ४४ ॥

**उपादानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते ।**
**तस्मात्सर्वप्रपञ्चोऽयं ब्रह्मैवास्ति न चेतरत्॥ ४५ ॥**

अत्र हेतुं दर्शयन् पूर्वोक्तमुपसंहरति—**उपादानमिति** ॥ यस्मात् **प्रपञ्चस्य** आकाशादिदेहान्तस्य जगद्विस्तारस्य **ब्रह्मणो** मायाशबलाच्चैतन्यात् **अन्यत्** परमाणवो यद्वा प्रकृतिः **उपादानं** कारणविशेषो **न विद्यते** इति । 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः'* इत्यादिश्रुतेः । **तस्मात्** हेतोरिति । स्पष्टमन्यत् ॥ ४५ ॥

**व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् ।**
**इति ज्ञाते परे तत्त्वे भेदस्यावसरः कुतः ॥ ४६ ॥**

---

1 केवलं. *तै. उ. २-१.

ननु व्याप्यव्यापकतारूपे भेदे जाग्रति सति कथं प्रपञ्चस्य ब्रह्मतेत्याशङ्क्याह—**व्याप्येति** ॥ **व्याप्यं** आन्तरं **व्यापकं** बाह्यं तयोर्भावो **मिथ्या** घटाकाशादिवत् कल्पितत्वादसन्नित्यर्थः । तत्र प्रमाणमाह—**सर्वमिति** । 'इदं ब्रह्मेदं क्षत्रम्' इति प्रकृत्य 'इदं सर्वं यदयमात्मा'* इत्यादिश्रुतिरूपेश्वराज्ञावलादित्यर्थः । ततः किमत आह—**इतीति** । **इति ज्ञाते** इत्यादि सुगमम् ॥४६॥

**श्रुत्या निवारितं नूनं नानात्वं स्वमुखेन हि ।**
**कथं भासो[1] भवेदन्यः स्थिते चाद्वयकारणे[2] ॥४७॥**

ननु प्रत्यक्षेण भासमानो व्याप्यव्यापकभावः कथं मिथ्येत्याशङ्क्याह—**श्रुत्येति** ॥ **नूनमिति** निश्चये । **हीति** प्रसिद्धौ । **श्रुत्या** 'नेह नानास्ति किंचन'† इत्यादिरूपयेत्यर्थः । **नानात्वं निवारितं**, तेन च नानात्वनिवारणेन **अद्वयकारणे** अभिन्ननिमित्तोपादाने ब्रह्मणि **स्थिते** सति **भासो** व्याप्यव्यापकतादिप्रतिभासः कार्यभूतः **अन्यः** स्वकारणातिरिक्तः **कथं भवेत्** न कथंचिदित्यर्थः ॥ ४७ ॥

**दोषोऽपि विहितश्श्रुत्या मृत्योर्मृत्युं स गच्छति ।**
**इह पश्यति नानात्वं मायया वञ्चितो नरः ॥४८॥**

किंच भेददृष्टेर्दोषश्रवणादपि कारणादभिन्नमेव कार्यमित्याह—**दोष इति** ॥

मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ।†

इत्यादिरूपया श्रुत्येत्यर्थः । तत्र **मृत्योः** अनन्तरं **मृत्युं** जननमरणपरम्परामित्यर्थः । स्पष्टमन्यत् ॥ ४८ ॥

---

[1]भेदो. [2]स्थितेनाद्वयकारिणा. *बृह. ४-४-६. †कठ. ४-११.

**ब्रह्मणस्सर्वभूतानि जायन्ते परमात्मनः ।**
**तस्मादेतानि ब्रह्मैव भवन्तीत्यवधारयेत् ॥ ४९ ॥**

तर्हि किं कुर्यादित्यत आह—**ब्रह्मण** इति ॥ बृहत्त्वादपरिच्छिन्नत्वाद्ब्रह्म, तद्रूपात्परमात्मनः **सर्वाणि भूतानि जायन्ते** उत्पद्यन्ते । जायन्त इति स्थितिप्रलययोरप्युपलक्षणं, 'यतो वा इमानि भूतानि जायन्ते'* इत्यादिश्रुतेः । यस्मादेवं **तस्मात्** हेतोः **एतानि** भूतानि **ब्रह्मैव भवन्ति** सन्मात्रब्रह्मरूपाणीति **अवधारयेत्** निश्चिनुयादिति ॥ ४९ ॥

**ब्रह्मैव सर्वनामानि रूपाणि विविधानि च ।**
**कर्माण्यपि समग्राणि बिभर्तीति श्रुतिर्जगौ ॥५०॥**

ननु नानानामरूपकर्मभेदेन विचित्राणि भूतानि कथं ब्रह्मात्मकानीत्याशङ्क्याह—**ब्रह्मैवेति** ॥ 'त्रयं वा इदं नाम रूपं कर्म'† इति बृहदारण्यकी **श्रुतिर्जगौ** गायनं कृतवती स्वाधिकारिणः श्रावयामासेत्यर्थः । किमित्यत आह—**ब्रह्मैव सर्वनामानि** आकाशादिदेहान्तान् संज्ञाविशेषान्, **च** पुनः **विविधानि रूपाणि** आकाशादिद्विपदान्तान् नानाविकारविशेषान् । **अपि**शब्दश्चार्थे । रूपग्रहणं गन्धादिग्रहणस्याप्युपलक्षणम् । **समग्राणि कर्माणि** अवकाशप्रदानादीनि स्नानशौचादीन् क्रियाविशेषानपि **बिभर्ति** रज्ज्वादिकमिव सर्पादिप्रतिभासं दधात्यधिष्ठानदर्शनशून्यान् प्रति दर्शयतीत्यर्थः ॥ ५० ॥

**सुवर्णाज्जायमानस्य सुवर्णत्वं च शाश्वतम् ।**
**ब्रह्मणो जायमानस्य ब्रह्मत्वं च तथा भवेत् ॥५१॥**

---

*तै. उ. ३-१.

†बृह. ३-६-१.

अत्र लोकप्रसिद्धं दृष्टान्तमाह—**सुवर्णेति** ॥ सुगमम् ॥५१॥

**स्वल्पमप्यन्तरं कृत्वा जीवात्मपरमात्मनोः ।**
**यस्संतिष्ठति मूढात्मा भयं तस्याभिभाषितम् ॥५२॥**

एवं कर्तृकर्मादिकारकषट्कस्यैकाधिष्ठानरूपत्वे सिद्धेऽपि भेददर्शिनो भयमाह—**स्वल्पेति** ॥ **स्वल्पमप्यन्तरं** उपास्योपासकरूपं भेदं **कृत्वा** कल्पयित्वा **यस्संतिष्ठति तस्य भयं भाषितं**, 'यदा ह्येवैष एतास्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति'* इत्यादिश्रुत्येत्यर्थः ॥ ५२ ॥

**यत्रा[1]ज्ञानाद्भवेद्द्वैतमितरस्तत्र पश्यति ।**
**आत्मत्वेन यदा सर्वं नेतरस्तत्र चाण्वपि ॥ ५३ ॥**

ननु प्रकाशतमसोरिव परस्परविरुद्धस्वभावयोर्द्वैताद्वैतयोः कुत एकाधिकरणत्वमित्याशङ्क्यावस्थाभेदादित्याह—**यत्रेति** ॥ **यत्र** यस्यामज्ञानावस्थायां **अज्ञानेन द्वैतं** इव **भवेत् तत्र** तस्यामज्ञानावस्थायां **इतरः** अन्योऽन्यत् पश्यति 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरं शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति' इति† । 'यत्र वाऽन्यदिव स्यात्तत्रान्योन्यत्पश्येदन्योन्यज्जिघ्रेदन्योऽन्यद्रसयेत्'† इत्यादिश्रुतेः । चशब्दः पूर्वोक्ताद्वैलक्षण्यं सूचयति । **यदा** यस्मिन् ज्ञानकाले **सर्वमात्मत्वेन** भवेत् **तत्र** तस्मिन् ज्ञानकाले **इतरोण्वपि** किंचिदप्यन्यन्न पश्यति । 'यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्'† इत्यादिश्रुतेः । सकार्याज्ञाननिवृत्त्या न द्वैतमिति भावः ॥ ५३ ॥

---

*तै. उ. २-७. [1]यदा. †बृह. ४-४-१४, ६-३-३१.

**यस्मिन्सर्वाणि भूतानि ह्यात्मत्वेन विजानतः[1] ।**
**न वै तस्य भवेन्मोहो न च शोकोऽद्वितीयतः ॥५४**

ननु द्वैतादर्शने कः पुरुषार्थ इत्याशङ्क्य तत्प्रतिपादिकां

यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥*

इति श्रुतिमर्थतः पठति—यस्मिन्निति ॥ **यस्मिन्** अवस्था-विशेषे **सर्वाणि भूतानि आत्मत्वेन** आत्मभावेन **विजानतः** अपरोक्षेण साक्षात्कुर्वतोऽधिकारिणः पुरुषस्य **तस्येति** षष्ठी सप्तम्यर्थे । तस्मिन्नवस्थाविशेषे **वै** निश्चयेन **मोहो** भ्रमो **न भवेत्** । **च** पुनः **शोको** व्याकुलताऽपि **न भवेत्** । उभयत्र हेतुः—**अद्वितीयतः** तत्कारणाभावादित्यर्थः ॥ ५४ ॥

**अयमात्मा हि ब्रह्मैव सर्वात्मकतया स्थितः ।**
**इति निर्द्धारितं श्रुत्या बृहदारण्यसंस्थया ॥ ५५ ॥**

शोककारणद्वैताभावे प्रमाणमाह—**अयमिति** ॥ 'स वा अयमात्मा ब्रह्म विज्ञानमयः '† इत्यादिरूपयेत्यर्थः । शेषं स्पष्टम् ॥५५॥

**अनुभूतोऽप्ययं लोको व्यवहारक्षमोऽपि सन् ।**
**असद्रूपो यथा स्वप्न उत्तरक्षणबाधतः ॥ ५६ ॥**

नन्वयं लोक एव तत्कारणे सति कथं शोकाद्यभाव उच्यत इत्याशंक्य सदृष्टान्तमाह—**अनुभूत इति** ॥ स्पष्टम् ॥ ५६ ॥

---

[1]यस्तु स ......त्वेन प्रपश्यति. *ई. ७. †बृह. ६-४-५.

**स्वप्नो जागरणेऽलीकस्स्वप्नेऽपि न हि जागरः[1] ।**
**द्वयमेव लये नास्ति लयोपि ह्युभयोर्न च ॥ ५७॥**

दृष्टान्तं विवृण्वन्नुक्तन्यायमन्यत्राप्यतिदिशति—**स्वप्न** इति ॥ **अलीको** मिथ्या । **द्वयं** स्वप्नजागरणे । **लये** सुषुप्तौ । शेषं स्पष्टम् ॥ ५७ ॥

**त्रयमेवं भवेन्मिथ्या गुणत्रयविनिर्मितम् ।**
**अस्य द्रष्टा गुणातीतो नित्यो ह्येकश्चिदात्मकः ॥५८**

उक्तमुपसंहरन्फलितमाह—**त्रयमिति** ॥ **त्रयं** जाग्रदाद्यवस्था-त्रयं **एवं** उक्तपरस्परव्यभिचारेण **मिथ्या** । मिथ्यात्वे हेतुः—**गुणेति** । **गुणत्रयविनिर्मितं** मायाकल्पितमित्यर्थः । तर्हि किं सत्यमत आह—**अस्येति** । **अस्य** अवस्थात्रयस्य । शेषं स्पष्टम्॥५८॥

**यद्वन्मृदि घटभ्रान्तिं[2] शुक्तौ वा रजतस्थितिम्[3] ।**
**तद्वद्ब्रह्मणि जीवत्वं वीक्ष्यमाणे न पश्यति ॥ ५९ ॥**

नन्ववस्थात्रयं मिथ्या भवतु, जीवस्तु सत्यः स्यादित्याशंक्य सदृष्टान्तमुत्तरमाह—**यद्वदिति** ॥ **ब्रह्मणि वीक्ष्यमाणे** आत्मत्वेन साक्षात्कृते सति **जीवत्वं न पश्यति** इत्यन्वयः । अन्यत्स्प-ष्टमेव ॥ ५९ ॥

**यथा मृदि घटो नाम कनके कुण्डलाभिधा ।**
**शुक्तौ हि रजतख्यातिर्जीवशब्दस्तथा परे ॥६०॥**

---

[1]स्वप्ने जागरितं नास्ति स्वप्नो जागरिते न हि । [2]भ्रान्तिः.
[3]स्थितिः.

अज्ञानावस्थायां प्रतीयमानो यो जीवब्रह्मभेदः स नाममात्र इति बहुदृष्टान्तैराह—**यथेति** ॥ रजतस्य ख्यातिराख्या नामेति यावत् । **परे** परे ब्रह्मणि **जीवशब्दस्तथा** । शेषं स्पष्टम् ॥ ६० ॥

**यथैव व्योम्नि नीलत्वं यथा नीरं मरुस्थले ।**
**पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥ ६१ ॥**

न केवलं जीव एव नाममात्रः, किं तु सर्वं विश्वमपि ब्रह्मणि नाममात्रमित्यनेकदृष्टान्तैराह—**यथैवेति** ॥ स्पष्टम् ॥ ६१ ॥

**यथैव शून्ये वेतालो गन्धर्वाणां पुरं यथा ।**
**यथाऽऽकाशे द्विचन्द्रत्वं तद्वत्सत्ये जगत्स्थितिः॥६२**

नाममात्रप्रपञ्चस्य मिथ्यात्ववासनादार्ढ्यायेममेवार्थं बहुभिर्लोकप्रसिद्धदृष्टान्तैः प्रपञ्चयति—**यथैव शून्ये** इत्यादित्रिभिः ॥ शून्ये निर्जने देशे **वेतालः** अकस्मादाभासमानो भूतविशेषः । गन्धर्वपुरस्यापि शून्याधिष्ठानत्वं ज्ञेयम् । गन्धर्वनगरं नाम राजनगराकारो नीलपीतादिमेघरचनाविशेषः । स्पष्टमन्यत् ॥ ६२ ॥

**यथा तरङ्गकल्लोलैर्जलमेव स्फुरत्यलम् ।**
**पात्ररूपेण ताम्रं हि ब्रह्माण्डौघैस्तथाऽऽत्मता॥६३॥**

**यथा तरङ्गेति** ॥ सुगमम् ॥ ६३ ॥

**घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः ।**
**जगन्नाम्ना चिदाभाति ज्ञेयं तत्तदभावतः ॥ ६४ ॥**

किंच—**घटेति** ॥ तत्र पादत्रयं स्पष्टम् । ननु किमनेन

मिथ्यात्ववासनादार्ढ्येनेत्यत आह—ज्ञेयमिति । तदभावतो नामाभावतः तत् ब्रह्म ज्ञेयम् । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'* इत्यादिश्रुतेः ॥ ६४ ॥

**सर्वोऽपि व्यवहारस्तु ब्रह्मणा क्रियते जनैः ।**
**अज्ञानान्न विजानन्ति मृदेव हि घटादिकम् ॥६५॥**

ननु 'यत्र हि द्वैतमिव भवति'† इत्यादिश्रुत्यर्थदर्शनेनावस्थात्रयविदेहमोक्षावुक्तौ, न तु जीवन्मोक्ष इत्याशंक्याह—सर्व इति ॥ सर्वोऽपि लौकिको वैदिकश्चेति । शेषं स्पष्टम् । अयं भावः—अज्ञाननिवृत्तिरेव जीवन्मुक्तिर्न तु द्वैतादर्शनमिति ॥ ६५ ॥

**कार्यकारणता नित्यमास्ते घटमृदोर्यथा ।**
**तथैव श्रुतियुक्तिभ्यां प्रपञ्चब्रह्मणोरिह ॥ ६६ ॥**

तत्र हेतुं सदृष्टान्तमाह—कार्येति ॥ 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्'* इत्यादिः श्रुतिः । युक्तिस्तु—कार्यकारणयोरन्यत्वे एककारणज्ञानात्सर्वकार्यज्ञानं न स्यादित्यादि । सुगममन्यत् ॥ ६६ ॥

**गृह्यमाणे घटे यद्वन्मृत्तिकाऽऽयाति वै बलात् ।**
**वीक्ष्यमाणे प्रपञ्चेऽपि ब्रह्मैवाभाति भासुरम् ॥६७॥**

कार्यकारणयोरनन्यत्वमेव दृष्टान्तेन स्पष्टयति—गृह्यमाण इति॥ भासुरं प्रमाणानिरपेक्षतयैव भासनशीलम् । स्पष्टमन्यत् ॥ ६७ ॥

**सदैवात्मा विशुद्धोऽस्ति ह्यशुद्धो भाति वै सदा ।**
**यथैव द्विविधा रज्जुर्ज्ञानिनोऽज्ञानिनोऽनिशम्॥६८**

---

*छा. ६-१-४. †बृह. ४-४-१४.

ननु ब्रह्मणि भासमाने प्रपञ्चो न भासेतेत्याशङ्क्यावस्थाभेदेनोभयमपि भासत इति सदृष्टान्तमाह—सदैवेति ॥ तत्र **ज्ञानिनः सदैवात्मा विशुद्धः**; अज्ञानतत्कार्यप्रपञ्चमलरहितत्वान्निष्प्रपञ्चोऽस्ति । **अज्ञानिनस्तु सदैवाशुद्धोऽस्तीति** भ्रमाद्विभाति **वै** इति तत्प्रसिद्धौ । उभयत्रापि दृष्टान्तः—**यथेति** । **यथा रज्जुर्ज्ञानिनः** सर्पाभावतया निर्विषत्वेनाभयंकरी **अज्ञानिनस्तु** सर्परूपतया विपरीतत्वेन भयंकरीति **द्विविधा भाति** । अयं भावः—ब्रह्म यद्यपि स्वयंप्रकाशत्वेन सदा भात्येव, तथाऽपि वृत्त्यारूढत्वेन पुरुषार्थोपयोगीति ज्ञानिनः प्रतिभाति, नाज्ञानिनः; सूर्यदीपादिरिव चक्षुष्मदन्धयोरिति दिक् ॥ ६८ ॥

**यथैव मृन्मयः कुम्भस्तद्वद्देहोऽपि चिन्मयः ।**
**आत्मानात्मविभागोऽयं[1] मुधैव क्रियते बुधैः ॥६९॥**

नन्वात्मा यदि सदैव निष्प्रपञ्चत्वेन भाति, तर्हि किमर्थं देहात्मभेदो वर्णित इत्याशंक्याविवेकिनो देहव्यतिरिक्तात्मबोधार्थं, विवेकिनस्तु व्यर्थ एवेति सदृष्टान्तमाह—**यथेति** ॥ तत्र **अबुधैः** इत्यकारप्रश्लेषे **मुधैव क्रियते**, अपि तु नेति काकुव्याख्यानम् । अन्यत्सर्वं सुगमम् ॥ ६९ ॥

**सर्पत्वेन यथा रज्जू रजतत्वेन शुक्तिका ।**
**विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता ॥७०॥**

**घटत्वेन यथा पृथ्वी पटत्वेनैव तन्तवः ।**
**विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता ॥७१॥**

---

[1] विवेकोऽयं.

कनकं कुण्डलत्वेन तरङ्गत्वेन वै जलम् ।
विनिर्णीतं विमूढेन देहत्वेन तथाऽऽत्मता ॥ ७२ ॥

चोरत्वेन यथा स्थाणुर्जलत्वेन मरीचिका ।
विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता ॥७३॥

गृहत्वेनैव काष्ठानि खड्गत्वेनैव[1] लोहता ।
विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता ॥७४॥

इदानीमविवेकिनः कल्पितदेहतादात्म्यं सदृष्टान्तमाह—सर्पत्वेनेति ॥ पञ्चानामप्येतेषां श्लोकानामर्थः स्फुटतर एवास्त्यतो न व्याख्यानं कृतम् ॥ ७०–७४ ॥

यथा वृक्षविपर्यासो जलाद्भवति कस्य[2] चित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७५ ॥

पोतेन गच्छतः पुंसस्सर्वं भातीव चञ्चलम् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७६ ॥

पीतत्वं हि यथा शुभ्रे दोषाद्भवति कस्य चित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७७ ॥

चक्षुर्भ्यां भ्रमशीलाभ्यां सर्वं भाति भ्रमात्मकम् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७८ ॥

---

[1] न हि.  [2] कहिं.

अलातं भ्रमणेनैव वर्तुलं भाति सूर्यवत् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७९ ॥

महत्त्वे सर्ववस्तूनामणुत्वं ह्यतिदूरतः ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८० ॥

सूक्ष्मत्वे सर्वभावानां स्थूलत्वं चोपनेत्रतः ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८१ ॥

काचभूमौ जलत्वं वा जलभूमौ हि काचता ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८२ ॥

यद्वदग्नौ मणित्वं हि मणौ वा वह्निता पुमान् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८३ ॥

अभ्रेषु सत्सु धावत्सु सोमो धावति भाति वै[1] ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८४ ॥

यथैव दिग्विपर्यासो मोहाद्भवति कस्य चित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८५ ॥

यथा शशी जले भाति चञ्चलत्वेन कस्य चित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८६ ॥

नन्वन्यथा निर्णये किं कारणमिति चेत्तदज्ञानमेवेति सदृष्टान्तमाह—यथा वृक्षेत्यादिद्वादशभिः ॥ ७९–८६ ॥

---

[1] सोमो भातीव धावति.

**एवमात्मन्यविद्यातो[1] देहाध्यासो हि जायते ।**
**स एवात्मपरिज्ञानाल्लीयते च परात्मनि ॥ ८७ ॥**

एवं द्वादशभिः श्लोकैरुक्तमर्थमुपसंहरति—**एवमिति** ॥ **एवं** उक्तेन प्रकारेण **आत्मन्यविद्यातः** आत्माज्ञानात् **देहाध्यासो** मनुष्योऽहमित्यादिबुद्धिः **जायते** भवति । **हीति** प्रसिद्धौ । नन्वेतस्य निवृत्तिः कुतो भवेदिति चेदात्मज्ञानादेवेत्याहोत्तरार्धेन—**स इति** । **स एव** देहाध्यास एव **आत्मपरिज्ञानात्** ब्रह्मात्मैक्यसाक्षात्कारात् **परात्मनि** अज्ञानतत्कार्यरहिते प्रत्यगभिन्ने ब्रह्मणि **लीयते** ब्रह्मस्वरूपेणावतिष्ठते, न ह्यधिष्ठानं विनाऽऽरोपितस्य स्वरूपमस्ति । चकाराद्ध्यासकारणमज्ञानमपि लीयत इति । अन्यथाऽध्यासलयाभावादित्यर्थः । न हि कारणे सति कार्यस्य लयः संभवति । तस्मादात्मज्ञानादेव सकारणकार्याध्यासनिवृत्तिरित्यलं पल्लवितेन ॥ ८७ ॥

**सर्वमात्मतया ज्ञातं जगत्स्थावरजङ्गमम् ।**
**अभावात्सर्वभावानां देहानां चात्मता कुतः ॥ ८८ ॥**

एतदेव विवृणोति—**सर्वमिति** ॥ आत्मता देहस्य नेत्यर्थः । स्पष्टमन्यत् ॥ ८८ ॥

**आत्मानं सततं जानन्[2] कालं नय महाद्युते[3] ।**
**प्रारब्धमखिलं भुञ्जन्नोद्वेगं कर्तुमर्हसि ॥ ८९ ॥**

ननु ज्ञानिनो निष्प्रपञ्चात्मतया मम किं स्यात् । न ह्यन्यभोजनेनान्यस्तृप्यतीति चेदत आह—**आत्मानमिति** ॥ भो **महाद्युते** !

---

[1] नि न ज्ञाते. [2] ज्ञात्वा. [3] मते.

कामादिपरत्वाभावेन स्वहितसाधनोन्मुखस्त्वं **आत्मानं प्रत्यगभिन्नं सततं** आसुप्तिमृतिपर्यन्तं **जानन्** वेदान्तवाक्यैर्विचारयन् **कालं नय** अतिक्रामस्व विचारसाध्यज्ञानानन्तरं च **अखिलं प्रारब्धं** चरमदेहारम्भकं कर्म **भुञ्जन्** सुखदुःखाभासानुभवेन क्षपयन्सन् **उद्वेगं कर्तुं नार्हसि** इत्यर्थः ॥ ८९ ॥

**उत्पन्नेऽप्यात्मनि ज्ञाने प्रारब्धं नैव मुञ्चति ।**
**इति यच्छ्रूयते शास्त्रे[1] तन्निराक्रियतेऽधुना ॥ ९० ॥**

वस्तुतस्तु प्रारब्धमेव नास्ति, कुतो भोगः, भोगाभावे कुत उद्वेगकारणं, तदभावे च कुतस्तरां तन्निषेधोपदेश इति वेदान्तसिद्धान्तरहस्यं वक्तुं प्रतिजानत आचार्याः—**उत्पन्न इति** ॥ अत्रेयं प्रक्रिया—जगत्प्रतीतिस्त्रिधा, लौकिकी शास्त्रीयाऽऽनुभाविकी चेति । तत्राद्या पारमार्थिकी, द्वितीयाऽपरमार्थिकी,* तृतीया तु प्रातिभासिकी । तासां निवृत्तिस्तु क्रमात् वेदान्तश्रवणादित्रयसाक्षात्कारप्रारब्धक्षयैर्भवति, नान्यथेति । तत्रेयं प्रतिज्ञाऽन्यप्रतीत्यभिप्रायेणेति ज्ञातव्यम् । श्लोकार्थस्तु स्फुट एव ॥ ९० ॥

**तत्त्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते ।**
**देहादीनामसत्त्वात्तु यथा स्वप्नो विबोधतः ॥९१॥**

तदेवाह—**तत्त्वेति** ॥ ज्ञानेन सर्वव्यवहारकारणाज्ञाननिवृत्तौ प्रारब्धाभाव इति श्लोकार्थः । पदार्थस्तु स्फुट एव ॥ ९१ ॥

**कर्म जन्मान्तरीयं यत्प्रारब्धमिति कीर्तितम् ।**
**तत्तु ज[2]न्मान्तराभावात्पुंसो नैवास्ति कर्हिचित्॥९२**

---

[1]श्रुत्या. [2]तत्तज. *व्यावहारिकी.

इदानीं प्रारब्धशब्दं व्युत्पादयन्नुक्तमुपसंहरति—**कर्मेति** ॥ तत्र कर्म त्रिविधं, संश्चितक्रियमाणप्रारब्धभेदात्, तन्मध्ये भाविदेहारम्भकं सञ्चितं, तथा वर्तमानदेहनिर्वर्त्यं क्रियमाणं, प्रारब्धं तु वर्तमानदेहारम्भकम् । तत्र यद्यपि सञ्चितं जन्मान्तरीयमेव । तथाऽपि भाविदेहस्य तत्प्रारब्धमेव भवति, तेनेदं सिद्धम्—आत्मनः स्वतः कर्तृत्वाभावात्कालत्रयेऽपि जन्म नास्तीति सर्वमवदातम् ॥९२॥

**स्वप्नदेहो यथाऽध्यस्तस्तथैवायं हि देहकः ।**
**अध्यस्तस्य कुतो जन्म जन्माभावे हि तत्कुतः॥९३॥**

पूर्वोक्तं दृष्टान्तं विवृण्वन्सकारणजन्माभावे युक्तिमाह—**स्वप्नेति** ॥ जन्माभावे तत्प्रारब्धं कुतः । स्पष्टमन्यत् ॥ ९३ ॥

**उपादानं प्रपञ्चस्य मृद्भाण्डस्येव कथ्यते[1] ।**
**अज्ञानं चैव वेदान्तैस्तस्मिन्नष्टे क्व विश्वता ॥ ९४ ॥**

ननु देहादिप्रपञ्चस्य 'यतो वा'* इत्यादिश्रुतेः सत्यब्रह्मजन्यत्वात्कथं प्रातिभासिकत्वमिति चेदुच्यते—**उपादानमिति** ॥ अत्र कारणं द्विविधं—निमित्तोपादानभेदात्, तत्र निमित्तं नामोत्पत्तिमात्रकारणं, उपादानं तूत्पत्तिस्थितिलयकारणं, तत्र वेदान्तैः 'मायां तु प्रकृतिं विद्यात्'† इत्यादिभिः प्रपञ्चस्योपादानमज्ञानं पठ्यते, चकाराद्ब्रह्मापि । अत्रायं भावः—न केवलं ब्रह्मैव जगत्कारणं, निर्विकारत्वात् । नापि केवलमज्ञानं, जडत्वात् । तस्मादुभयं मिलित्वैव जगत्कारणं भवतीति । 'सत्यानृते मिथुनीकरोति' इत्यादिश्रुतेः । तत्र दृष्टान्तः—**भाण्डस्य** घटकरकादेः **मृदिव** मृत्पिण्ड इव । तत्र जलस्थाने ब्रह्म, पिण्डीकरण-

---

[1]पश्यति. *तै. ३-१. †श्वे. ४-१०.

सामर्थ्यसाम्यात् । अज्ञानं तु मृत्तिकास्थाने, आवरकत्वसाम्यात् । तत्र ब्रह्मणोऽविनाशित्वाद्ब्रह्मज्ञानेन **तस्मिन्** अज्ञान एव **नष्टे** सति **विश्वता** जीवजगदीश्वरात्मकजगद्भावः **क्व** न क्वाप्यस्तीत्यर्थः ॥ ९४ ॥

**यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात् ।**
**तद्वत्सत्यमविज्ञाय जगत्पश्यति मूढधीः ॥ ९५ ॥**

मिथुनीभावस्यैव जगत्कारणत्वं सदृष्टान्तं प्रपञ्चयति—**यथा रज्जुमिति** ॥ ९५ ॥

**रज्जुरूपे परिज्ञाते सर्पखण्डं न तिष्ठति ।**
**अधिष्ठाने तथा ज्ञाते प्रपञ्चश्शून्यतां गतः**[1] **॥ ९६ ॥**
**देहस्यापि प्रपञ्चत्वात्प्रारब्धावस्थितिः कुतः ।**

इदानीं यदुक्तं तस्मिन्नष्टे क्व विश्वता इति, तत् प्रपञ्चयन् पूर्वोक्तं प्रारब्धाभावं सदृष्टान्तमुपसंहरति सार्धेन—**रज्जुरूप इति** ॥ स्पष्टम् ॥ ९६ ॥

**अज्ञानिजनबोधार्थं प्रारब्धं वक्ति वै श्रुतिः ॥ ९७ ॥**

ननु जीवन्मुक्तस्य ज्ञानिनः प्रारब्धाभावे सति 'अत्र ब्रह्म समश्नुते'* इत्यादिः श्रुतिः प्रारब्धं किमर्थं वक्तीति चेदुच्यते अर्धेन—**अज्ञानीति** ॥ **श्रुतिः अज्ञानिजनबोधार्थं प्रारब्धं वक्ति** इत्यर्थः । ज्ञानेन सर्वव्यवहारकारणेऽज्ञाने नष्टे सति ज्ञानिनः कथं व्यवहार इत्यज्ञानिभिराक्षिप्ते प्रारब्धादिति तद्बोधार्थमिति ॥ शेषं स्पष्टम् ॥ ९७ ॥

---

[1] व्रजेत्.

*बृह. ६-४-७.

**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।**
**बहुत्वं तन्निषेधार्थं श्रुत्या गीतं च यत्स्फु[1]टम् ॥ ९८ ॥**

किं तर्हि ज्ञानिबोधार्थं वक्ति श्रुतिरिति चेदुच्यते—**क्षीयन्त** इति ॥

> **भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
> **क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥***

इति **श्रुत्या** कर्माणीति **बहुत्वं यत् स्फुटं गीतं,** तत् **तन्निषेधार्थं** प्रारब्धाभावप्रतिपादनार्थं, अन्यथा सञ्चितक्रियमाणापेक्षया कर्मणीति द्वित्वं गेयम् । तथा न गीतम् । अतो ब्रह्मात्मसाक्षात्कारात् चिज्जडग्रन्थिभेदेन साञ्चितक्रियमाणप्रारब्धाख्यत्रिविधकर्मक्षयान्ते परमपुरुषार्थं ज्ञानिबोधार्थं श्रुतिर्वक्तीति भावः ॥ ९८ ॥

**उच्यतेऽज्ञैर्बलाच्चैतत्तदानर्थद्वयागमः ।**
**वेदान्तमतहानं च यतो ज्ञानमिति श्रुतिः ॥ ९९ ॥**

उक्तवैपरीत्ये बाधकमाह—**उच्यत** इति ॥ **एतत्** प्रारब्धं **अज्ञैः** श्रुतितात्पर्यानभिज्ञैः **बलात्** अविवेकसामर्थ्याच्चेत् **उच्यते** यथार्थतया प्रतिपाद्यते चकारादद्वयात्मानं न पश्यन्ति **तदाऽनर्थद्वयागमो** दोषद्वयप्राप्तिः । तत्र प्रारब्धरूपस्य द्वैतस्याङ्गीकारे अनिर्मोक्षप्रसङ्ग एको दोषः । मोक्षाभावे ज्ञानसंप्रदायोच्छेदरूपो द्वितीयो दोष इति । न केवलं दोषद्वयस्यैव प्राप्तिः, अपितु **वेदान्तमतहानं च** वेदान्तमतस्याद्वैतस्य हानं त्यागो भविष्यति ; प्रारब्धग्रहणरूपस्य द्वैतस्य याथार्थ्यादित्यर्थः । तर्हि किं प्रतिपत्तव्यमित्यत आह—**यत** इति । **यतो** यस्याः सका-

[1] च वै स्फु.   1723

*मुण्ड, २-२-८.

शात् ज्ञानं भवति तादृशी सा श्रुतिः ग्राह्येति शेषः । सा श्रुतिस्तु—

**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।**

**नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत् ॥***

इति । एतदभिप्रायः, क इति चोल्लिख्यते—धीरो विवेकी ब्राह्मणो ब्रह्म भवितुमिच्छुस्तमेव वेदान्तप्रसिद्धमात्मानं विज्ञाय आदावुपदेशतः शास्त्रतश्च ज्ञात्वाऽनन्तरं प्रज्ञां शास्त्राचार्योपदिष्टविषयामपरोक्षानुभवपर्यन्तां जिज्ञासापरिसमाप्तिकरीं कुर्वीत । बहून् कर्मोपासनाप्रतिपादकान् शब्दान् वाक्यसन्दर्भान्नानुध्यायान्न चिन्तयेत् । तर्हि तान् ब्रूयात् किं नेत्याह—वाच इति । तद्वैतशास्त्रपठनं वाचो विग्लापनं विशेषेण श्रमकरं, हीति सर्वानुभवसिद्धमित्यलं पल्लवितेन ॥ ९९ ॥

**त्रिपञ्चाङ्गान्यथो वक्ष्ये पूर्वोक्तस्य हि लब्धये ।**
**तैश्च सर्वैस्सदा कार्यं निदिध्यासनमेव तु ॥१००॥**

तदेवमेतावता ग्रन्थसन्दर्भेण मुख्याधिकारिणो वैराग्यादिसाधनचतुष्टयपूर्वकं वेदान्तवाक्यविचार एव प्रत्यगभिन्नब्रह्मापरोक्षज्ञानद्वारा मुख्यं मोक्षकारणमित्यभिहितम् । इदानीमसकृद्विचार्यापि बुद्धिमान्द्यविषयासक्त्यादिप्रतिबन्धेनापरोक्षज्ञानं यस्य न जायते तस्य मन्दाधिकारिणो निर्गुणब्रह्मोपासनमेव मुख्यं साधनमित्यभिप्रेत्य ससाधनं ध्यानयोगं प्रतिजानत आचार्याः—**त्रिपञ्चेति** ॥ **अथो**शब्दोधिकारिभेदार्थः । क्वचित् '**अतो**' इति पाठः—तस्मिन् पक्षे यतो मन्दाधिकारी विचारं न लभते अतो हेतोरित्यर्थः । **त्रिपञ्च** त्रिगुणितानि पञ्च पञ्चदशेत्यर्थः । तत्संख्याकान्यङ्गानि निदिध्यासनाङ्गिसाधकसाधनविशेषान्, यज्ञसाधकप्रयाजादिवदित्यर्थः । **वक्ष्ये** वक्ष्यामि । **तैः** वक्ष्यमाणैः

*बृ. ६-४-२१.

सर्वैः अङ्गैः **निदिध्यासनमेव कार्यं**, न तु तूष्णीमवस्थानमुचितमित्यर्थः । निदिध्यासनकर्तव्यप्रतिज्ञाप्रयोजनमाह—**पूर्वोक्तस्येति** । **पूर्वोक्तस्य** स्वरूपावस्थानलक्षणमोक्षस्य **सिद्धय** इति । हीति वेदान्तप्रसिद्धौ । तुशब्दः पातञ्जलवैलक्षण्यलक्षणेन मोक्षस्य सिद्धय इति । अनेनाष्टाङ्गप्रतिपादकं पातञ्जलमवैदिकत्वाद्वैशेषिकादिवदनादेयमिति ध्वनितम् ॥ १०० ॥

**नित्याभ्यासादृते प्राप्तिर्न भवेत्सच्चिदा[1]त्मनः ।**
**तस्माद्ब्रह्म निदिध्यासेज्जिज्ञासुश्श्रेयसे चिरम् ॥ १०१**

मन्दाधिकार्यन्यत्सर्वं कर्म सगुणोपासनविचाररूपं साधनं च विहाय श्रद्धयाऽऽचार्योक्तप्रकारेण निर्गुणं ब्रह्मैव निदिध्यासेदित्याह—**नित्येति** ॥ स्पष्टम् ॥ १०१ ॥

**यमो हि नियमस्त्यागो मौनं देशश्च कालता ।**
**आसनं मूलबन्धश्च देहसाम्यं च दृक्स्थितिः ॥ १०२**

**प्राणसंयमनं चैव प्रत्याहारश्च धारणा ।**
**आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात् १०३**

ननु कानि तान्यङ्गानि, यैः सह निदिध्यासनं कर्तव्यमित्यपेक्षायां तानि निर्दिशति—**यम इति** द्वाभ्याम् ॥ उत्तानार्थावुभावपि श्लोकौ ॥ १०२–१०३ ॥

**सर्वं ब्रह्मेति विज्ञानादिन्द्रियग्रामसंयमः ।**
**यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ॥ १०४**

---

[1] संविदा.

इदानीमेतेषां प्रत्येकं निर्देशक्रमेण स्वाभिमतानि लक्षणान्याह—**सर्व** इत्याद्येकविंशत्या ॥ तत्र प्रथमोद्दिष्टं यमं तावद्दर्शयति—**सर्वमिति** ॥ **सर्वं** आकाशादिदेहान्तं जगत् **ब्रह्म** बाधसामानाधिकरण्यद्वारा स्थाणुपुरुषादिवदित्यर्थः । **इति विज्ञानात्** निश्चयात् हेतोः **इन्द्रियाणां** श्रोत्रादीनामेकादशकरणानां **ग्रामः** समूहस्तस्य **संयमः** सम्यक् शब्दादिविषयाणां विनाशित्वसातिशयत्वदुःखदत्वादिदोषदर्शनात् **यमो** विषयेभ्यो निवारणं **अयं यम इति संप्रोक्तः**, न तु केवलमहिंसादिरित्यर्थः । ततश्च किमत आह—**अभ्यसनीय इति** । अयं **मुहुर्मुहुरभ्यसनीय** इति ॥ १०४ ॥

**सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ।**
**नियमो हि परानन्दो नियमात्क्रियते बुधैः ॥१०५॥**

एवं यमं लक्षयित्वा नियमं लक्षयति—**सजातीयेति** ॥ सजातीयं प्रत्यगभिन्नं परं ब्रह्म तदेकाकारो वृत्तिप्रवाहः **सजातीयप्रवाहः** । यद्वा—सजातीयानामसङ्गोहमविक्रियोहमित्यादिप्रत्यगभिन्नब्रह्मप्रत्ययानां प्रवाहः । **च** पुनः **विजातीयतिरस्कृतिः** विजातीयं ब्रह्मात्मविलक्षणं जगत्, पूर्वसंस्काराज्जायमाना तदाकारा वृत्तिरित्यर्थः । तस्य तिरस्कृतिर्दोषस्मृत्याऽधिकोपेक्षा अनादर इत्यर्थः, अयं **नियम** इत्यर्थः, न तु केवलं शौचादिरित्यर्थः । **हि** इत्युपनिषत्प्रसिद्धौ । नन्वनयोरुपनिषत्प्रसिद्ध्या कः पुरुषार्थ इति चेदत आह—**नियमादित्यादि** । सुगमम् ॥ १०५ ॥

**त्यागः प्रपञ्चरूपस्य चिदात्मत्वावलोकनात् ।**
**त्यागो हि महतां पूज्यस्सद्यो मोक्षमयो यतः ॥१०६**

इदानीं तृतीयं त्यागं लक्षयति—**त्याग इति** ॥ **प्रपञ्चरूपस्य**

प्रपञ्चो नामरूपलक्षणो रूप्यते घटोयं पटोयमित्यादिनामरूपतो निरूप्यते व्यवह्रियते प्रकाश्यते येन तत्प्रपञ्चरूपं सर्वाधिष्ठानभूतं पदार्थस्फुरणं तस्य **चिदात्मत्वावलोकनात्** चिदजडं स्वत एव प्रकाशमानं ब्रह्म तदात्मा स्वरूपं यस्य तद्भावस्तस्यावलोकनमनुसन्धानं तस्माद्धेतोर्यः **त्यागः** नामरूपोपेक्षा स एव **त्यागः** त्यागशब्दवाच्यः । 'ईशा वास्यमिदं सर्वम्'* इत्यादिश्रुतेः । हीति विद्वदनुभवप्रसिद्धौ । नन्वयं त्यागो न कुत्रापि प्रसिद्ध इत्याशङ्क्याह—**महतां पूज्य** इति । तत्र हेतुः **सद्य** इति । यतोयं त्यागः सद्योनुसन्धानकाल एव **मोक्षमयः** परमानन्दस्वरूपावस्थानरूपः । अत एवात्मतत्त्वविदामिष्टत्वादतिप्रसिद्धोयं त्याग इत्यर्थः । तस्मादयमेव मुमुक्षुणा कर्तव्यो नान्यः, केवलस्वकर्माद्यकरणरूप इति भावः । एवमग्रेऽप्यूह्यम् ॥ १०६ ॥

**यस्माद्वाचो निवर्तन्ते अप्राप्य मनसा सह ।**
**यन्मौनं योगिभिर्गम्यं तद्भवेत्सर्वदा बुधः ॥ १०७॥**

अथ मौनं लक्षयति—**यस्मादिति** ॥ शब्दप्रवृत्तिनिमित्तजातिक्रियादेरभावात् मनसो वाचामगोचरं **यन्मौनं** वक्तुमशक्यं यद्ब्रह्म तथाऽपि **योगिभिर्गम्यं** ज्ञानयोगिभिः प्रत्यगभिन्नत्वेन प्राप्यं तत् प्रसिद्धमेव ब्रह्मरूपं मौनं **सर्वदा बुधो** विवेकी **भवेत्** तदहमस्मीत्यनुसन्दध्यादित्यर्थः ॥ १०७ ॥

**वाचो यस्मान्निवर्तन्ते तद्वक्तुं केन शक्यते ।**
**प्रपञ्चो यदि वक्तव्यः सोपि शब्दविवर्जितः॥१०८॥**

नन्विदं प्रत्यगभिन्नब्रह्मानुसन्धानं ध्यानरूपं चतुर्दशमङ्गं प्रती-

*ई. १.

यते इत्याशङ्क्य स्वारस्यात्प्रकारान्तरेण मौनमेव लक्षयति सार्धेन—वाच इति ॥ अयं भावः—शब्दप्रवृत्तिनिमित्ताभावाद्ब्रह्म यथा वागविषयं तथा नामरूपजात्यादिप्रपञ्चोपि सदसदादिविकल्पासहत्वाद्वागतीतः ॥ १०८ ॥

**इति वा तद्भवेन्मौनं सतां सहजसंज्ञितम् ।**
**गिरा मौनं तु बालानां प्रयुक्तं ब्रह्मवादिभिः॥१०९॥**

इतीति ॥ इति उक्तप्रकारेण ब्रह्मजगतोर्विवादत्यागरूपं वा तन्मौनं भवेत् । केषामित्याकङ्क्षायां सतां चेदं प्रसिद्धमित्याह—सतामिति । सत्पुरुषाणां सहज इति नाम्ना प्रसिद्धमित्यर्थः । ननु वाङ्नियमनमेव प्रसिद्धं मौनमिति चेदत आहार्धेन—गिरेति॥ १०९

**आदावन्ते च मध्ये च जनो यस्मिन्न विद्यते ।**
**येनेदं सततं व्याप्तं स देशो विजनस्स्मृतः ॥११०॥**

इदानीं देशं लक्षयति—आदाविति ॥ अत्र जनस्य त्रैकालिकाभाव आनुभविकः स्वप्नतीत्या ज्ञेयः, न तु लौकिकशास्त्रीयप्रतीतिभ्यां विरोधादिति भावः । स्पष्टमन्यत् ॥ ११० ॥

**कलनात्सर्वभूतानां ब्रह्मादीनां निमेषतः ।**
**कालशब्देन निर्दिष्टो ह्यखण्डानन्द अद्वयः॥१११॥**

अथ कालं लक्षयति—कलनादिति ॥ आरम्य कलनात् सर्गस्थितिप्रलयाधारत्वादित्यर्थः । शेषं स्पष्टम् ॥ १११ ॥

**सुखे नैव भवेद्यस्मिन्नजस्रं ब्रह्म चिन्तनम् ।**
**आसनं तद्विजानीयान्नेतरत्सुखनाशनम् ॥११२॥**

आसनं लक्षयति—**सुखे नैवेति** ॥ **यस्मिन्सुखे** सुखरूपे ब्रह्मणि **चिन्तनं** कर्तव्याकर्तव्यचिन्ता **नैव भवेत् तत् ब्रह्म आसनं विजानीयादि**त्यन्वयः । कीदृशं ब्रह्म?—**अजस्रं** कालत्रयावस्थायीत्यर्थः । सुगममन्यत् ॥ ११२ ॥

**सिद्धं यत्सर्वभूतादि विश्वाधिष्ठानमव्ययम् ।**
**यस्मिन् सिद्धास्समाविष्टास्तद्वै सिद्धासनं विदुः ॥**

प्रसङ्गादासनविशेषं लक्षयति—**सिद्धमिति** ॥ सिद्धं च तदासनं च, अथवा सिद्धानामासनं सिद्धासनमिति कर्मधारयतत्पुरुषसमासाभ्यां ब्रह्मैवेत्यर्थः ॥ ११३ ॥

**यन्मूलं सर्वभूतानां यन्मूलं चित्तबन्धनम् ।**
**मूलबन्धस्सदा सेव्यो योग्योऽसौ राजयोगिनाम् ॥**

अथ मूलबन्धं लक्षयति—**यन्मूलमिति** ॥ आकाशादिसर्वभू**तानां यन्मूलं** आदिकारणं ब्रह्म, तथा **चित्तबन्धनं** चित्तस्य बन्धकारणं मूलाज्ञानं, तदपि **यन्मूलं** यदाश्रयं, पृथक्सत्ताशून्यत्वादिति । यद्वा—चित्तस्य बन्धनं एकत्र लक्ष्ये निग्रहस्तदपि **यन्मूलं** यस्य ब्रह्मणः प्राप्तिनिमित्तमित्यर्थः । स **मूलबन्ध** इत्यन्वयः । **राजयोगिनां** व्यवहारेऽप्यविक्षिप्तचित्ततालक्षणो राजयोगस्तद्वतां ज्ञानपरिपाकयुक्तानामित्यर्थः । शेषं स्पष्टम् ॥ ११४ ॥

**अङ्गानां समतां विद्यात्समे ब्रह्मणि लीयते[1] ।**
**नो चेन्नैव समानत्वमृजुत्वं शुष्कवृक्षवत् ॥११५॥**

इदानीं देहसाम्यं लक्षयति—**अङ्गानामिति** ॥ अङ्गानां ब्रह्म-

[1]लीनतां.

ण्यध्यस्तानां स्वभावविषमाणामधिष्ठानसमत्वदृष्ट्या **समतां विद्यात्** जानीयात् । **समे ब्रह्मणि—अङ्गवैषम्यं** इत्यत्राध्याहारः—**तच्चेन्नो लीयते** समब्रह्मरूपतया न तिष्ठतीत्यर्थः—**तर्हि** इत्यत्र शेषः—**शुष्कवृक्षवत्** अङ्गानां ऋजुत्वं सरलत्वमचञ्चलत्वं च यत्तत् **समानत्वं नैव** भवेदिति संबन्धः, अङ्गानां विषमस्वभावत्वादिति भावः ॥ ११५ ॥

**दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् ।**
**सा दृष्टिः परमोदारा न नासाग्रावलोकिनी॥११६॥**

इदानीं दृक्स्थितिं लक्षयति—**दृष्टिमिति** ॥ ब्रह्मणि फलव्याप्यत्वाभावेऽपि वृत्तिव्याप्यत्वात् **दृष्टिं** अन्तःकरणवृत्तिं **ज्ञानमयीं** अखण्डब्रह्माकारां **कृत्वा जगत्** सर्वं **ब्रह्ममयं पश्येत्** ब्रह्मैवेदं सर्वमित्येतावन्मात्रैव वृत्तिः कार्येति भावः । स्पष्टमन्यत् ॥ ११६ ॥

**दृष्टि[1]दर्शनदृश्यानां विरामो यत्र वा भवेत् ।**
**दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकिनी ॥११७॥**

ननु तथाऽपि ब्रह्मणि वृत्तिप्रवृत्तिनिमित्तजात्याद्यभावादिन्द्रियादिप्रत्यक्षविषयस्य जगतो ब्रह्मरूपत्वेन दर्शनं कथं स्यादित्यशङ्क्य स्वारस्यात्पक्षान्तरेणाह—**दृष्टीति** ॥ **वा**शब्दः पक्षान्तरे । **दृष्टी**त्यादिना श्रोत्रादिसर्वत्रिपुटीनामुपलक्षणम् । **यत्र** यस्मिन् ब्रह्मस्वरूपे दृष्ट्यादिसर्वत्रिपुटीनां **विरामो** लयो **भवेत्** तत्र तस्मिन्नेव प्रपञ्चातीते **दृष्टिः** अन्तःकरणवृत्तिः **कर्तव्या,** न नासिकाग्रावलोकिनीत्यर्थः ॥ ११७ ॥

**चित्तादिसर्वभावेषु ब्रह्मत्वेनैव[2] भावनात् ।**
**निरोधस्सर्ववृत्तीनां प्राणायामस्स उच्यते ॥११८॥**

---

[1] द्रष्टृ. [2] नैक्य.

अथ प्राणायामं लक्षयति—**चित्तादीति** ॥ मनोधीनत्वात्प्राणस्य मनोनिरोधेनैव प्राणनिरोधः, न तु प्राणनिरोधेनैव पातञ्जलाभिमतेन मनोनिरोधस्तदधीनत्वाभावादिति फलितार्थः ॥ ११८ ॥

**निषेधनं प्रपञ्चस्य रेचकाख्यस्समीरणः ।**
**ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरीरितः॥११९॥**
**ततस्तद्वृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः ।**

अमुं प्राणायामं स्वाभिमतेन रेचकादिविभागत्रयेण लक्षयति सार्धेन—**निषेधनमिति** ॥ स्पष्टम् । तत इति अनात्मोपेक्षाऽऽत्मानुसन्धानतद्दार्ढ्यानि रेचकादिशब्दवाच्यानीति भावार्थः ॥ ११९ ॥

**अयं चापि प्रबुद्धानामज्ञानां घ्राणपीडनम्॥१२०॥**

नन्वयं त्रिविधोपि प्राणायामो न कुत्रापि श्रुत इत्यपेक्षायामत्राधिकारिणमाहार्धेन—**अयमिति** ॥ अयं उक्तलक्षणः प्राणायामः चकाराद्विदत्रययुक्त इत्यर्थः । **प्रबुद्धानां** प्रकर्षेणासंभावनादिरहितत्वेन बुद्धानामात्मबोधयुक्तानां निस्सन्देहापरोक्षज्ञानिनामित्यर्थः । **योग्य** इत्यध्याहारः । तर्ह्यज्ञानां कीदृश इत्यत आह—**अज्ञानामिति** ॥ १२०

**विषयेष्वात्मतां दृष्ट्वा मनसश्चिति मज्जनम् ।**
**प्रत्याहारस्स विज्ञेयोऽभ्यसनीयो मुमुक्षुभिः॥१२१**

इदानीं प्रत्याहारं लक्षयति—**विषयेष्विति** ॥ **विषयेषु** घटादिषु, यद्वा शब्दादिषु, अन्वयव्यतिरेकाभ्यां **आत्मतां** सत्तास्फुरत्ताप्रियतामात्रतां **दृष्ट्वा** अनुसन्धाय **मनसो** अन्तःकरणस्य **चिति मज्जनं** नामरूपक्रियानुसन्धानराहित्येन चित्स्वरूपतयाऽवस्थानं **स प्रत्याहारः** । ततः किमत आह—**अभ्यसनीय इति** ॥१२१॥

**यत्रयत्र मनो याति ब्रह्मणस्तत्र दर्शनात् ।**
**मनसो धारणं चैव धारणा सा परा मता ॥१२२॥**

धारणां लक्षयति—यत्रेति ॥ **यत्रयत्र** यस्मिन् यस्मिन् पदार्थे **मनो याति** गच्छति **तत्र ब्रह्मणः** सत्तादिमात्रस्य नामाद्युपेक्षया **दर्शनात्** अनुसन्धानात् **मनसो धारणं** ब्रह्मण्येव स्थिरीकरणं **धारणा** इत्यर्थः । नन्वाधारादिषट्चक्रमध्ये एकत्र मनसो धारणं धारणेति प्रसिद्धमत आह—सेति । **सा** अत्रोक्तलक्षणा धारणा **परा** उत्कृष्टा **मता** तत्त्वबोधवतामित्यर्थः । अन्या तु पातञ्जलाभिमता प्राणायामादिवदपरेति भावः । **च एव** इत्यव्ययद्वयं वेदान्तविद्वदनुभवप्रसिद्धिं द्योतयति ॥ १२२ ॥

**ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः ।**
**ध्यानशब्देन विख्याता परमानन्ददायिनी ॥१२३॥**

अथात्मध्यानं लक्षयति—ब्रह्मैवेति ॥ **सद्वृत्त्या** सती प्रमाणान्तरबाधायोग्या वृत्तिस्तया वृत्त्या. **निरालम्बतया** देहाद्यनुसन्धानराहित्येन **स्थितिः** अवस्थानमित्यर्थः । शेषं स्पष्टम् ॥ १२३ ॥

**निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ।**
**वृत्तिविस्मरणं सम्यक् समाधिर्ज्ञानसंज्ञकः ॥१२४॥**

अथान्त्यं समाधिरूपं पञ्चदशमङ्गं लक्षयति—निर्विकारतयेति ॥ **निर्विकारतया** विषयानुसन्धानरहितयाऽन्तःकरणवृत्त्या **पुनः** अनन्तरमेव **ब्रह्माकारतया** यत् **सम्यक्** प्रपञ्चसंस्काररहितं ध्यातृध्येयाकारवृत्तिशून्यं **वृत्तिविस्मरणं** द्वैताननुसन्धानं स **समाधिः** पञ्चदशमङ्गमित्यर्थः । ननु वृत्तिविस्मरणस्याज्ञानरूपत्वात्कथं समा-

धित्वमित्याशङ्क्य ब्रह्मात्मैक्यबोधाभावे केवलवृत्तिविस्मरणस्य तथात्वेऽपि न ब्रह्मज्ञानसहितस्य तथात्वमित्याशयेन समाधिं विशिनष्टि— **ज्ञानसंज्ञक इति** । ज्ञानमिति संज्ञा यस्य स ज्ञानसंज्ञकः ब्रह्माकारतया स्फुरणरूप इत्यर्थः । उक्तं च—

समाधिस्संविदुत्पत्तिः परजीवैकतां प्रति । इति ॥ १२४ ॥

**इमं चाकृत्रिमानन्दं तावत्साधु समभ्यसेत् ।**
**वश्यो यावत्क्षणात्पुंसः प्रयुक्तस्सन्भवेत्स्वयम्[1] ॥ १२५**

इदानीं यदर्थं साङ्गमिदं निदिध्यासनमुक्तं तदाह—**इमभिति** ॥ **अकृत्रिमानन्दं** स्वरूपभूतानन्दाभिव्यञ्जकं निदिध्यासनमित्यर्थः । **च**-काराद्यथाबुद्धि वेदान्तविचारमपीति । स्पष्टमन्यत् ॥ १२५ ॥

**ततस्साधननिर्मुक्तस्सिद्धो भवति योगिराट् ।**
**तत्स्वरूपं न चैतस्य विषयो मनसो गिराम्[2] ॥ १२६ ॥**

एवमभ्यसतः फलमाह—**तत इति** ॥ **साधननिर्मुक्तः** साधनाभ्यासरहित इत्यर्थः । **एतस्य** योगिनः तत् वेदान्तप्रसिद्धं **स्वरूपं** ब्रह्मैवेति भावः ॥ १२६ ॥

**समाधौ क्रियमाणे तु विघ्ना आयान्ति वै बलात् ।**
**अनुसन्धानराहित्यमालस्यं भोगलालसम् ॥ १२७ ॥**

अखण्डैकरसब्रह्मस्वरूपत्वेनावस्थानलक्षणमोक्षफलदोऽयं समाधिपर्यन्तो योगो गुर्वनुग्रहवतां सुकरोऽस्ति, तथाऽपि सुकर इत्यनादरो न कार्यः विघ्नबाहुल्यसंभवादित्याह द्वाभ्यां—**समाधाविति** ॥ स्पष्टोऽर्थः ॥ १२७ ॥

---

[1] णं पुंसा...स्सम्भ. [2] ततस्स्वरूपान्नैतस्य वियोगो मनसा गिरा ॥

**लयस्तमश्च विक्षेपो रसास्वाद[1]श्च शून्यता ।**
**एवं यद्विघ्नबाहुल्यं त्याज्यं ब्रह्मविदा शनैः ॥१२८॥**

लय इति ॥ तत्र लयो निद्रा, तमः कार्याकार्याविवेकः, विक्षेपो विषयस्फुरणं, रसास्वादो धन्योहमित्याद्यानन्दाकारा वृत्तिः, च पुनः शून्यता चित्तदोषः रागद्वेषादितीव्रवासनया चित्तस्य स्तब्धीभावः कषायः क्षुब्धतेत्यर्थः । स्पष्टमन्यत् ॥ १२८ ॥

**भाववृत्त्या हि भावत्वं शून्यवृत्त्या हि शून्यता ।**
**ब्रह्म[2]वृत्त्या हि पूर्ण[3]त्वं तथा पूर्णत्वमभ्यसेत्॥१२९**

वृत्तिरेव बन्धमोक्षकारणमित्याह—भावेति ॥ **भाववृत्त्या** घटाद्याकारवृत्त्या **भावत्वं** तन्मयत्वं भवतीति शेषः । **शून्यवृत्त्या** अभाववृत्त्या **शून्यता** जडतेत्यर्थः । हीति लोकप्रसिद्धौ । तथा **ब्रह्माकारवृत्त्या पूर्णत्वम्** । हीति विद्वत्प्रसिद्धौ । ततः किमत आह—पूर्णत्वमिति ॥ १२९ ॥

**ये हि वृत्तिं जहत्येनां ब्रह्माख्यां पावनीं पराम् ।**
**वृथैव ते तु जीवन्ति पशुभिश्च समा नराः ॥ १३० ॥**

इदानीं ब्रह्ममयीं वृत्तिं स्तोतुं तद्वृत्तित्यागपरान्निन्दति—ये हीति ॥ ये एनां ब्रह्माख्यां वृत्तिं जहति त्यजन्ति ते तु वृथैव जीवन्ति इत्यन्वयः । स्पष्टमन्यत् ॥ १३० ॥

**ये हि वृत्तिं विजानन्ति ये ज्ञात्वा वर्धयन्त्यपि ।**
**ते वै सत्पुरुषा धन्या वन्द्यास्ते भुवनत्रये ॥ १३१ ॥**

---

[1] तेजस्स्पन्द; तेजस्स्वेद; तेजस्स्वाद. [2] पूर्ण. [3] ब्रह्म.

संप्रति तामेव वृत्तिं विवर्धयितुं ब्रह्मवृत्तिपरान्सत्पुरुषान् स्तौति— ये हीति ॥ स्पष्टम् ॥ १३१ ॥

**येषां वृत्तिस्समावृद्धा परिपक्का च सा पुनः ।**
**ते वै सद्ब्रह्मतां प्राप्ता नेतरे शब्दवादिनः ॥ १३२ ॥**

एवं ब्रह्मवृत्तिपरान्स्तुत्वाऽधुना तेषां ब्रह्मप्राप्तिरूपं फलमाह— येषामिति ॥ सुगमम् ॥ १३२ ॥

**कुशला ब्रह्मवार्तायां वृत्तिहीनास्सुरागिणः ।**
**ते ह्यज्ञानितमा नूनं पुनरायान्ति यान्ति च॥१३३॥**

तानेव शब्दवादिनो निन्दति—कुशला इति॥ स्पष्टम् ॥१३३॥

**निमेषार्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना ।**
**यथा तिष्ठन्ति ब्रह्माद्यास्सनकाद्याश्शुकादयः॥१३४**

यत एवं, तस्माद्ब्रह्मनिष्ठैर्ब्रह्मवृत्त्यैव सर्वदा स्थातव्यमिति सूचयितुं ब्रह्मादीनामुदाहरणमाह—निमेषेति ॥ यथा ब्रह्माद्यास्तथा सनकाद्याः, यथा सनकाद्यास्तथा शुकाद्याः इति संप्रदायो दर्शितः ॥ एतेन ब्रह्मादिसेव्यत्वादतिश्रेष्ठोयं समाधिपर्यन्तो राजयोगः सर्वदा मुमुक्षुभिः सेवनीय इति ध्वनितम् ॥ १३४ ॥

**कार्ये कारणताऽऽयाता कारणे न हि कार्यता ।**
**कारणत्वं ततो गच्छे[1]त्कार्याभावे विचारतः॥१३५॥**

तदेवं स्वाभिमतं साङ्गं राजयोगमभिधाय पूर्वोपक्रान्तसाङ्ख्या-

---

[1]नश्ये.

परपर्यायं वेदान्तविचारमुपसंहरति—कार्ये इत्यादिपञ्चभिः श्लोकैः—**कार्येति** ॥ **कार्ये** घटपटादिरूपे विकारे **कारणता** मृत्तन्त्वादिरूपा सर्वविकाराधिष्ठानता **आयाता** अनुगता । **कारणे तु कार्यता न । हीति** प्रसिद्धम् । **ततः** कारणात्कार्याभावे **कारणत्वं गच्छेत्** । ननु कथं कारणे कार्याभाव इत्यत आह—**विचारत इति** । यथाऽयं दृष्टान्तस्तथाऽऽकाशादिकार्ये कारणता आकाशोऽस्ति भातीत्यादिव्यवहारहेतुभूता सत्यज्ञानादिरूपब्रह्मणः कारणता आयाता अनुगता, कारणे ब्रह्मणि तु आकाशादिकार्यता न हीति अतः परमार्थतः आकाशाद्यभावे ब्रह्मणः कारणताऽपि न हीति दार्ष्टान्तिकोऽर्थः ॥ १३५ ॥

**अथ शुद्धं भवेद्वस्तु यद्वै वाचामगोचरम् ।**
**द्रष्टव्यं मृद्घटेनैव दृष्टान्तेन पुनःपुनः ॥ १३६ ॥**

ततः किमत आह—**अथेति** ॥ **अथ** अनन्तरं कार्यकारणभावनिवृत्तौ **यच्छुद्धं मनोवाचामगोचरं वस्तु तत् भवेत्** 'यतो वाचो निवर्तन्ते '* इत्यादिश्रुतिप्रसिद्धिद्योतनार्थो **हि**शब्दः । ननु बुद्धेः क्षणिकत्वेनैकदा तथा विचारितेऽपि पुनरन्यथैव भातीत्यत आह—**द्रष्टव्यमिति** ॥ १३६ ॥

**अनेनैव प्रकारेण वृत्तिर्ब्रह्मात्मिका भवेत् ।**
**उदेति शुद्धचित्तानां वृत्तिज्ञानं ततः परम् ॥ १३७ ॥**

न केवलमयं विचारो ज्ञानसाधनमेवापि तु ध्यानसाधनमपीत्याह—**अनेनेति** ॥ **अनेनैव प्रकारेण शुद्धचित्तानां वृत्तिज्ञानं उदेति ततः परं ब्रह्मात्मिका वृत्तिर्भवेदिति** योजना । पदानां अर्थस्तु स्फुट एव ॥ १३७ ॥

---

*तै. उ. २-४,

**कारणं व्यतिरेकेण पुमानादौ विलोकयेत् ।**
**अन्वयेन पुनस्तद्धि कार्ये नित्यं प्रपश्यति ॥१३८॥**

तमेव विचारं विशदयति द्वाभ्यां—**कारणमिति** ॥ **आदौ** प्रथमं **कारणं व्यतिरेकेण** कार्यविरहेण विचारयेत् । **पुनस्तत्** कारणं **अन्वयेन** अनुवृत्त्या **कार्ये**ऽपि **नित्यं प्रपश्य**तीति॥१३८॥

**कार्ये हि कारणं पश्येत्पश्चात्कार्यं विसर्जयेत् ।**
**कारणत्वं ततो गच्छेदवशिष्टं भवेन्मुनिः ॥ १३९ ॥**

अथैवं विचारयेदित्याह—**कार्येति** ॥ आदौ **कार्ये कारणं** एव विचारयेत् । **पश्चात्तत्कार्यं विसर्जयेत्** नानुसन्दध्यात् । कार्यवर्जने सति **कारणत्वं स्वत** एव गच्छेत् । एवं कार्यकारणवर्जनेऽ**वशिष्टं** सच्चिन्मात्रं **मुनिः** मननशीलः स्वयमेव **भवेदि**ति॥१३९

**भावितं तीव्रवेगेन**[1] **वस्तु यन्निश्चयात्मना ।**
**पुमांस्तद्धि भवेच्छीघ्रं ज्ञेयं भ्रमरकीटवत्॥ १४० ॥**

ननु विचारजन्यापरोक्षज्ञानेन मुनेर्ब्रह्मत्वं भवतु नाम, परं तु परोक्षज्ञानिनः कथं भवेदित्याशङ्क्य तीव्रभावनया परोक्षज्ञानिनोपि ब्रह्मत्वं भवेदिति सदृष्टान्तमाह—**भावितमिति** ॥ अयं भावः—यद्यपि परोक्षज्ञानेन प्रमातृगतावरणनिवृत्तौ सत्यामपि प्रमेयगतमावरणं न निवर्तते, तथाऽपि **निश्चयात्मना** निश्चययुक्तबुद्धिमता पुरुषेण **यद्वस्तु** सच्चिदानन्दं ब्रह्म **तीव्रवेगेन** अहर्निशं ब्रह्माकारवृत्त्या **भावितं** चिंतितं **तत् वस्तु ज्ञेयं** अपरोक्षेण ज्ञातुं योग्यं ब्रह्म **शीघ्रं** अचिरेण **पुमान् भवेत्** प्रत्यगभिन्नब्रह्मभावनया पुरुषो

---

[1] योगन.

ब्रह्मरूपो भवतीत्यर्थः । हीति विद्वत्प्रसिद्धौ । तत्र सर्वलोकप्रसिद्धं दृष्टान्तमाह—**भ्रमरकीटवदिति** । भ्रमरेण कुतश्चिदानीय जीवन्नेव स्वकुट्यां प्रवेशितो यः कीटः स यथा भयात् भ्रमरध्यानेन भ्रमर एव भवति तद्वदिति ॥ १४० ॥

**अदृश्यं भावरूपं च सर्वमेतच्चिदात्मकम् ।**
**सावधानतया नित्यं स्वात्मानं भावयेद्बुधः ॥ १४१ ॥**

यदि पूर्वश्लोकोक्तदृष्टान्ते भावनाबलादेवान्यस्यान्यत्वं भवेत् तर्हि ब्रह्मविवर्तत्वेन ब्रह्मरूपस्य विश्वस्य ब्रह्मभावनया तद्रूपता भवेदिति किमु वक्तव्यमित्याशयेन सर्वात्मभावनामाह—**अदृश्यमिति** ॥ **अदृश्यं** परोक्षं **भावरूपं** प्रत्यक्षं च **सर्वं** विश्वम् । यद्वा—**अदृश्यं** द्रष्टृरूपं **भावरूपं** दृश्यं चकाराद्दर्शनं **एतत्सर्वं** त्रिपुट्यात्मकं जगद्भ्रान्त्याऽऽत्माभिन्नत्वेन भासमानमपि **चिदात्मकं** निर्विशेषस्फुरणमात्रस्वरूपं स्वात्मानमेव **बुधः** अद्वैतज्ञाननिष्ठः **सावधानतया** स्थिरवृत्त्या **नित्यं भावयेत्** सकलमिदमहं च ब्रह्मैवेति सर्वदा पश्येदित्यर्थः ॥ १४१ ॥

**दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ।**
**विद्वान्नित्यसुखे तिष्ठेद्धिया चिद्रसपूर्णया ॥ १४२ ॥**

एतदेव विवृणोति—**दृश्यमिति** ॥ **दृश्यं** घटादिकं **अदृश्यतां** अधिष्ठानचिद्रूपतां **नीत्वा** । हीति विद्वत्प्रसिद्धौ । **ब्रह्माकारेण** कल्पितस्य परिच्छिन्नस्य नामरूपादेर्निवृत्तिपूर्वकं बृहदाकारेणापरिच्छिन्नरूपेण **चिन्तयेत्** इत्यर्थः । ततः किमत आह—**विद्वानिति** । **चिद्रसपूर्णया** चिदेव रसश्चिद्रसश्चिदानन्दस्तेन पूर्णया **धिया नित्यसुखे** अविनाशिसुखे **विद्वांस्तिष्ठेदिति**॥१४२

**एभिरङ्गैस्समायुक्तो राजयोग उदाहृतः ।**
**किञ्चित्पक्वकषायाणां हठयोगेन संयुतः ॥ १४३ ॥**

इदानीमुक्तं स्वाभिमतयोगमुपसंहरति—**एभिरिति** ॥ **किंचित्** स्वल्पं **पक्वाः** दग्धाः **कषाया** रागादयो येषां तेषां **हठयोगेन** पातञ्जलोक्तेन प्रसिद्धेनाष्टाङ्गयोगेन **संयुतः** अयं वेदान्तोक्तो योग इति ॥ शेषं स्पष्टम् ॥ १४३ ॥

**परिपक्वं मनो येषां केवलोऽयं च सिद्धिदः ।**
**गुरुदैवतभक्तानां सर्वेषां सुलभो जवात्[1] ॥ १४४ ॥**

**इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवता विरचिता अपरोक्षानुभूतिः समाप्ता.**

---

अयं राजयोग एव केषां योग्य इत्याकाङ्क्षायां सर्वग्रन्थार्थमुपसंहरन्नाह—**परिपक्वमिति** ॥ **येषां मनः परिपक्वं** रागादिमलरहितमिति यावत् । तेषामित्यध्याहारः । **तेषां** जितारिषड्वर्गाणां पुरुषधुरन्धराणां **केवलः** पातञ्जलाभिमतयोगनिरपेक्षः **अयं** वेदान्ताभिमतो योगः **सिद्धिदः** प्रत्यगभिन्नब्रह्मापरोक्षज्ञानद्वारा स्वस्वरूपावस्थानलक्षणमुक्तिप्रदः । चकारोऽवधारणे । नान्येषामपरिपक्वमनसामित्यर्थः । ननु परिपक्वमनस्त्वमतिदुर्लभमित्याकाङ्क्षायामस्यापि साधनत्वादतोऽप्यन्तरङ्गसाधनमाह—**गुरुदैवतभक्तानामिति** । **जवा**दतिशीघ्रमित्यर्थः । **सर्वेषा**मिति पदेन वर्णाश्रमादिनिरपेक्षं मनुष्यमात्रं गृहीतव्यम् । अत एव गुरुदैवतभक्तेरन्तरङ्गत्वम् । तथा च श्रुतिः—

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति ।***

---

[1] भवेत्.

*श्वे. ६-२३.

स्मृतयश्च—

'तद्विद्धि प्रणिपातेन,'* 'श्रद्धावान् लभते ज्ञानम्'† इत्याद्याः । अयं भावः—परिपक्वमनसोऽपि दुस्साध्यानि साधनानि गुरुदैवतभक्तानां सुसाध्यानि भवन्तीति हेतोर्गुरुदैवतभजनमेव स्वधर्माविरोधेन सर्वैः कार्यमिति परमं मङ्गलम् ॥ १४४ ॥

पूर्णयमापरोक्ष्येण नित्यात्मज्ञानकाशिका ।
अपरोक्षानुभूत्याख्यग्रन्थराजप्रदीपिका ॥ १

नमस्तस्मै भगवते शङ्कराचार्यरूपिणे ।
येन वेदान्तविद्येयमुद्धृता वेदसागरात् ॥ २

यद्ययं शङ्करस्साक्षाद्वेदान्ताम्भोजभास्करः ।
नोदेष्यत्तर्हि काशेत कथं व्यासादिसूत्रितम् ॥ ३

अत्र यत्संमतं किञ्चित्तद्गुरोरेव मे न हि ।
असंमतं तु यत्किञ्चित्तन्ममैव गुरोर्न हि ॥ ४

यत्प्रसादादहं शब्दप्रत्ययालम्बनो हि यः ।
अहं स जगदालम्बः कार्यकारणवर्जितः ॥ ५

तस्य श्रीगुरुराजस्य पादाब्जे तु समर्पिता ।
दीपिकामालिका सेयं तत्कृपागुणगुम्भिता ॥ ६

योऽहं स्वाज्ञानमात्राज्जगदिदमभवं खादिदेहान्तमादौ
स्वस्वप्नादिवदेव सोऽहमधुना स्वज्ञानतः केवलम् ।
ब्रह्मैवास्म्यद्वितीयं परमसुखमयं निर्विकारं विबाधं
जाग्रत्स्थानवदेव सद्गुरुकृपास्वल्पप्रसादोत्थितात् ॥ ७

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीविद्यारण्यमुनि(?)विरचिता अपरोक्षानुभूतिदीपिका समाप्ता.

---

*भग. ४-३४.

†भग ४-३९.

श्री

श्रीशङ्करानन्दगुरवे नमः,

---

श्री म च्छ ङ्क रा चा र्य वि र चि ता

# श त श्लो की.

दृष्टान्तो नैव दृष्टस्त्रिभुवनजठरे सद्गुरोर्ज्ञानदातुः स्पर्शश्चेत्तत्र कल्प्यः स नयति यदहो स्वर्णतामश्मसारम्। न स्पर्शत्वं तथाऽपि श्रितचरणयुगे सद्गुरुः स्वीयशिष्ये स्वीयं साम्यं विधत्ते भवति निरुपमस्तेन वाऽलौकिकोऽपि ॥ १ ॥

ज्ञानदातुः सद्गुरोः त्रिभुवनजठरे दृष्टान्तो नैव दृष्टः। क्षुद्रविद्योपदेष्टॄणां गुरूणां दृष्टान्तः कथञ्चिदुपलभ्येत। परं तु 'न हि ज्ञानेन सदृशं पवित्रमिहविद्यते'* इत्युक्तत्वात् ज्ञानदातुः श्रीगुरोः दृष्टान्तास्त्रिभुवनजठरान्तर्वर्तिषु देवादिलोकेषु नानाविचित्रवस्तुषु नैव दृष्टः। अथ मनाक् साम्यदर्शनेन स्पर्शनेन स्पर्शः पाषाणः दृष्टान्तत्वेन कल्प्यः कल्पनीयश्चेत्तथाऽपि न घटत इत्याह—स यनतीति। स स्पर्शाश्मा अश्मसारं लोहं यद्यपि स्वर्णतां नयति प्रापयति, तथाऽपि स्पर्शत्वं न प्रापयति स्वसदृशं न करोति।

---

*भग. ४-३८, ७-१८,

सद्गुरुस्तु **श्रितचरणयुगे** स्वीयशिष्ये स्वीयं **साम्यं** **विधत्ते** ।
तेन कारणेन स्पर्शादेर्दृष्टान्तानर्हत्वाद्गुरुर्निरुपमो दृष्टान्तशून्यः ।
अथ वा **अलौकिकोऽपि** प्रपञ्चातीतोऽपि न दृष्टः, आत्मा-
कारत्वात् 'ज्ञानी त्वात्मैव मे मतम्' इति* भगवद्वचनात् ॥ १ ॥

---

अथ श्रीगुरुसन्निधानमात्रेणैव शिष्यः कृतार्थतामेति, किं पुन-
रुपदेशादित्याह—

**यद्वच्छ्रीखण्डवृक्षप्रसृतपरिमलेनाभितोऽन्येऽपि**
**वृक्षाः शश्वत् सौगन्ध्यभाजोऽप्यतनुतनुभृतां ताप-**
**मुन्मूलयन्ति । आचार्याल्लब्धबोधा अपि विधिव-**
**शतः सन्निधौ संस्थितानां त्रेधा तापं च पापं सक-**
**रुणहृदयाः स्वोक्तिभिः क्षालयन्ति ॥ २ ॥**

**श्रीखण्डवृक्षो** मुख्यश्चन्दनवृक्षः तस्मात्प्रसृतो यः **परिमलस्तेन**
**अभितः** समन्ततः **अन्येऽपि** ये वृक्षास्ते शश्वन्निरन्तरं सौगन्ध्यभाजो
भवन्ति । अथ न केवलं सौगन्ध्यभाजः, किं तु अतनुतनुभृतां
बहूनां सर्वजातीयानां लोकानां **तापं उन्मूलयन्ति** । बहूनामिति
तारतम्यवर्जम् । तद्वत् **आचार्यात् विधिवशात्** भाग्यवशात्
**लब्धबोधाः** सन्तः यदृच्छया **सन्निधौ संस्थितानां** सर्वजनानां
**सकरुणहृदयाः** यथाधिकारं कर्मोपासनाज्ञानकाण्डनिरूपिकाभिः
**स्वोक्तिभिः त्रेधा** आध्यात्मिकाधिभौतिकाधिदैविकभेदेन **त्रिविधं**
**तापं** च कायिकवाचिकमानसिकभेदेन त्रिविधं **पापं क्षालयन्ति**
उन्मूलयन्ति । विधिवशादितिपदेन बोधलब्धेर्दुर्लभत्वं सूचितम् ॥२॥

---

*भग. ४-३८, ७-१८.

अथात्मप्रतीतिप्रकारमाह—

**आत्मानात्मप्रतीतिः प्रथममभिहिता सत्यमिथ्यात्वयोगात् द्वेधा ब्रह्मप्रतीतिर्निगमनिगदिता स्वानुभूत्योपपत्त्या । आद्या देहानुबन्धाद्भवति तदपरा सा च सर्वात्मकत्वात् आदौ ब्रह्माहमस्मीत्यनुभव उदिते खल्विदं ब्रह्म पश्चात् ॥ ३ ॥**

**प्रथमं** मूलतः तत्त्वविचारे क्रियमाणे सत्यं मिथ्या चेति कोटिद्वयमेवासीत्, तथा च **सत्यमिथ्यात्वयोगात् आत्मानात्मप्रतीतिश्च**—' सत्यं ज्ञानमनन्तं ब्रह्म '* इति श्रुतेः सत्यं ज्ञानम्, मिथ्या तद्विपरीतमज्ञानम् । एवं सत्यस्य ब्रह्मणः प्रतीतिः **द्वेधा निगमनिगदिता** वेदोक्ता । अथ तामेवाह—**स्वेति । स्वानुभूत्या उपपत्त्या** चैवं द्वेधा प्रतीतिः । तत्र **आद्या** स्वानुभूत्या या प्रतीतिः सा **देहानुबन्धात्** शरीरावच्छेदेन **भवति** । तथोपपत्त्या या प्रतीतिः **सा सर्वात्मकत्वात्** समष्टिरूपात् । अथात्र हेतुमाह—आदाविति । **आदौ** देहावच्छेदेन **ब्रह्माहमस्मीत्यनुभवे उदिते** सति **पश्चात्** तदनन्तरं सर्वं **खल्विदं ब्रह्म** इत्युपपत्याऽऽत्मप्रतीतिर्भवति ॥ ३ ॥

---

एवमुद्देशमात्रेणात्मप्रतीतिमभिधायेदानीं विशेषतो निरूपयति—

**आत्मा चिद्वित्सुखात्माऽनुभवपरिचितः सर्वदेहादियन्ता सत्येवं मूढबुद्धिर्भजति ननु जनोऽनि-**

---

*तै. उ. २-१.

**त्यदेहात्मबुद्धिम् । बाह्योऽस्थिस्नायुमज्जापलरुधिरव-साचर्ममेदोयुगन्तः विण्मूत्रश्लेष्मपूर्णं स्वपरवपुरहो संविदित्वाऽपि भूयः ॥ ४ ॥**

आत्मा चिद्वित्सुखात्मा वर्तते । चित् चैतन्यं, वित् ज्ञानं, सुखं परमानन्दः, तदेतत्त्रयमप्यात्मा स्वरूपं यस्य स तथा । अथ न केवलं एवंविधात्मस्वरूपं उपनिषद्वाक्यैरेव ज्ञातव्यमित्याह— **अनुभवेति** । किंभूतः आत्मा?—**अनुभवपरिचितः** अनुभवेन परिचितः निरन्तराभ्यासेन ज्ञातः । अथ तमेवानुभवमाह— **सर्वदेहादियन्तेति** । सर्वे च ते देहादयश्च इन्द्रियप्राणास्तेषां यन्ता चालकत्वेन देहादिनियन्ता चिद्रूपः, इन्द्रियनियन्तृत्वेन संविद्रूपः, सुषुप्तावानन्दरूप इत्यवस्थात्रयेऽप्यनुभूयत इत्यर्थः । **अहो** इत्याश्चर्ये । **एवं सति मूढबुद्धिः जनः** अनित्यश्चासौ देहश्च तत्रात्मबुद्धिं देह एव आत्मेति मनुते । अथ देहोप्यात्मत्वकल्पनार्हो भविष्यतीति चेन्नेत्याह—**बाह्य** इति । देहः **बाह्य अस्थीनि** च **स्नायवश्च** सूक्ष्मशरीरमज्जा च **पलं** मांसं **रुधिरं** रक्तं **वसा** चर्म **मेदोयुक्** अन्तः **विण्मूत्रश्लेष्मपूर्णं** एवंविधं जुगुप्सास्पदं **स्वपरवपुः** स्वकीयं परकीयं वा शरीरं **विदित्वाऽपि भूयोभूयो देहात्मबुद्धिं भजत** इति महदाश्चर्यमित्यर्थः ॥ ४ ॥

---

अथ पुनराश्चर्यमेव दर्शयन्नाह—

**देहस्त्रीपुत्रमित्रानुचरहयवृषास्तोषहेतुर्ममेत्थं सर्वे स्वायुर्नयन्ति प्रथितमलममी मांसमीमांसयेह । एते जीवन्ति येन व्यवहृतिपटवा येन सौभाग्य-**

**भाजः तं प्राणाधीशमन्तर्गतममृतममुं नैव मीमांसयन्ति ॥ ५ ॥**

**अमी सर्वे** लोकाः **इह** अस्मिन् जगति **इत्थं मांसमीमांसया** मांसविचारेण **अलं** पूर्णं **स्वायुर्नयन्ति** स्वकीयमायुः परिकलयन्ति । किंभूतमायुः?—**प्रथितं** वंशविज्ञानादिगुणैः ख्यातमपीत्यर्थः । इत्थं, कथमित्याह—**देहेत्यादि** । **देहः** स्वदेहः **स्त्री पुत्रः मित्रं अनुचरः** सेवकः **हयः** अश्वः **वृषः** बलीवर्दः, एते मम **तोषहेतवो** भवन्ति इत्यभिमानेन । तथा एते पुष्टाः कृशा वेति भरणपोषणरक्षणादिभिः दृढप्रेमानुबन्धेन **स्वायुर्नयन्ति** देहभृतामिदमेव प्रयोजनमिति मत्वा व्यर्थं व्ययीकुर्वन्ति । अथ गूढमात्मतत्त्वं तैः परमप्रयोजनत्वेन कथं ज्ञेयं? तत्र तेषां नापराधः, किंतु तद्गतमौर्ख्यस्य । अथ तदेवाह—**एत इति** । **एते** देहस्त्रीपुत्रादयः **येन** कृत्वा **जीवन्ति**, तथा येन **व्यवहृतिपटवः** स्वस्वव्यवहारक्षमाः भवन्ति, तथा येन **सौभाग्यं सौन्दर्यं भजन्ति**—मृतशरीरे तथात्वादर्शनादित्यर्थः—**तं अन्तर्गतं** अन्तर्यामित्वेन स्थितं **प्राणाधीशं** प्राणमुख्यं **अमृतं** म्रियमाणेषु देहेषु अमरणशीलं **अमुं** अनुभवैकवेद्यं **नैव मीमांसयन्ति** न विचारयन्ति इति महदाश्चर्यमित्यर्थः ॥ ५ ॥

---

अथ देहात्मसाहचर्यं दृष्टान्तेन दर्शयति—

**कश्चित्कीटः कथंचित्पटुमतिरभितः कण्टकानां कुटीरं कुर्वंस्तेनैव साकं व्यवहृतिविधये चेष्टते यावदायुः । तद्वज्जीवोऽपि नानाचरितसमुदितैः कर्मभिस्स्थूलदेहं निर्मायात्रैव तिष्ठन्ननुदिनममुना साकमभ्येति भूमौ ॥ ६ ॥**

यथा **कश्चित् पटुमतिः कीटः कथंचित्** निजकफोद्भूतसूत्र-प्रयत्नैः **कण्टकानां कुटीरं कुर्वन् व्यवहृतिविधये** व्यवहार-सिद्धये **यावदायुश्चेष्टते** इतस्ततः पर्यटति, **तद्वज्जीवोपि नाना-चरितसमुदितैः** अनेकविधानि चरितानि क्रियमाणानि संचितानि तेभ्यः समुदितैः **प्रारब्धकर्मभिः स्थूलदेहं** शरीरं **निर्माय** विरचय्य ततः **अत्रैव** देहे **तिष्ठन् अमुना** देहेन **साकं** सहैव **अनुदिनं भूमावभ्येति** पर्यटति । अयमर्थः—कण्टककुटीरवदचेतनो देहः स्वतो न चलति, मृतशरीरे चलनादर्शनात् । अतः तस्य कश्चिच्चालको वक्तव्यः । स एव जीवः । तथा च रथाश्वन्यायवच्चालकव्यतिरेकेण देहो न चलति, तथा देहव्यतिरेकेण तस्य चालकत्वं न युज्यते इत्युभयोः साहचर्यम् ॥ ६ ॥

---

अथ प्राप्तोपि देहः पारमार्थिको न भवति, किंतु अविद्या-कल्पितत्वात् कृत्रिमोस्ति इति तदनुरूपं न कार्यमिति दृष्टान्तेन द्रढयति—

**स्वीकुर्वन्व्याघ्रवेषं स्वजठरभृतये भीषयन् यश्च मुग्धान् मत्वा व्याघ्रोऽहमित्थं स नरपशुमुखान् बाधते किंनु सत्त्वान् । मत्वा स्त्रीवेषधारी स्त्र्यह-मिति कुरुते किं नटो भर्तुरिच्छां तद्वच्छारीर आत्मा पृथगनुभवतो देहतो यः स साक्षी ॥ ७ ॥**

**यः** कश्चित्पुरुषः **स्वजठरभृतये** भिक्षया स्वोदरपूरणाय कृत्रिमव्याघ्रवेषं **स्वीकुर्वन्** तेन **मुग्धान्** बालिशांश्च **भीषयन्** त्रासयन्नास्ते **सः अहं व्याघ्रः इत्थं मत्वा नरपशुमुखान् सत्त्वान्** प्राणिनः **बाधते किंनु** । व्याघ्रवेषं कृत्रिमं जानन्

तूष्णीमास्ते व्याघ्रवेषानुरूपं कर्म करोतीत्यर्थः । अथैतदेव पुन-र्दृष्टान्तेन प्रकटयति—मत्वेति । स्त्रीवेषधारी नटः अहं स्त्रीति मत्वा भर्तुरिच्छां कुरुते किं स्त्रीवेषानुरूपैर्हावभावैरन्यान्पुरुषान् प्रलोभयति परं तु स्वयं स्त्रीति मत्वा रमणयोगेच्छां न करोति । तद्वच्छारीरः शरीरावच्छिन्न आत्मा देहतो देहानुभवेन पृथगस्ति यतः स साक्षी तटस्थः । तेन देहानुरूपा चेष्टा न कार्या, स्वरूपानुरूपमेव स्थातव्यमित्यर्थः ॥ ७ ॥

---

अथ बहुप्रकारैरात्मप्रतीतिं दर्शयन्त्याः श्रुतेः कौशलमाह—

**स्वं बालं रोदमानं चिरसमयसमुं[1] शान्तिमानेतुमग्रे द्राक्षं खार्जूरमाम्रं सुकदलमथवा योजयत्यम्बिकाऽस्य । तद्वच्चेतोऽतिमूढं बहुजननभवान्मौढ्यसंस्कारयोगात् बोधोपायैरनेकैरवशमुपनिषद्बोधयामास सम्यक् ॥ ८ ॥**

अम्बिका माता चिरतरसमयं रोदमानं स्वं बालं शान्तिमानेतुं तूष्णींभावं प्रापयितुं अस्य बालकस्य अग्रे द्राक्षं खार्जूरमाम्रं सुकदलं वा योजयति—येन केनाप्यभीष्टफलेनायं रोदनात् उपशमं प्राप्नोत्वित्यर्थः—तद्वद्बहुजननभवान्मौढ्यसंस्कारयोगात् अवशं चञ्चलं सत् अतिमूढमज्ञानोपहतं चेतः उपनिषत्सम्यक् यथाऽधिकारं अनेकैर्बोधोपायैः आत्मज्ञानोपायैः बोधयामास आत्मप्रतिपत्तौ बहुषूपायेषु प्रोक्तेषु सत्सु एकोपि प्रतिफलिष्यतीत्यर्थः ॥ ८ ॥

---

अथात्मनः सर्वापेक्षया प्रियत्वमाह—

---

[1] चिरतरसमयं.

**यत्प्रीत्या प्रीतिपात्रं तनुयुवतितनूजार्थमुख्यं स तस्मात् प्रेयानात्माऽथ शोकास्पदमितरदतः प्रेय एतत्कथं स्यात् । भार्याद्यं जीवितार्थी[1] वितरति च वपुः स्वात्मनश्श्रेय इच्छन् तस्मादात्मानमेव प्रियमधिकमुपासीत विद्वान्न चान्यत् ॥ ९ ॥**

**तस्मात्** वक्ष्यमाणाद्विषयजातात्सकाशात् **स आत्मा प्रेयान्** परमप्रेमास्पदं भवति । स कः? **तनुयुवतितनूजार्थमुख्यं** यद्विषयजातं तत् **यत्प्रीत्या प्रीतिपात्रं** भवति यस्य प्रीतिर्यत्प्रीतिस्तया सर्वं प्रीतिपात्रम् । अत्रायमर्थः—सुखदुःखान्यतरसाक्षात्कारो भोगः । स तु आत्मन एव युज्यते । अतो विषयभोगार्थं प्रवृत्तस्य प्रथममात्मप्रीतिरुद्दिष्टा । तया मूलभूतया उक्तं विषयजातं प्रीतिपात्रं भवति । तत्रापि प्रथमं तनुः शरीरं भोगसाधनत्वात् । ततो भोगेष्वन्तरङ्गा युवतिः । ततः उभयप्रीतिजन्यस्तनूजः पुत्रः । ततस्तन्निर्वाहकोऽर्थः द्रव्यम् । ततोऽप्यर्थसाध्यमन्यदन्नपानवस्त्रताम्बूलादिकं प्रीतिपात्रं भवति । तथा च मुख्या प्रीतिरात्मनः । तदधीना गौणी प्रीतिरन्येषामिति प्रत्यक्षसिद्धमेवास्ति । एवं यस्य मुख्या प्रीतिः स एवात्मा प्रेयानित्यर्थः । भवत्वात्मा प्रेयान्, तथाऽपि विषयजातमपि प्रीतिपात्रत्वादुपास्यमेवेत्यागतमित्याशङ्क्य विषयेषु प्रीतिपात्रत्वं प्रातिभासिकं, तत्र पारमार्थिकं दुःखपात्रत्वमेवास्तीत्याह—**इतरदिति** । इतरद्विषयजातं **शोकास्पदं** इत्यनुभवसिद्धम् । आदिमध्यावसानेषु यद्दुःखं तत् दुःखास्पदमेव । उक्तं च—

**अर्जने रक्षणे नाशे क्लेशदो विषयो भवेत् ।**
**सुखाय सज्जते तत्र मूढधीरिति विस्मयः ॥**

---

[1] जीवितार्थे.

इति । एवं अन्वयव्यतिरेकाभ्यां दुःखास्पदमेतद्विषयजातं **प्रेयः कथं स्यात्?** न स्यादेवेत्यर्थः । **तस्मात्** कारणात् **विद्वान्** पण्डितः **अधिकं** यथा भवति तथा **प्रियं** प्रियतममात्मानमेवोपासीत । न चान्यत् शरीराद्यम् । अथात्मनः सर्वेभ्योधिकप्रियत्वं प्रकटयति—**भार्याद्यमिति** । **जीवितार्थी**[1] पुमान् **भार्याद्यं वितरति** पुत्रवित्ताद्यमपि दत्वा स्वात्मानं रक्षति,

आत्मानं सततं रक्षेद्दारैरपि धनैरपि ।

इत्युक्तत्वात् । अथ शरीरेऽप्यात्मत्वनिषेधार्थमाह—**वपुरिति** । **आत्मनो** जीवस्य **श्रेयः** सुकृतातिशयं **इच्छन्वपुर्वितरति** भृगुपातेन गङ्गाप्रवेशेन क्षात्रधर्मेण वा शरीरमर्पयति । एवमात्यन्तिकं प्रियत्वं आत्मन एव, शरीरादीनामापेक्षिकमित्यर्थः ॥९॥

---

अथापेक्षिकं प्रियत्वं विविच्याह—

**यस्माद्यावत्प्रियं स्यादिह हि विषयतस्तावदस्मिन्प्रियत्वं यावद्दुःखं च यस्माद्भवति खलु ततस्तावदेवाप्रियत्वम् । नैकस्मिन् सर्वकालेऽस्त्युभयमपि कदाऽप्यप्रियोऽपि प्रियस्स्यात् प्रेयानप्यप्रियो वा सततमपि ततः प्रेय आत्माख्यवस्तु ॥ १० ॥**

इह विषयभोगे **यस्मात्** भार्यादिविषयतः सकाशात् **यावत्** सुखं भवति **तावदेवास्मिन्** विषये **प्रियत्वम्** । तथा **यस्मात्** भार्यादिविषयतः **यावद्दुःखं तावदेवास्मिन्नप्रियत्वम्** । एवं **उभयमपि** प्रियत्वं अप्रियत्वं **एकस्मिन्** विषये सर्वदा **नास्ति** यतः **कदाऽपि** अप्रि-

---

[1] जीवितार्थे.

**योऽपि** कार्यवशात् **प्रियः** स्यात् । तथा कदाऽपि **प्रेयानपि** भार्यादिविषयः निमित्तवशेन कालवशेन वा **अप्रियः** स्यात् । **ततः आत्माख्यवस्तु सततमपि प्रेयः** । अत्र मूलश्रुतिः—'न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति '* तथा 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा स योन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियꣳ रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति'† इति । भाष्यम्—याज्ञवल्क्यो मैत्रेयीं प्रति वदति—अरे मैत्रेयि पुत्राणां कामाय पुत्राः प्रिया न भवन्ति, किंतु आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति । प्रथमतः स्वीय आत्मा प्रियः स्यात्, तर्हि तदर्थं पुत्रा मृग्यन्ते, यथा पुत्राय कदलीफलेन भाव्यमिति रथ्यां गतस्य मुख्या पुत्रप्रीतिरेवोद्दिष्टा तदर्थं फलादेः । तद्वन्मुख्याऽऽत्मप्रीतिस्तदर्थं पुत्रादिप्रीतिः । एवमात्मप्रीतिशेषत्वेनैव सर्वेषां प्रीतिः । अथ तदेतदिति । तत्र वित्तपुत्रयोरेषणा अतिप्रेयस्त्वेन दुस्त्यजा । अथ तदेतदात्माख्यं वस्तु पुत्रात्प्रेयः—स्वभावतः पुत्रः प्रेयांस्तदपेक्षयाऽप्येतत्प्रेय इत्यर्थः । तथैव वित्तादपि प्रेयः । अथ किं प्रत्येकं वक्तव्यं—अन्यस्मादपि सर्वस्मात् प्रीतिपात्रात्प्रेयः । न हि केवलं वाङ्मात्रेणास्य प्रियत्वम् । अतोपि युक्तिमाह—अन्तरतरमिति । यद्यस्मात्कारणात्सोयमात्मा अन्तरतरं भवति । अन्तरतरमित्यान्तरतरं, आन्तरं पुत्रादि, ततोप्यान्तरम् । युक्त्यन्तरमाह—अन्यमिति । अथात्मनः सकाशादन्यं प्रियमिति ब्रुवाणं पुरुषं प्रति इति ब्रूयात् । इतीति किं तवाभिमतं ? यत् पुत्रवित्तादि प्रियं तद्रोत्स्यति शोकास्पदं भवति

---

*बृ. उ. ६-५-६.

†बृह. उ. ३-४-८.

उत्पत्तिस्थितिविनाशादिकालत्रयेऽपि दुःखहेतुत्वात् । एवं यस्माद्दुःखं भवति तत्कथं प्रियत्वेन गण्यते । तदुक्तं भगवता—

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ *

इति । यथा विषया दुःखहेतवः । ह इति किमर्थं ?—ईश्वरः किं तथैव स्यात् ? नैवेत्यर्थः । तस्मादात्मानमेव प्रियमुपासीत न पुत्रादि । एवं य आत्मानमेवोपास्ते अस्य ह इति निश्चयेन प्रियं पुत्रवित्तादिकं प्रमायुकं प्रमाविषयो न भवति न स्फुरति घृतास्वादे तैलभक्षणवदित्यर्थः । तदुक्तं भगवता—

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः* ॥ इति ॥१०॥

---

अथात्र कठशाखोपनिषदं संवादयति—

**श्रेयः प्रेयश्च लोके द्विविधमभिहितं काम्यमात्यन्तिकं च काम्यं दुःखैकबीजं क्षणलवविरसं तच्चिकीर्षन्ति मन्दाः । ब्रह्मैवात्यन्तिकं यन्निरतिशयसुखस्यास्पदं संश्रयन्ते तत्त्वज्ञास्तच्च काठोपनिषदभिहितं षड्विधायां च[1] वल्ल्याम् ॥ ११ ॥**

**लोके श्रेयः प्रेयश्च द्विविधमभिहितं** प्रोक्तम् । श्रेयः सुकृतसाधनं प्रेयः प्रेमास्पदम् । द्वेधा **काम्यमात्यन्तिकं च** । काम्यं श्रेयः फलोद्देशेन क्रियमाणमुपयाचितादिकं च, आत्यन्तिकं मोक्षसाधनम् । तथा प्रेयोपि काम्यं जायापुत्रादि, आत्यन्तिकं आत्माख्यम् । तत्र श्रेयः प्रेयो वा यत् **काम्यं** तत्

[1]पञ्च.

*गीता. ५-२२, ६-२२.

**दुःखैकबीजं** दुःखनिदर्शनम् । तर्हि तत्र लोकानां प्रवृत्तिः कथं दृश्यत इत्यत आह—**क्षणलवविरसं** शुक्तिकारजतवन्निमिषमात्रदृष्टिरम्यं तत् **मन्दाः** मूर्खाः **चिकीर्षन्ति** वाञ्छन्ति । तथा **आत्यन्तिकं** श्रेयः प्रेयो वा **ब्रह्मैव** यतो **निरतिशयसुखस्यास्पदं तत्त्वज्ञाः संश्रयन्ते** इत्येतत्प्रमेयं कठवल्ल्युपनिषदि अभिहितम् । अथ कठोपनिषदः बहुधा पठिताः सन्ति; प्रकृते एतत्प्रमेयं कुत्र स्थले निरूपितमस्तीत्याह—**षड्विधायां च वल्ल्याम्**[1] ॥ ११ ॥

---

अथ ब्रह्मैकत्वभावनया निष्पन्नस्यान्तर्निष्ठस्य स्वरूपं श्लोकद्वयेनाह—

**आत्माम्भोधेस्तरङ्गोऽस्म्यहमिति गमने भावयन्नासनस्थः संवित्सूत्रानुविद्धो मणिरहमिति वाऽस्मीन्द्रियार्थप्रतीतौ । दृष्टोऽस्म्यात्मावलोकादिति शयनविधौ मग्न आनन्दसिन्धावन्तर्निष्ठो मुमुक्षुः स खलु तनुभृतां यो नयत्येवमायुः ॥ १२ ॥**

**एवं** निरूपितप्रकारेण **यो मुमुक्षुरायुर्नयति** परिकलयति **सोन्तर्निष्ठ** इत्युच्यते । किं कुर्वन्नायुः परिकलयतीत्याह—आत्मेति । **गमने अहमात्माम्भोधेस्तरङ्ग इति भावयन्** स्थानान्तरचलने सति यथा तरङ्गो बाह्याभ्यन्तरतो जलमय एव सन्नितस्ततश्चलति एवमहं जीवोप्यगाधस्यात्मसमुद्रस्य तरङ्ग इवास्मीति भावयन् गच्छतीत्यर्थः, 'क्रीडन्नूर्मिरपामिव' इति श्रुतेः ।

---

[1] धायां पञ्चवल्ल्यां.

अथ **आसनस्थो** यथास्थितो मुमुक्षुः **संवित्सूत्रानुविद्धो मणिरहमस्मीति** भावयन्, संविद्रूपं यत्सूत्रं तेनानुविद्धः प्रोतः अहं जीवलक्षणो मणिः अस्मीति भावयन्नास्ते ;

**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।***

इति भगवद्वचनात् । एवं देहव्यापारेऽन्तर्निष्ठत्वं दर्शयन् इदानीं इन्द्रियव्यापारेऽन्तर्निष्ठत्वं निरूपयति—**दृष्ट** इति । **इन्द्रियार्थप्रतीतौ** सत्यां **आत्मावलोकात्** आत्मदर्शनान्ममेदानीं आत्मदर्शनं वृत्तमिति मत्वा **दृष्टोस्मीति** भावयन् । अथेन्द्रियोपरमेऽप्याह—**शयनविधाविति** । **शयनविधौ** सुषुप्तिकाले अहं **आनन्दसिन्धौ मग्नः** अभूवमिति भावयन् ॥ १२ ॥

---

अथ द्वितीयं श्लोकमाह—

**वैराजव्यष्टिरूपं जगदखिलमिदं नामरूपात्मकं स्यात् अन्तस्स्थप्राणमुख्यात् प्रचलति च पुनर्वेत्ति सर्वान् पदार्थान् । नायं कर्ता न भोक्ता सवितृवदिति यो ज्ञानविज्ञानपूर्णः साक्षादित्थं विजानन् व्यवहरति परात्मानुसन्धानपूर्वम् ॥ १३ ॥**

**ज्ञानं** शास्त्रोत्थं **विज्ञानं** अनुभवः ताभ्यां **पूर्णो यः** पुमान् भवति स **साक्षादित्थं** इति **विजानन् आत्मानुसन्धानपूर्वं व्यवहरति** । इतीति किमित्याशङ्क्याह—**वैराजेति** । अत्रैतदुक्तं भवति—आत्माकारान्तःकरणप्रवृत्तिः पुमान् यदा बाह्यदृष्टिर्भवति

*गीता. ७-७.

तदा **नामरूपात्मकं अखिलं** समग्रं विचित्रं **जगत् स्थूलसम-ष्टिरूपस्य विराजो** ब्रह्मणो **व्यष्टिरूपं** इति पश्यन्कुत्सानिन्दा-सूयाव्यतिरिक्तः सन् व्यवहरति, तथा व्यष्टिरूपं जगत् **अन्त-स्स्थप्राणमुख्यात्** चिद्रूपात् **प्रचलति** व्यापारं करोति, तथा तस्मादेव संविद्रूपात् **पदार्थान्वेत्तीति विजानन्** तदनुसन्धानपूर्व-कमेव व्यवहरति । तथा **अयं** आत्मा **सवितृवत्** सूर्यवत् **न कर्ता** चालकत्वेऽपि कर्तृत्वाभिमानशून्यः, तथा **न भोक्ता** पदार्थग्राहकत्वेऽपि भोक्तृत्वाभिमानशून्यः, तद्वद्व्यवहरतीत्यर्थः ॥१३॥

---

अथ द्विप्रकारं वैराग्यमाह—

**नैर्वेद्यं ज्ञानगर्भं द्विविधमभिहितं तत्र वैराग्य-माद्यं प्रायो दुःखावलोकाद्भवति गृहसुहृत्पुत्रवित्तैष-णादेः।अन्यज्ज्ञानोपदेशाद्यदुदितविषये वान्तवद्धेय-ता स्यात् प्रव्रज्याऽपि द्विधा स्यात् नियमितमनसां देहतो गेहतश्च ॥ १४ ॥**

**तत्र** विज्ञानोपाये **वैराग्यं द्विविधमभिहितं** प्रोक्तम् । अथ तस्य द्वैविध्यमाह—एकं **नैर्वेद्यं** अपरं **ज्ञानगर्भं** च । निर्वेदात् दुःखादुत्पन्नं नैर्वेद्यम् । तदेवाह—**आद्यं** नैर्वेद्यं **गृहसुहृत्पुत्रवित्तै-षणादेः प्रायः दुःखावलोकाद्भवति** । एतदग्रे दुःखजनकं भविष्यतीति वृश्चिकस्पर्शवत् दुःखदर्शनान्नाद्रियते, आदृतमपि त्य-ज्यते । अथ ज्ञानगर्भं वैराग्यमाह—**अन्यदिति** । **अन्यत्** द्वितीयं **ज्ञानोपदेशात्** भवति । प्रथमं दुःखदर्शनादित्युक्तं, अनन्तरं आत्मातिरिक्तं सर्वं दुःखरूपं इत्याद्युपदेशात् **उदितविषये**

सुहृत्पुत्रकलत्रादिके **वान्तवद्धेयता स्यात्** । यथा जुगुप्सया वान्ते जाते सति पुनस्तद्ग्रहणेच्छा नोदेति तद्वत् विषयवैरस्य-ज्ञानात्पुनर्विवेकिनः तद्ग्रहणेच्छा नोत्पद्यते । तदुक्तं वासिष्ठे—

**बुद्ध्वाऽप्यत्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः ।**
**बध्नाति वासनां भूयो नरो नासौ स गर्दभः ॥**

इति । अथ **प्रव्रज्याऽपि द्विधा** भवति । प्रथमं **गेहतः** गृहात्प्रव्रज्या । अपरा **देहतश्च** देहाभिमानशून्यत्वमेव देहतः प्रव्रज्येत्यर्थः ॥१४॥

---

अथ उपदेशप्रकारमाह—

**यः कश्चित् सौख्यहेतोस्त्रिजगति यतते नैव दुःख-स्य हेतोः देहेऽहन्ता तदुत्था स्वविषयममता चेति दुःखास्पदे द्वे । जानन् रोगाभिघाताद्यनुभवति यतो नित्यदेहात्मबुद्धिः भार्यापुत्रार्थनाशे विपदमथ परामे-ति नारातिनाशे ॥ १५ ॥**

**त्रिजगति** लोकत्रयेऽपि **यः कश्चि**त्पुरुषः **सौख्यहेतोः** सुखं मे भूयादिति **यतते** प्रयत्नं करोति, परं तु **दुःखस्य हेतोर्नैव** यतते । एवं सति या **देहे अहन्ता** तथा **तदुत्था** देहहितार्थमुत्पन्ना **स्वविषयममता चेति द्वे दुःखास्पदे** दुःखस्थाने भवतः । एवं **जान**न्नपि **नित्यदेहात्मबुद्धिः** पुरुषः **रोगाभिघातादि अनुभवति**; रोगो ज्वरादिः, अभिघातस्ताडनादिः । एवं देहोहमिति बुद्ध्या रोगाभिघातादि दुःखमनुभवति । तथा **भार्यापुत्रादिषु** ममताऽभिनि-

वेशेन तन्नाशे परां उत्कृष्टां विपदं एति प्राप्नोति। परं त्वहन्ता-ममताशून्यो दुःखी न भवति, यथा अरातेः वैरिणो नाशे सति ममताशून्यत्वाद्दुःखी न भवति । तथा च यत्राहन्ता ममता वा तत्रैव दुःखसाहचर्यमिति धूमवह्निसाहचर्यवन्निश्चितमित्यर्थः ॥ १५ ॥

---

अथ गृहाद्बहिः प्रव्रजितुमशक्तस्य विवेकिनोपि पुरुषस्य मोक्षोपायमाह—

**तिष्ठन् गेहे गृहेशोऽप्यतिथिरिव निजं धाम गन्तुं चिकीर्षुः देहस्थं दुःखसौख्यं[1] न भजति सहसा निर्ममत्वाभिमानः । आयात्यायास्यतीदं जलदपटलवद्यातृ यास्यत्यवश्यं देहाद्यं सर्वमेवं[2] प्रविदितविषयो यश्च तिष्ठत्ययत्नः ॥ १६ ॥**

**गृहेशो** गृहस्थः **गेहे तिष्ठन्नपि देहस्थं दुःखसौख्यं न भजति** न स्पृशति । क इव? गेहे तिष्ठन् **अतिथिरिव** मार्गस्थ इव। किंभूतोऽतिथिः?—**निजं धाम गन्तुं चिकीर्षुः** स्वं ग्रामं गन्तुमिच्छुः । क्षणमपि वासस्थलं प्राप्तस्य अस्मात् श्वो गन्तव्यमस्तीति कृतनिश्चयस्य यथा निस्स्पृहत्वं तथैव प्रकृतेऽपीत्यर्थः। किंभूतो गृहस्थः?—**निर्ममत्वाभिमानः** ममताभिमानशून्यः । तर्हि स्थितेषु गतेषु वा विषयेषु कथमुदासीन इत्याह—**आयातृ** आगमिष्यत् **देहादि** पदार्थजातमवश्यमायास्यत्येव । तथा **यातृ** गमिष्यद्वस्तु **यास्यत्येव** । किंवत्?—**जलदपटलवत्** जलदपटलं स्वप्रयत्नेन नायाति, विधिवशादायातमपि स्वप्रयत्नेन न निर्गच्छति। **एवं** इत्थं **प्रवि-**

---

[1] देहस्थान् दुःखसौख्यान्  [2] मेव, मेतत्

**दितविशयः** प्रविदितः अन्वयव्यतिरेकेण ज्ञातः विशयोऽभिप्रायो[1] येन स तथाभूतः पुरुषः **अयत्नः** सन् गृहे **तिष्ठति** ॥ १६ ॥

---

अथ प्रागुक्तां द्विविधां प्रव्रज्यां पृथगनुवदति—

**शक्त्या निर्मोकतः स्वाद्बहिरहिरिव यः प्रव्रजन् स्वीयगेहात् छायां मार्गद्रुमोत्थां पथिक इव मनाक् संश्रयेद्देहसंस्थाम् । क्षुत्पर्याप्तं तरुभ्यः पतितफलमयं प्रार्थयेद्भैक्ष्यमन्नं स्वात्मारामं प्रवेष्टुं स खलु सुखमयं प्रव्रजेद्देहतोऽपि ॥ १७ ॥**

**यः** पुरुषः **शक्त्या** वैराग्यबलेन **स्वीयगेहात्** सकाशात्सर्पो-यथा बलेन निर्गच्छति कञ्चुकं त्यक्त्वा **बहिः** याति तथा पुत्रकळत्राद्यनादिस्नेहानुबन्धेन दुस्त्यजादपि स्वगृहाद्बलेन प्रव्रजति, तथा यः **देहसंस्थां** जीवनोपायं **मनाक् संश्रयेत्** अनुष्ठान-सिद्धिप्रयोजनमात्रमिति कृत्वा आहारादिकसंस्थां श्रयेत् । क इव? **मार्गद्रुमोत्थां छायां पथिक इव** अग्रे गन्तव्यमस्तीति द्रुमच्छा-यायां क्षणं विश्रमते न तु तत्रास्थां करोति । अथ देहधार-णार्थं निर्वाहमाह—**तरुभ्यः** सकाशात् **क्षुत्पर्याप्तं भैक्ष्यमन्नं प्रार्थयेत्**, न संग्रहबुद्ध्या । किंभूतमन्नं?—**पतितफलमयं** वाता-दिना पतितानि यानि फलानि तन्मयं, न तु फलच्छेदेन । अथ देहाभिमानमपि त्यजेदित्याह—स पुरुषः **सुखमयं** सुखस्वरूपं **स्वात्मारामं प्रवेष्टुं देहतोपि प्रव्रजेत्**, देहाभिमानशून्यत्वमेव देहतः प्रव्रजनमित्यर्थः ॥ १७ ॥

---

[1] ज्ञातः विषयो.

इदानीं कामक्रोधलोभाः सर्वेषां पातहेतवो भवन्तीत्याह—

**कामो बुद्धावुदेति प्रथममिह मनस्युद्दिशत्यर्थ-जातं तद्गृह्णातीन्द्रियाख्यैस्तदनधिगमतः क्रोध आ-विर्भवेच्च । प्राप्तावर्थस्य संरक्षणमतिरुदितो लोभ एतत्त्रयं स्यात् सर्वेषां पात[1]हेतुस्तदिह मतिमता त्याज्यमध्यात्मयोगात् ॥ १८ ॥**

मूलभूतः **कामो**ऽभिलाषः **प्रथमं बुद्धावुदेति,** ततो **मनसि अर्थजातं** पदार्थजातं रूपरसादि, तन्मध्ये अमुकेन भवितव्य-मिति **उद्दिशति** संकल्पविषयं करोति, ततस्तत्पदार्थजातं **इन्द्रियाख्यैः** चक्षुरादीन्द्रियमुखैः **गृह्णाति** ग्रहीतुं यतते । एवं कृतेऽपि यत्ने **तदनधिगमतः** तेषां अनधिगमः अनेकान्तरायैरप्रा-प्तिस्तदा **क्रोध आविर्भवति,** 'कामात्क्रोधोभिजायते'* इति भग-वद्वचनात् । अथ दैववशात् **अर्थस्य प्राप्तौ** नानोपायैस्तद्रक्ष-णार्थं या **मतिः** स्वीयत्वाभिमानः स एव **लोभ उदितः** । एवं **एतत्त्रयं** कामक्रोधलोभरूपं **सर्वेषां** जीवानां **पातहेतुः** सकल-दुःखस्वरूपसंसारकारणमित्यर्थः । तस्मादेतन्**मतिमता** पुरुषेण **त्याज्यम्** । कुतः?—**अध्यात्मयोगात्** बुद्धेः परतो वर्तमानं अ-ध्यात्मं प्रत्यगात्मरूपं तस्य योगात् निरन्तरानुसन्धानरूपात्, अभ्यासयोगादित्यर्थः ॥ १८ ॥

———

एवं कामक्रोधादिदैत्यनिबर्हणेन देवत्वप्राप्तिरित्येतस्मिन्नर्थे साम-वेदोक्तं कल्माषसाम संवादयन्नाह—

---

[1]पाप.

*गीता. २-६२.

**दानं ब्रह्मार्पणं यत्क्रियत इह नृभिः स्यात् क्षमाऽक्रोधसंज्ञा श्रद्धाऽऽस्तिक्यं च सत्यं सदिति परमतः सेतुसंज्ञं चतुष्कम्। तत्स्याद्बन्धाय जन्तोरिति चतुर इमान् दानपूर्वैश्चतुर्भिः तीर्त्वा श्रेयोऽमृतं च श्रयत इह नरः स्वर्गतिं ज्योतिराप्तिम् ॥ ११ ॥**

**नृभि**र्मनुष्यैः **यद्ब्रह्मार्पणं** व्ययीक्रियते **तद्दान**मिति प्रोक्तम्। तथा या **अक्रोधसंज्ञा** सा **क्षमा** प्रोक्ता। तथा **आस्तिक्यं** अस्त्येवानेन प्रयोजनमिति विश्वासरूपिणी बुद्धिः **श्रद्धे**त्युच्यते। तथा **सत्यं सदिति** ब्रह्मेति चतुष्टयं मुक्तेः साधनम्। **अतः** एभ्यः **पर**मन्यद्विरुद्धस्वरूपं **चतुष्कं सेतुसंज्ञं** भवति। अदानं क्रोधः अश्रद्धा असत्यमिति यत् सेतुचतुष्टयं **तज्जन्तोः** प्राणिनः **बन्धाय** भवति। **इति** कारणात् **इमान्** पूर्वोक्तान् **चतुरः** सेतून् **दानपूर्वैश्चतुर्भिस्तीर्त्वा** उल्लङ्घ्य **नरः** पुरुषार्थार्थी **श्रेयः अमृतं स्वर्गतिं ज्योतिराप्तिं च श्रयते** प्राप्नोति; श्रेयः सुकृतातिशयं, अमृतं देवत्वं, स्वर्गतिं ऊर्ध्वगतिं, ज्योतिराप्तिं च प्राप्नोतीत्यर्थः। अत्र श्रुतिः—"हा उ ३। सेतूंस्तर ३। दुस्तरान् ३। दानेनादानं ३। हा उ ३। अहमस्मि प्रथमजा ऋता २३ स्या २३४५। हा उ ३। सेतूंस्तर ३। दुस्तरान् ३। अक्रोधेन क्रोधं २। हा उ ३। पूर्वं देवोभ्यो अमृतस्य ना २३ मा २३४५। हा उ ३। सेतूंस्तर ३। दुस्तरान् ३। श्रद्धयाऽश्रद्धां ३। यो मा ददाति स इ देवमा २३ वा २३४५ त्। हा उ ३। सेतूंस्तर ३। दुस्तरान् २। सत्येनानृतं ३। हा उ ३। अहमन्नमन्नमदन्तमा २३ द्मी २३४५। हा उ ३। वा। एषा गतिः ३। एतदमृतं

२ । स्वर्गच्छ ३ । ज्योतिर्गच्छ ३ । सेतूंस्तीर्त्वा चतुरा २३४९ः ॥"*
भाष्यं—तत्र विकल्पे हा उ गद्यते । 'अदीर्घे दीर्घवत्कुर्यात्' इत्यादि सामशिक्षोक्तमनुस्मरणीयम् । तत्र चतुरः सेतून् तरेत्यन्वयः । सेतुर्यथा जलप्रवाहभेदको भवति तथा अखण्डैकरसभेदकाश्चत्वारः सेतवो भवन्ति । तान् तरोल्लङ्घयेत्युपदिशति । किंभूतान् सेतून्? दुस्तरान् उपायान्तरेण दुःखेन तर्तुमशक्यान् । अथ सेतून् तथा तदुल्लङ्घनोपायांश्च कथयति—दानेनेति । तत्र ब्रह्मार्पणत्वेन यद्दीयते तद्दानमिति व्यपदेश्यम् । तदन्यद्देहभार्यापुत्राद्यर्थं यद्व्ययीक्रियते तत् अदानम् । एवं दानेन अदानमुल्लङ्घ्य देहाद्यर्थं व्ययीकृतमपि ब्रह्मार्पणमिति ज्ञात्वैव कुर्वित्यर्थः । तदुक्तं भगवता—

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्[1] ॥**

इति । अथ ज्ञानप्रकारमाह—अहमस्मीति । अहं ऋतस्य सत्यस्य ब्रह्मणः प्रथमजोस्मि । प्रथमं सर्वस्मात्प्राक् जात इति प्रथमजः । शबलत्वेनोपस्थितः देहभार्यापुत्रकलत्रादिष्वन्तर्गतो हिरण्यगर्भोऽहमस्मीति ज्ञात्वा ब्रह्मार्पणमेव सर्वमिति भावयेदित्यर्थः । तथा हा उ इत्यथवा । अक्रोधेन क्षमारूपेण क्रोधं द्वितीयसेतुं तर । तत्रोपायमाह—पूर्वमिति । देवेभ्यो मनश्चक्षुरादिभ्यः सकाशात्पूर्वं अमृतस्य ब्रह्मणो नाभिः बुद्धिरूपेण तारकोहमस्मि । बुद्धिपर्यन्तमेव क्रोधः, ततोग्रे ब्रह्मैवास्मीति भावय, 'यो बुद्धेः परतस्तु सः'[2] इति भगवदुक्तेः । तथा श्रद्धया कृत्वा अश्रद्धां तृतीयं सेतुं तर, अस्त्येव परमात्मा नापरं प्रयोजनमिति भाव-

*सामवेदे छन्दआर्चिके षष्ठाध्याये प्रथमखण्डे नवमी ऋक्.
[1]गीता. ९-२७.		[2]गीता. ३-४२.

यन् । तत्रोपायमाह—य इति । यः पुरुषः, मा इति मह्यं, ददाति सर्वं निवेदयति स इ स एव देवं आवाः प्राप्तवानित्यास्तिक्यविश्वासादश्रद्धां तृतीयसेतुं तरेत्यर्थः । अथ सत्येन ब्रह्मणा अनृतं प्रातिभासिकं विश्वाकारं तर । तत्रोपायमाह—अहमिति । अहं जीवरूपेणान्नं अद्मि । तथा प्रलये अन्नं अदन्तं भक्षयन्तं अग्न्याद्युपाधिभूतं सर्वं अग्नौ आहुतिप्रक्षेपवज्जुहोमि, 'योऽवशिष्येत सोस्म्यहम्' इति भावयेदित्यर्थः । एवमेषा उक्तप्रकारा गतिरुद्धारप्रकारः । एतदुक्तप्रकारममृतं मोक्षः । अनेनोपदेशेन स्वर्गच्छ । तथा ज्योतिरमृतं गच्छेत्युपदेशः ॥ १९ ॥

---

**अन्नं देवातिथिभ्योऽर्पितममृतमिदं चान्यथा मोघमन्नं यश्चात्मार्थं विधत्ते तदिह निगदितं मृत्युरूपं हि तस्य । लोकेऽसौ केवलाघो भवति तनुभृतां केवलादी च यः स्यात् त्यक्त्वा प्राणाग्निहोत्रं विधिवदनुदिनं योऽश्नुते सोऽपि मर्त्यः ॥ २० ॥**

देवातिथिभ्योऽर्पितं **अन्नं** अमृतं भवति । देवेभ्यो वैश्वदेवकर्मणि अतिथिभ्यश्च वैश्वदेवान्ते समागतेभ्यः अर्पितं यदन्नं तदमृतं स्यात् इत्यर्थः । **अन्यथा** एतदकरणे देवतातिथिवञ्चनेन **मोघं** निष्फलं **अन्नं** भवति । **यश्च आत्मार्थं** पिण्डपोषणार्थं अन्नं **विधत्ते तत्तस्य मृत्युरूपं** परिणामे विषोपमं भवति असाक्षिकत्वात् । एवं **यः** पुमान् केवलं अत्तीति **केवलादी केवलाघो भवति** केवलं अघरूपो भवतीत्यर्थः । अत्र श्रुतिः—

'मोघमन्नं विन्दते अप्रचेताः। सत्यं ब्रवीमि वध इत्स तस्य। नार्यमणं पुष्यति नो सखायम्। केवलाघो भवति केवलादी'[1]॥२०॥

---

**लोके भोजः स एवार्पयति गृहगतायार्थिनेऽन्नं कृशाय यस्तस्मै पूर्णमन्नं भवति मखविधौ जायतेऽजातशत्रुः। सख्ये नाऽन्नार्थिने योऽर्पयति न स सखा सेवमानाय नित्यं संसक्तायान्नमस्माद्विमुख इव परावृत्तिमिच्छेत् कदर्यात्॥ २१ ॥**

**लोके स एव भोजो** दाता यः गृहमागताय **अर्थिने अन्नं अर्पयति**—किंभूताय? **कृशाय** दरिद्रपीडिताय। अथ तस्य फलमाह—**तस्मै** दात्रे **मखविधौ** लौकिके अलौकिके वा यज्ञे **अन्नं पूर्णं भवति**। तथा अयं दाता **अजातशत्रुः** भवति। यस्मादन्नदानेन सर्वभूतान्तरस्थाः सर्वे देवाः संतृप्ताः भवन्ति अतो वैरिणोपि मित्राणि भवन्तीत्यर्थः। अथ व्यतिरेकमप्याह—**सख्य** इति। यः पुरुषः **अन्नार्थिने सख्ये** सखिभूताय स्वर्गप्रापकाय **नार्पयति स सखा न भवति**, किंतु पिशुन एवेत्यर्थः। किंभूताय?—**नित्यं सेवमानाय** आश्रिताय, तथा **संसक्ताय** अनन्यशरणाय, अनेन सर्वभूतेष्वपि अन्नदानं न करोतीत्युक्तं भवति। अथ याचकोऽपि **अस्मात् कदर्यात्** कृपणात् **विमुख** इव पराङ्मुख इव **परावृत्तिं इच्छेत्**, पुनस्तं न याचयेत्, अन्यं दातारं गच्छेदित्यर्थः। श्रुतिरपि—

---

[1] तै. ब्रा. २-८-८.

स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय ।
अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम् ॥
न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः ।
अपास्मात्प्रेयान्न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत्[1] ॥

भाष्यं—अन्वयमुखेन प्रशंसति—स इत् स एव भोजो दाता । यः गृहवे प्रतिग्रहीत्रे तत्राप्यन्नकामाय चरते गृहमागताय दारिद्र्येण कृशाय एतादृशायातिथयेऽन्नं ददाति । यामहूतौ यामा गन्तारो देवा आहूयन्तेऽत्रेति यामहूतिर्यज्ञस्तस्मिन् । तस्मै दात्रे फलं अरं अलं पर्याप्तं भवति कामप्रदं भवतीत्यर्थः । उत अपि च अपरीषु अन्यासु शात्रवीसेनासु सखायं कृणुते, तस्य सर्वे सखाय एव न शत्रव इत्यर्थः । अथ व्यतिरेकान्वयाभ्यामाह— स पुरुषः सखा न भवति यः सचाभुवे सर्वदा सहभवनशीलाय तथा सचमानाय सेवमानाय उपसर्जनीभूताय सख्ये जनाय पित्वः पितूनन्नानि न ददाति न प्रयच्छति स सुहृन्न भवतीत्यर्थः । अस्माददातुः सख्युः सः अपप्रेयात् अपगच्छेत् । यद्येनं परित्यज्य गच्छेत्तदोकः सद्म नास्ति न भवति । अरण्यतुल्यम् । स पुरुषः अन्यं पृणन्तं अन्नदातारं अरणं शरणं इच्छेत् कामयेत् ॥ २१ ॥

---

स्वाज्ञानज्ञानहेतू जगदुदयलयौ सर्वसाधारणौ स्तः जीवेष्वासवर्णगर्भं श्रुतय इति जगुर्हूयते स्वप्रबोधे । विश्वं ब्रह्मण्यबोधे जगति पुनरिदं हूयते ब्रह्म यद्वत् शुक्तौ रौप्यं च रौप्येऽधिकरणमथवा हूयतेऽन्योन्यमोहात् ॥ २२ ॥

---

[1] ऋग्वे. १०-११७-३, ४.

**जगदुदयलयौ स्वाज्ञानज्ञानहेतू स्तः** । जगतः नामरूपात्मकस्य चराचरस्योदयः प्रादुर्भावः, लयश्च प्रलयः, एतौ स्वस्याज्ञानं च ज्ञानं च स्वाज्ञानज्ञाने ते एव हेतू कारणे ययोस्तौ। स्वशब्देनात्मा, तथा च आत्माज्ञानाज्जगत्प्रादुर्भावः, तथा आत्मज्ञानाज्जगत्प्रलय इत्यर्थः । एतौ **आस्वर्णगर्भं** हिरण्यगर्भं मर्यादीकृत्य **सर्वजीवेषु साधारणौ** । हिरण्यगर्भोऽपि स्वस्वरूपं विस्मृत्याहमीश्वरो नियन्तेत्यभिमानं वहति । तदा प्रादुर्भूतं विश्वाभासं पश्यति । अथ यदा ब्रह्माहमस्मीति स्वरूपे लीनो भवति तदा विश्वाभासविलयः **इति श्रुतयो जगुः** । एवमेव जीवेष्वपि इति प्रकटयन्नाह—**हूयत** इति । **स्वप्रबोधे** ब्रह्माकारान्तःकरणवृत्तौ जातायां **विश्वं ब्रह्मणि हूयते** अग्नावाहुतिप्रक्षेपवत् भस्मसात्क्रियते, तदा देहाभिमानित्वाभावात् । **अबोधे** सति **इदं ब्रह्म जगति हूयते** नास्त्येवेति क्रियते । तत्र दृष्टान्तमाह—**यद्वदिति** । भ्रमनिवृत्तिकाले **शुक्तौ रौप्यं हूयते** । तथा प्रतिभासकाले तु **अधिकरणं** शुक्तिः **रौप्ये हूयते** । कस्मात् ?—**अन्योन्यमोहात्**, शुक्त्यज्ञाने रजतोदयः रजताज्ञाने च **शुक्तिरित्यर्थः** ॥ २२ ॥

---

ननु नामरूपात्मकस्य दृश्यमानस्य जगतः कर्ता उपादानकारणं किं स्यादिति विचार्यमाणे, न तावच्छुद्धस्यानीहस्य ब्रह्मणस्तथात्वमुपपद्यते । अथ तदतिरिक्तस्य तथात्वकल्पने किमसद्वा सद्वा कल्पनीयं? तत्राद्यं निषेधति—

**तुच्छत्वान्नासदासीत् गगनकुसुमवद्भेदकं नो सदासीत् किं त्वाभ्यामन्यदासीत् व्यवहृतिगतिसन्नास लोकस्तदानीम् । किं त्वर्वागेव शुक्तौ रजतवदपरो**

**नो विराट् व्योमपूर्वः शर्मण्यात्मन्यथैतत् कुहकसलिलवत्किं भवेदावरीवः ॥ २३ ॥**

तत्र तावज्जगदुपादानकारणं **असन्नासीत्** । कुतः? तस्य असतो **गगनकुसुमवत्तुच्छत्वात्** अत्यन्तासत्त्वेन उपादानकारणत्वानर्हत्वात् । अथ नापि **भेदकं** **सद्वाच्यं**, परमार्थतो ब्रह्मणः सकाशात् अन्यस्य भेदजनकस्यासम्भवात् । अतः परिशेषात् सदसद्विलक्षणमासीदित्याह—**किंत्विति** । **आभ्यां** सदसद्भ्यां **अन्यत्** विलक्षणं **आसीत्** इत्युक्तं भवति । ननु तर्हि ब्रह्मातिरिक्तं परमार्थसन्मास्तु, तथाऽपि व्यवहारे सदासीदेवेति चेत्तदपि निषेधति—**व्यवहृतीति** । **तदानीं** व्यवहारस्याप्यभावादित्यर्थः । तदानीमिति पदेन सृष्टेः प्राङ्नासीत्, किंतु परिशेषात् मध्ये एवोत्पन्न इत्युक्तं भवति । ननु तदानीमाकारवन्नास्ति तथाऽपि व्योमासीत् तथा महाभूतारब्धो विराडप्यासीत् इति चेत् तदपि निषेधति—**नो विराट् व्योमपूर्व इति** । व्योम पूर्वं कारणीभूतं यस्य स तथा । अथास्तां मध्य एवोत्पन्नं, तस्य पृथग्भूतत्वेन ब्रह्मण आवरकत्वं भवेत् तदपि दृष्टान्तेन निषेधति—**शर्मणीति** । **शर्मणि** **शुद्धे** **ब्रह्मणि** **तत्किमावरीवः** आवृणोतीत्यावरीवः, आवरकं न भवेदित्यर्थः । किंवत्? **कुहकसलिलवत्** मायया स्थले जलभ्रममुत्पादयतः कुहकस्यैन्द्रजालिकस्य क्षणमुत्पन्नं सलिलं भ्रमनिवृत्तौ सत्यां किं स्थलस्यावरणं भवेत्? नैव । तद्वत् प्रकृतेऽपीत्यर्थः । अत्र श्रुतिः—

**नासदासीन्नो सदासीत्तदानीम्**
**नासीद्रजो नो व्योमा परो यत् ।**
**किमावरीवः कुहकस्य शर्मन्**
**अम्भः किमासीद्गहनं गभीरम् ।**[1] ॥ २३ ॥

---

[1] ऋग्वे. १०-१२९-१.

अथ वस्तुतो ब्रह्मरूपाणामेव जीवानां बन्धमोक्षावप्यज्ञानकृतावित्याह—

**बन्धो जन्मात्ययात्मा यदि न पुनरभूत्तर्हि मोक्षोऽपि नासीत् यद्वद्रात्रिर्दिनं वा न भवति तरणौ किं तु दृग्दोष एषः। अप्राणं शुद्धमेकं समभवदथ तन्मायया कर्तृसंज्ञं तस्मादन्यच्च नासीत् परिवृतमजया जीवभूतं तदेव॥ २४ ॥**

पुनर्जन्मात्ययात्मा जन्ममृत्युरूपो यदि बन्धो नाभूत् तर्हि मोक्षोपि नासीत्। तदुक्तम्—

बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः।[1]
तथा द्वितीयस्याभावात्को बद्धः कश्च मुच्यते॥

इति। अत्र दृष्टान्तमाह—**यद्वदिति**। **तरणौ** सूर्ये **रात्रिर्दिनं वा न भवति** न युज्यते। कथं तर्हि रात्रिदिनव्यवहारो भवतीत्याह—**एष दृग्दोषः** जगच्चक्षुषां सूर्यादर्शनदर्शनमेव रात्रिदिनव्यवहारनिमित्तमापेक्षिकमित्यर्थः। अथ जीवत्वोपाधिनिमित्तमाह—**अप्राणमिति**। 'अप्राणो ह्यमनाः शुभ्रः'[2] इति शुद्धस्य ब्रह्मणः प्राणसंबन्धाभावादप्राणं **एकं** अद्वितीयं **तन्मायया कर्तृसंज्ञं** हिरण्यगर्भाख्यं अभवत्। **तस्मादन्यत् नासीत्**। **तदेवाजया** मायया **परिवृतं** सत् **जीवभूतं** जीवत्वं प्राप्तं न पृथक्कश्चिज्जीवोस्तीत्यर्थः॥ २४ ॥

---

[1] न स्वभावतः. [2] मु. २-१-२.

अथ पूर्वमुक्तं तदानीं जगन्नासीदिति । तर्हि पुनः कथमुत्पन्नमित्याशङ्क्याह—

**प्रागासीद्भावरूपं तम इति तमसा गूढमस्मादतर्क्यं क्षीरान्तर्यद्वदम्भो जनिरिह जगतो नामरूपात्मकस्य । कामाद्धातुः सिसृक्षोरनुगतजगतः कर्मभिः संप्रवृत्तात् रेतोरूपैर्मनोभिः प्रथममनुगतैः संततैः कार्यमाणैः ॥ २५ ॥**

जगदुपादानभूतं **भावरूपं तम इति** अज्ञानं आसीत् । तेन **तमसा गूढं** आच्छादितं **अस्मात्** कारणात् **अतर्क्यं** अज्ञायमानं—किंवत् ?—**यद्वत्क्षीरान्तर्गतमम्भः** उदकं क्षीरान्तर्वर्तमानमपि न ज्ञायते तद्वत् । तत इह अस्मिन्नज्ञाने अस्य **नामरूपात्मकस्य** जगतः **जनिः** उत्पत्तिः । ननु यद्यपि बीजान्तर्गतो वृक्षस्तिष्ठति, तथाऽपि कारणसामग्रीव्यतिरेकेण नोत्पद्यते, अत आह—**कामादिति । सिसृक्षोः** स्रष्टुमिच्छतः **धातुः** परमेश्वरस्य **कामात्** इच्छातः । साऽपि कुत इत्यत आह—किंभूताद्धातुः कामात् ?—**अनुगतजगतः कर्मभिः संप्रवृत्तात्** । अनुगतं अनादित्वेन वर्तमानं यज्जगत् तस्य कर्मभिः प्रेरितात् । अथ तान्यपि कुत इत्याह—**रेतोरूपैः** बीजभूतैः **मनोभिः प्रथमं** अनादिप्रवाहेण **अनुगतैः** सद्भिः **सन्ततैः कार्यमाणैः** निष्पादितैः कर्मभिरित्यर्थः । एतदर्थे श्रुतिरपि—

**तम आसीत्तमसा गूळहमग्रेऽप्रकेतं सलिलं सर्वमा इदम् ।**
**तुच्छेनाभ्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकम् ॥**

**कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ।**
**सतो बन्धुमसति निरविन्दन्हृदि प्रतीष्या कवयो मनीषा ॥**[1]

भाष्यं—ननूक्तप्रकारेण यदि पूर्वमिदं जगत् नासीत् कथं तर्हि तस्य जन्म? जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात्, कारंक च कारणावान्तरविशेष इति कारकस्य सतो नियतपूर्वक्षणवर्तित्वस्यावश्यंभावित्वात् । अथैतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते । कथं तस्य जन्म? अत आह—तमसा गूढमग्र इति । अग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत् तमसा गूढम् । यथा नैशं तमः सर्वं पदार्थजातमावृणोति तद्वदात्मतत्त्वस्यावरकत्वान्मायापरपर्यायं भावरूपाज्ञानं अत्र तम इत्युच्यते । तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति । आच्छादकात्तस्मात्तमसो नामरूपाभ्यां यदाविर्भवनं तदेव तस्य जन्मेत्युच्यते । ननु कारणभूते तमसि तज्जगदात्मकं कार्यं विद्यते चेत्तर्हि कथं 'नासीद्रजः' इत्यादिना तन्निषेधस्तत्राह—तम आसीदिति । तमो भावरूपाज्ञानं मूलकारणं, तद्रूपतां तदात्मतां यतः सर्वं जगत् प्राप्तमासीदतो निषिध्यत इत्यर्थः । ननु आवरकत्वादावरणं तमः कर्तृ, आवार्यं जगत्कर्म, कथं कर्तृकर्मणोस्तादात्म्यं? तदाह—अप्रकेतमिति । अप्रकेतमप्रज्ञायमानम् । अयमर्थः—यद्यपि जगतः तमसः कर्मकर्तृभावो यौक्तिको वर्तते, तथाऽपि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायते इति तादात्म्यवर्णनम् । अत एव मनुना स्मर्यते—

**आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।**
**अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः**[2] **॥**

---

[1] ऋग्वे. १०–१२८–३, ४. [2] मनु. १-५.

कुतो वा न प्रज्ञायत इत्यत आह—सलिलमिति । लुप्तोपमा—सलिलमिव, यथा क्षीरेण अविभागापन्नं नीरं दुर्विज्ञानं तथा तमसा अविभागापन्नं जगत् । ननु विविधविचित्रभूयसः प्रपञ्चस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येव अभिभवः ? तथा तमोऽपि क्षीरवद्बलवदित्येवोच्यते । तर्हि दुर्बलस्य जगतः सर्गसमये नोद्भवसंभव इत्यत आह—तुच्छेनेति । आ समन्ताद्भवतीत्याभु तुच्छेन तुच्छकल्पेन सदसद्विलक्षणेन भावरूपाज्ञानेन अपिहितं आच्छादितमासीत्, एकं एकीभूतं कारणेन तमसा अविभागतां प्राप्तमपि तत्कार्यजातम् । तपसः पर्यालोचनरूपत्वं चान्यत्राम्नायते—'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः'* इति । अथ 'कामस्तदग्रे' इति । ननूक्तरीत्या यदीश्वरस्य पर्यालोचनं जगतः पुनःपुनरुत्पत्तौ कारणं तदेव वा किंनिबन्धनमित्यत आह—कामस्तदग्र इति । अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत सम्यगजायत, सिसृक्षा जातेति भावः । ईश्वरस्य सिसृक्षा वा किंहेतुकेत्यत आह—मनस इति । मनसोऽन्तःकरणस्य संबन्धि, वासनाशेषेण मायायां विलीनेऽन्तःकरणे समवेतम् । सामान्यापेक्षमेकवचनं, सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः । एतेनात्मनो गुणाधारत्वं प्रत्याख्यातम् । तादृशं रेतः भाविनः प्रपञ्चस्य बीजभूतं प्रथमं अतीते कल्पे प्राणिभिः कृतं पुण्यात्मकं कर्म यत् यतः कारणात् सृष्टिसमये आसीत् अभवत् । भूष्णु वर्धिष्णु अजायत परिपक्कं सत् फलोन्मुखमासीदित्यर्थः । तत् ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा अजायतेत्यर्थः । तस्यां च जातायां स्रष्टव्यं पर्यालोच्यते । अतः सर्वं जगत्सृजति । तथा चाम्नायते—'सोकामयत ।

---

*मुण्ड. १-१-९.

बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किंच '* इति । अथो विद्वदनुभवमप्यनुग्राहकत्वेन प्रमाणयति—सत इति । सतः सत्त्वेनेदानीमनुभूयमानस्य सर्वस्य जगतो बन्धु बन्धकत्वे हेतुभूतं कल्पान्तरे प्राण्यनुष्ठितं कर्मसमूहं कवयः क्रान्तदर्शिनः योगिनः हृदि हृदये निरुद्धया मनीषया बुद्ध्या प्रतीष्य विचार्य असति सद्विलक्षणे अव्याकृते कारणे निरविन्दन् निष्कृष्यालभन्त विविच्याजानन्नित्यर्थः ॥२५॥

---

मायाया उत्कर्षं वर्णयति—

**चत्वारोऽस्याः कपर्दा युवतिरथ भवेन्नूतना नित्यमेषा माया वा पेशला स्यादघटनघटनापाटवं याति यस्मात् । स्यादारम्भे घृतास्या श्रुतिभववयुनान्येवमाच्छादयन्ती तस्यामेतौ सुपर्णाविव परपुरुषौ तिष्ठतोऽर्थप्रतीत्या ॥ २६ ॥**

**अस्याः** पूर्वोक्तमायायाः **चत्वारः कपर्दाः** उत्कर्षाः सन्ति । अथ तानेवाह—**युवतिरिति** । **एषा माया नित्यं नूतना** कदाऽपि स्थविरा न भवति, अतो **युवतिर्भवेत्** देहादिवार्धक्येऽपि सा तरुण्येवास्ति । अयमेक उत्कर्षः । तथा इयं **पेशला स्यात्** । किंनाम पेशलत्वं ? आह—पेशला कुशलेत्यर्थः । तदेवाह—**यस्मादिति** । **यस्मात्** कारणादियं **अघटनघटनापाटवं** विक्षेपे कौशलं **याति** । अयं द्वितीय उत्कर्षः । तथेयं **आरम्भे** उपक्रमे **घृतास्या** घृतवन्मृष्टं आस्यं मुखं यस्याः सा

---

* तै. उ. २-६.

तथा, यस्य कस्याप्यारम्भे मृष्टं दर्शयति, परिणामे विषोपम-मित्यर्थः । अयं तृतीय उत्कर्षः । अथेयं **श्रुतिभववयुनानि** श्रुतिभिः उपनिषद्भागैः प्रतिपादितानि आत्मज्ञानानि आवरणशक्त्या **आच्छादयन्ती** । अयं चतुर्थ उत्कर्षः । **तस्यां** चतुरुत्कर्ष-वत्यां मायायां **एतौ परपुरुषौ**, परः परमात्मा, पुरुषो जीवः, एतौ **सुपर्णौ** पक्षिणाविव तिष्ठतः । केन प्रकारेण ज्ञाता-वित्यत आह—**अर्थेति** । **अर्थप्रतीत्या** पदार्थभासकत्वेन । माया तु तिरोधानकर्त्री, सकलभासकत्वं परमात्मन एवेत्यर्थः ॥ २६ ॥

---

इदानीं जीवपरमात्मनोः परमार्थतः एकत्वमाह—

**एकस्तत्रास्त्यसङ्गस्तदनु तदपरोऽज्ञानसिन्धुं प्र-विष्टो विस्मृत्यात्मस्वरूपं स विविधजगदाकारमा-भासमैक्षत् । बुद्ध्याऽन्तर्यावदैक्षद्विसृजाति तमजा सोऽपि तामेवमेकः तावद्विप्रास्तमेकं कथमपि बहुधा कल्पयन्ति स्ववाग्भिः ॥ २७ ॥**

तत्र तयोः सुपर्णयोर्मध्ये **एकः** परमात्मा **असङ्गोऽस्ति** । **तदनु तदपरो** जीवः **अज्ञानसिन्धुं प्रविष्टः** । **स** च **आत्म-स्वरूपं विस्मृत्य विविधजगदाकारं आभासं** प्रातिभासिकं **ऐक्षत्** दृष्टवान् । ततः **बुद्ध्या** निश्चयात्मिकया **अन्तः याव-दैक्षत् तावत् अजा** माया तं जीवं **विसृजाति** । तथा **सोऽपि** जीवः **तां** मायां विसृजाति । अन्तर्दृष्ट्या विचार्यमाणे उभयो-रसंस्पर्शे अखण्डत्वमेवानुभूयते । तर्हि सुपर्णद्वयकल्पना कुत इत्यत आह—**विप्रा** इति । **तमेकमेवात्मानं विप्राः** श्रुतिज्ञाः **कवयः**

शिष्यबोधादिव्यवहृतिविषये वाग्भिः वचोभिः अनेकधा कल्पयन्ति, न त्वनुभवत इत्यर्थः । एतदर्थे श्रुतिः—

चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।
तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम् ॥
एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे ॥[1]

इति ॥ २७ ॥

---

अथ जन्ममरणानुबन्धेन स्वरूपं निरूपयति—

**नायाति प्रत्यगात्मा प्रजननसमये नैव यात्यन्तकाले यत् सोऽखण्डोऽस्ति लैङ्गं मन इह विशति प्रव्रजत्यूर्ध्वमर्वाक् । तत् कार्श्यं स्थूलतां वा न भजति वपुषः किं तु संस्कारजातं तेजोमात्रा गृहीत्वा व्रजति पुनरिहायाति तैस्तैः सहैव ॥ २८ ॥**

**प्रजननसमये** गर्भाविर्भावे सति **प्रत्यगात्मा नायाति** गर्भे न प्रविशति । अथ **अन्तकाले** देहावसानसमये **न याति** न गच्छति । **यत्** यतः **सः** आत्मा **अखण्डः** अपरिच्छिन्नोऽस्ति, यतः प्रवेशनिर्गमौ हि परिच्छिन्नस्यैव भवतः । तर्हि लोके जन्ममरणादिव्यवहारः कस्येत्याह—**लैङ्ग**मिति । **लैङ्गं** पञ्चदशकलोपेतं **मनः इह** लोके **ऊर्ध्वं** देवलोके **अर्वाक्** मनुष्यलोके वा गर्भे **विशति**, तथा **प्रव्रजति** च, न प्रत्यगात्मा । अथ **तत्** लिङ्गदेहोपेतं मनः **वपुषः** स्थूलदेहस्य **कार्श्यं** कृशतां **स्थूलतां** पुष्टत्वं **वा न भजति,** रोगाद्युपहतौ कृशतां तथा पाटवे पुष्टत्वं

---

[1] ऋ. १०-११४-३, ४.

वा न भजति। एवं तन्मनः वपुषः उत्क्रान्तौ पूर्वसंस्कारजाते तथा तेजोमात्राः प्रत्यक् इन्द्रियैः सह प्राणान् गृहीत्वा व्रजति गच्छति । तथा पुनः उत्पत्तिसमये तैस्तैः संस्कारजातैः सह इह गर्भे आयाति ॥ २८ ॥

———

अथ प्रवेशनिर्गमौ मनस एव संभवतो नात्मन इत्यत्र ऋक्शाखीयां श्रुतिमाख्यायिकापूर्विकां संवादयति—

**आसीत् पूर्वं सुबन्धुर्भृशमवनिसुरो यः पुरोधाः समातेः ब्राह्मयात् कूटाभिचारात् स खलु मृतिमितस्तन्मनोऽगात् कृतान्तम्। तद्भ्राता श्रौतमन्त्रैः पुनरनयदिति प्राह सूक्तेन वेदः तस्मादात्माभियुक्तं व्रजति ननु मनः कर्हि चिन्नान्तरात्मा॥**

सुबन्धुनामा अवनिसुरो ब्राह्मणः पूर्वं भृशमत्यर्थं सर्वोत्कर्षेणासीत् । किंभूतः? समातेः पृथ्वीभुजः पुरोधाः पुरोहितः। अथ खलु इति श्रूयते—स ब्राह्मयात् ब्रह्मकृतात् कूटाभिचारात् कापट्येन रचितादभिचारादस्त्रप्रयोगात् मृतिमितः मरणं प्राप्तः। तन्मनः कृतान्तं यमलोकं अगात् । अथ तस्य सुबन्धोः भ्राता श्रौतमन्त्रैः कृत्वा तद्गतं मनः पुनरनयत् आनीतवान् इति सूक्तेन वेदः प्राह । तस्मात् कारणात् आत्माभियुक्तं आत्मप्रतिबिम्बाभियुक्तं सत् मन एव व्रजति, परं तु अन्तरात्मा न व्रजति । एतन्मूलभूता श्रुतिरपि अष्टमाष्टके—

**यत्ते यमं वैवस्वतं मनो जगाम दूरकम्।**
**तत्त आवर्तयामसीह क्षयाय जीवसे[1] ॥**

---

[1]ऋ. १०-५८-१.

भाष्यम्—अत्रेयमाख्यायिका—पूर्वं सनातिसंज्ञस्य राज्ञो गृहे बन्धुः सुबन्धुः श्रुतबन्धुः विप्रबन्धुरिति चत्वारो भ्रातरः पुरोहिता आसन् । ते द्विपन्नाशाय राज्ञाऽऽदिष्टं आभिचारिकं न कुर्वन्तीति राज्ञा बहिष्कृताः । ततोऽन्यन्मायावि पुरोहितद्वयं कृतम् । तेन बन्ध्वादयश्चत्वारः क्षुब्धाः सन्तो राज्ञ आभिचारिकं कर्तुं प्रवृत्ताः । तच्छ्रुत्वा मायाविनौ पुरोहितौ च आभिचारिककर्मणा सुबन्धुं जघ्नतुः । ततः सुबन्धोर्भ्रातरः तं पुनर्जीवितुं वक्ष्यमाणैः श्रौतमन्त्रैः उपायं चक्रुः—यत्ते यममिति । भो सुबन्धो ! यत्ते मनः वैवस्वतं विवस्वतः सूर्यस्य पुत्रं यमं प्रति दूरं जगाम तत्ते मनः आवर्तयामसि ततो निवर्तयामः । किमर्थं? इह लोके क्षयाय निवासाय जीवसे जीवनाय । इति प्रथमा ॥

अथ द्वितीया—

**यत्ते दिवं यत्पृथिवीं मनो जगाम दूरकम् ।**
**तत्त आवर्तयामसीह क्षयाय जीवसे[1] ॥**

तथा—

**यमादहं वैवस्वतात्सुबन्धोर्मन आभरम् ।**
**जीवातवे न मृत्यवेऽथो अरिष्टतातये[2] ॥ २९ ॥**

---

इदानीं चलनादिधर्माः मनस एव नात्मन इति दर्शयति—

**एको निष्कम्प आत्मा प्रचलति मनसा धावमानेन तस्मिन् तिष्ठन्नग्रेऽथ पश्चान्न हि तमनुगतं जानते चक्षुराद्याः । यद्वत् पाथस्तरङ्गैः प्रचलति**

---

[1] ऋ. १०-५८-२.

[2] ऋ. १०-६०-१०.

**परितो धावमानैस्तदन्तः प्राक् पश्चादस्ति तेषां पवनसमुदितैस्तैः प्रशान्तैर्यथावत् ॥ ३० ॥**

**एकोऽद्वयो निष्कम्पः** कर्मशून्य **आत्मा धावमानेन मनसा** सह **प्रचलति** । तथा **तस्मिन्** मनस्यपि **तिष्ठन् अग्रे** पुरतः **पश्चात् च वर्तते** । **तमेवंविधमात्मानं अनुगतं** अन्तर्गतमपि **चक्षुराद्याः न जानते** न जानन्ति, इन्द्रियागोचरत्वात् । तत्र दृष्टान्तमाह—यद्वदिति । **यद्वत्पाथः** उदकं **परितो धावमानैः तरङ्गैः प्रचलति** तथा **तेषां** तरङ्गाणां **अन्तः प्राक् पश्चात्** च पाथोऽस्ति । किंभूतैः तरङ्गैः—**पवनसमुदितैः** वायुनोत्पन्नैः । एवं मनोमयैरिन्द्रियैरप्यात्मा । अथ **तैः प्रशान्तैः** सद्भिः **यथावत्** प्रकृतिस्थं पाथ एवास्ति । तद्वदात्माऽपि ॥ ३० ॥

---

इदानीं जीवस्य बाह्यप्रपञ्चानुवृत्तिं निरूपयति—

**एकाक्यासीत् स पूर्वं मृगयति विषयानानुपूर्व्यान्तरात्मा जाया मे स्यात् प्रजा वा धनमुपकरणं कर्म कुर्वंस्तदर्थम् । क्लेशैः प्राणावशेषैर्महदपि मनुते नान्यदस्माद्वरीयस्त्वेकालाभेऽप्यकृत्स्नो मृत इव विरमत्येकहान्याऽकृतार्थः ॥ ३१ ॥**

**सः अन्तरात्मा पूर्वं एकाकी आसीत्** । अतः परं **आनुपूर्व्या** अनुक्रमेण **विषयान् मृगयति** गवेषयति । अथानुपूर्वीमाह—प्रथमं **जाया मे स्यात्** । ततः **प्रजा** मे स्यात् । ततस्तन्निर्वाहार्थं **धनं** वित्तं मे स्यात् । अथ **तदर्थं** वित्तप्राप्त्यर्थं

प्राणावशेषैः क्लेशैः कर्म कुर्वन् । एवं धनादिविषयप्राप्तौ अस्मात् विषयात् अन्यत् महत् अपि गरीयः श्रेष्ठं न मनुते । बहुविषयोद्देशे एकविषयालाभे सति अकृत्स्नो भूत्वा मृत इव विरमति विरामं प्राप्नोति । तथा एकहान्या प्राप्तस्य नाशेन अकृतार्थो भवति । अत्र मूलश्रुतिः—

आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान्वै नेत्सच्च नातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्याकृत्स्नता ॥[1]

भाष्यं—अग्रे पूर्वं इदमयं एक एव केवलमात्मैवासीत् । स जाया मे स्यादित्यकामयत ऐच्छत् । ततोस्यां जायायां प्रजायेय पुत्रत्वेन जन्म प्राप्नुयामित्यकामयत, 'अस्यां जायते पुनः' इति श्रुतेः । तथा आत्मैव जायापुत्रत्वेन परिणमति । तथा यत्कर्म करोति तदप्यात्मार्थमेवेति पुनः श्रुत्या निरूप्यते । एवं जायापुत्रप्राप्तौ तद्भरणार्थं वित्तं मे स्यादिति वित्तं कामयते । अथ वित्तप्राप्त्यर्थं कर्म कुर्वीयेति । एतावान्वै कामः । अथ नेदिति निपातो निषेधार्थे । नेत्सत् न सम्भवतीत्यर्थः । अतः जायापुत्रादिविषयादन्यद्भूयः बहुतरं न विन्देत् न विन्दति । एवं यावज्जीवं पुनरुत्पत्तिमासाद्य तथैवेति पुनरुक्तम् । एवं स जीवः यावदेतेषां जायादीनां मध्ये एकैकं न प्राप्नोति तावदकृत्स्नः असंपूर्णोहमिति मन्यते । इत्येवं तस्याकृत्स्नता अपूर्णता ॥ २१ ॥

———

[1] बृह. १-४-१७.

अविद्याया आवरणशक्तिमेव विविच्य प्रपञ्चयति—

**नासीत् पूर्वं न पश्चादतनुदिनकराच्छादको वारिवाहो दृश्यः किं त्वन्तराऽसौ स्थगयति स दृशं पश्यतो नार्कबिम्बम् । नो चेदेवं विनाऽर्कं जलधरपटलं भासते तर्हि कस्मात् तद्वद्विश्वं पिधत्ते दृशमथ न परं भासकं चालकं स्वम् ॥ ३२ ॥**

वारि वहतीति **वारिवाहः** मेघः **अतनुदिनकराच्छादको** भवति न तनुरतनुर्महान् लोकत्रयप्रकाशको यो दिनकरः दिवसे प्रसृतकरः सूर्यस्तदाच्छादको भवति । अथ तस्याच्छादकत्वमान्तरालिकं न प्रवाहपरम्परागतमित्याह—**नासीदिति** । मेघः प्रावृट्कालात् **पूर्वं** ग्रीष्मे **नासीत्** । अथ **पश्चात्** शरत्कालेऽपि **नासीत्** । एवमेवंविधो मेघः सूर्यं **पश्यतो** जनस्य दृशमेव **स्थगयति** आवृणोति **नार्कबिम्बं,** तस्य मेघादप्यभितः करप्रसारशालित्वादित्यर्थः । एवं सत्यपि लोके सूर्यो निष्प्रभ इति प्रतीतिः प्रातिभासिकीत्याह—**नो चेदिति** । **एवं** उक्तप्रमेयं **नो चेत्** सूर्य एव आच्छादित इति चेत् **तर्हि अर्कं विना जलधरपटलं** सूर्यावरकीभूतं मेघपटलं **कस्माद्भासते,** सूर्यस्य घनपटलेन तिरोहितत्वात् घनपटलं कस्मात् प्रकाशान्तरात् ज्ञायते? सूर्यस्याच्छन्नत्वेन प्रकाशकत्वानर्हत्वादित्यर्थः । तथा च सूर्यं पश्यतो जनस्य घनपटलेन दृष्टिरेवावृता न सूर्यः । एतद्दृष्टान्तावष्टम्भेन भूमण्डलस्यापि सूर्यावरकत्वं तद्वदेवेत्यर्थः । अथ यदर्थमेतदुपक्रान्तं तदाह—**तद्वदिति** । **तद्वत्** अन्तरोत्पन्नं **विश्वमपि** पश्यतो **दृशं** दृष्टिमेव **पिधत्ते न परं** ब्रह्मस्वरूपमाच्छादयति । तर्हि कथं न दृश्यत इत्याशङ्क्य दृश्यत एवेत्याह—किंभूतं परं ब्रह्म?

**स्वभासकं चालकं** च । स्वशब्देन विश्वं, तस्य भासकं चालकं च । येन विचित्ररूपं विश्वमाभाति, तथा येन चलति सर्वव्यवहारं करोति, तत्परं ब्रह्म कथमाच्छादयितुं शक्यते ? ब्रह्मव्यतिरेकेण तस्य भासकचालकान्तराभावात् । तथा च जगदाकारात् आदिमध्यावसानेषु वर्तमानं ब्रह्मैव सत्यं, तदज्ञानादुदितो जगदाकारः शुक्तिरजतवत्प्रातिभासिक इत्यर्थः ॥ ३२ ॥

---

एवं स्वप्नदृष्टान्तेन प्रपञ्चस्य मिथ्यात्वं निरूपयति—

**भुञ्जानः स्वप्नराज्यं ससकलविभवो जागरं प्राप्य भूयो राज्यभ्रष्टोऽहमित्थं न भजति विषमं तन्मृषा मन्यमानः । स्वप्ने कुर्वन्नगम्यागमनमुखमघं तेन न प्रत्यवायी तद्वज्जाग्रद्दशायां व्यवहृतिमखिलां स्वप्नवद्विस्मरेच्चेत् ॥ ३३ ॥**

**ससकलविभवः** सेनाकोशाद्युपस्कारयुक्तः सन् **स्वप्नराज्यं भुञ्जानः** पुरुषः **भूयो जागरं प्राप्य** प्राक्तनं दरिद्रं रङ्कं देहं निरीक्ष्याहं **राज्यभ्रष्ट** इति **विषमं** शोकं **न भजति** । कुतः ? **तत्** स्वप्नराज्यं **मृषा मन्यमानः** । अथ इममेवार्थं दृष्टान्तेन द्रढयति—**स्वप्न** इति । **स्वप्ने अगम्यागमनमुखं** सुरापानब्रह्मवधादि **अघं** पातकं **कुर्वन्** ततः प्रबोधं प्राप्तः सन् **तेन** पातकेन **प्रत्यवायी** प्रायश्चित्ती **न** भवति, यथापूर्वं लोके व्यवहार्य एव दृश्यते, मनसाऽप्यनुतापं न प्राप्नोति । कुतः ? तन्मृषा मन्यमान इति पूर्ववत् । तथा च जाग्रद्दशायामेव पापकर्ता प्रायश्चित्तार्हो भवति । अथ **जाग्रद्दशायामपि अखिलां**

पुण्यपापव्यवहृतिं चेत् स्वप्नवद्विस्मरेत् तथाऽपि तद्वत्प्रायश्चित्तार्हो न भवति । यतस्तन्मृषा मन्यमानः इति प्रागुक्तमेव । तदुक्तं भगवता—"ब्रह्मण्याधाय कर्माणि"[1] इत्यादिना ॥ ३३ ॥

---

अथ जाग्रत्स्वप्नावस्थयोरपि भ्रमजनकत्वमस्तीत्याह—

**स्वप्नावस्थानुभूतं शुभमथ विषमं तन्मृषा जागरे स्यात् जाग्रत्यां स्थूलदेहव्यवहृतिविषयं तन्मृषा स्वापकाले । इत्थं मिथ्यात्वसिद्धावनिशमुभयथा सज्जते तत्र मूढः सत्ये तद्भासकेऽस्मिन्निह हि कुत इदं तन्न विद्मो वयं हि ॥ ३४ ॥**

**स्वप्नावस्थायामनुभूतं शुभं** राज्यभोगेष्टप्राप्त्यादि तथा **विषमं** व्याघ्रभक्षणादि तत्सर्वं **जागरे मृषा** भवति । अथ **जाग्रद्दशायां स्थूलदेहव्यवहृतिविषयं शुभं** मृष्टाशनादि सर्वभोगसुखं तथा विषमं आधिव्याधियातनाजनितं दुःखं **तत् स्वापकाले** सर्वं **मृषा** भवति । इत्थं अमुना प्रकारेण **उभयथाऽपि अनिशं** निरन्तरं **मिथ्यात्वसिद्धौ सत्यां तत्र मूढः** यः **सज्जते** अभिनिवेशं करोति **तत्** कस्मात्कारणादिति **वयं न विद्मः** ॥ ३४ ॥

---

अथैतदेव सोदाहरणं निरूपयति—

**जीवन्तं जाग्रतीह स्वजनमथ मृतं स्वप्नकाले निरीक्ष्य निर्वेदं यात्यकस्मात् मृतममृतममुं वीक्ष्य**

[1] गी. ५-१०.

**हर्षं प्रयाति । स्मृत्वाऽप्येतस्य जन्तोर्निधनमसुयुतिं भाषते तेन साकं सत्येवं भाति भूयोऽल्पकसमयवशात् सत्यता वा मृषात्वम् ॥ ३५ ॥**

इह लोके **जाग्रत्यवस्थायां जीवन्तं स्वजनं** अथेदानीं स्वप्नकाले **मृतं निरीक्ष्य अकस्मान्निर्वेदं** दुःखं **याति** प्राप्नोति । अथवा जाग्रत्यां **मृतं** विपन्नं स्वजनं स्वप्नकाले **अमृतं** जीवन्तं **वीक्ष्य हर्षं प्रयाति** । अनेन जाग्रत्यनुभूतं स्वप्नकाले मृषा भवतीति दर्शितम् । अथ तत्र तदस्मरणेनान्यथा प्रतीयत इति चेत्तत्राह—**स्मृत्वेति** । **एतस्य** जाग्रत्यां मृतस्य **जन्तोः निधनं स्मृत्वाऽपि** अथवा जीवत **असुयुतिं** जीवनं स्मृत्वाऽपि **तेन** सह **भाषते** वार्ताः कथयति । तथा मृतेन सह दीनालापं करोति । तथा च स्वप्नकालेऽपि स्मरणवतोऽपि मृषात्वप्रतीतिर्भवतीति सूचितम् । एवं सति उभयथा मिथ्यानुभूतौ सत्यामपि स्वप्ने मृषात्वप्रतीतिर्जाग्रत्यां च सत्यत्वप्रतीतिर्लोकानां कथमुत्पद्यत इत्यत आह—भूय इति । **भूयोल्पकसमयवशात् सत्यता मृषात्वं वा भाति** भासते न तात्विकम् । भूयांश्चाल्पकश्च तौ च तौ समयौ च तद्वशात् जाग्रती चिरकालमस्ति । तत्र दृढानुसन्धानात् सत्यत्वं भासते । स्वप्नस्तु अल्पसमयदृश्योस्ति, अतोत्र मृषात्वं भासते । स्वप्नस्तु अल्पसमयदृश्योस्ति, अतोत्र मृषात्वं भासते । विचार्यमाणे तावदुभयोरपि असत्यत्वमित्यर्थः ॥ ३५ ॥

---

इदानीं असदुपादानकं विश्वमपि सदिति सदृष्टान्तमाह—

**स्वाप्नस्त्रीसङ्गसौख्यादपि भृशमसतो या च रेतश्च्युतिः स्यात् सा दृश्या तद्वदेतत् स्फुरति जगदस-**

**त्कारणं सत्यकल्पम् । स्वप्ने सत्यः पुमान् स्यात् युवतिरिह मृषैवानयोः संयुतिश्च प्रातः शुक्रेण वस्त्रोपहतिरिति यतः कल्पनामूलमेतत् ॥ ३६ ॥**

**असतः** अविद्यमानादपि **स्वाप्नस्त्रीसङ्गसौख्यात् रेतश्च्युतिः** शुक्रद्रावो भवति । **सा दृश्या** व्यावहारिकसत्या । **तद्वत् असत्कारणं जगत् सत्यकल्पं स्फुरति** । नामैकदेशे नामग्रहणमितिवत् असत् सदसद्विलक्षणं अविद्याख्यं कारणं यस्य तत् असत्कारणम् । एवंविधं जगत् सत्यकल्पं स्फुरति, न तु सत्यं, सुषुप्तौ अस्तमितत्वात् । अथ दृष्टान्तेन दार्ष्टान्तिकसिद्धिमाह— **स्वप्न** इति । **स्वप्ने पुमान् सत्यः, युवतिः** स्त्री **मृषा** च । परं **अनयोः** स्त्रीपुरुषयोः **संयुतिः** सुरतमपि मृषा । तथा **प्रातः** जाग्रदवस्थायां **शुक्रेण** रेतसा **वस्त्रोपहतिः** प्रत्यक्षसिद्धा । एवं आत्मा सत्यः, स्त्री माया असत्या, तयोर्युतिः संबन्धः आध्यासिकः अत एव मृषा, तस्माज्जातं जगत् व्यवहारे सत्यं, इति **यतः** सर्वं **कल्पनामूलं** काल्पनिकमित्यर्थः ॥ ३६ ॥

---

अथावस्थात्रयेऽप्यनुभूयमानं आत्मानं केऽपि न विचिन्वन्तीत्याश्चर्यमाह—

**पश्यन्त्याराममस्य प्रतिदिवसममी जन्तवः स्वापकाले पश्यत्येनं न कश्चित् करणगणमृते मायया क्रीडमानम् । जाग्रत्यर्थव्रजानामथ च तनुभृतां भासकं चालकं वा नो जानीते सुषुप्तौ परमसुखमयं कश्चिदाश्चर्यमेतत् ॥ ३७ ॥**

अमी जन्तवः जीवाः **प्रतिदिवसं स्वापकाले अस्य** परमात्मनः **आरामं** क्रीडां **पश्यन्ति** । **परं तु** आत्मानं **कश्चिन्न पश्यति** । किंभूतमात्मानं? **करणगणमृते** बाह्येन्द्रियव्यतिरेकेणापि **मायया** स्वाप्नदेहेन्द्रियादिरूपया **क्रीडमानम्** । अथ आस्तां तावत् मौढ्यदशा स्वप्नावस्थायां; **जाग्रत्यामपि तनुभृतां चालकं** तथा **अर्थव्रजानां भासकं** प्रकाशकं निरन्तरं न पश्यति । तथा **सुषुप्तौ परमसुखमयं** एवंविधं परमात्मानं केऽपि न जानन्ति इति **एतत् महत् आश्चर्य**मित्यर्थः ॥ ३७ ॥

---

**स्वप्ने मन्त्रोपदेशः श्रवणपरिचितः सत्य एष प्रबोधे स्वाप्नादेव प्रसादादभिलषितफलं सत्यतां प्रातरेति । सत्यप्राप्तिस्त्वसत्यादपि भवति तथा किं च तत् स्वप्रकाशं येनेदं भाति सर्वं चरमचरमथोच्चावचं दृश्यजातम् ॥ ३८ ॥**

ननु जाग्रदवस्थायामपि स्वप्नदृष्टान्तेन मृषात्वे प्रोच्यमाने तस्यां गुरुमुखात् उपनिषद्विचारादिना यो ब्रह्मबोधः सोऽपि मृषा भवति। ततो ब्रह्मापि वन्ध्यापुत्रवत् असद्रूपं स्यादित्याशङ्क्याह—**स्वप्न** इति ॥ ३८ ॥

---

एवं स्वप्ननिदर्शनेन जगन्मिथ्यात्वं निरूप्य इदानीं जगत्सत्यत्वाभिव्यञ्जिकायां जाग्रत्यामपि तन्मिथ्यात्वं निरूपयति—

**मध्यप्राणं सुषुप्तौ स्वजनिमनुविशन्त्यग्निसूर्यादयोऽमी वागाद्याः प्राणवायुं तदिह निगदिता ग्लानिरेषां न वायोः । तेभ्यो दृश्यावभासो भ्रम इति वि-**

**दितः शुक्तिकारौप्यकल्पः प्राणायामव्रतं तच्छ्रुति-शिरसि मतं स्वात्मलब्धौ न चान्यत् ॥ ३९॥**

अमी अग्निसूर्यादयो वागादीन्द्रियाधिदेवताः **सुषुप्तौ** तृतीयावस्थायां **मध्यमप्राणं** विराजं **अनुविशन्ति** प्रविशन्ति । किंभूतं विराजं? **स्वजनिं** स्वस्य जनिर्यस्मिन् स तथा स्वोत्पादकं, "मुखादिन्द्रश्चाग्निश्च"* इति तथा "चक्षोः सूर्यो अजायत"* इति श्रुतेः । कार्यजातस्य कारणे प्रवेशो युक्त एवेत्यर्थः । तथा **वागाद्या** इन्द्रियगणाः **सुषुप्तौ प्राणवायुं** इन्द्रसंज्ञं अनुविशन्ति । **तत्** तस्मात्कारणात् **एषां** साधिदेवतानामिन्द्रियाणां **ग्लानिः** अस्तमयः **निगदिता** उपनिषत्प्रतिपादिता । परं तु स्थूलसूक्ष्मप्रपञ्चलयरूपायां सुषुप्तावपि **प्राणवायोः** अस्तमयो **नास्ति,** सुषुप्तौ श्वासरूपेण प्रत्यक्षतः उपलभ्यमानत्वात् । अथ जाग्रत्यामपि चक्षुरादिभ्यो यो **दृश्यावभासः** दृश्यानां रूपरसादीनां प्रतिभासः सः **भ्रमः** न तात्त्विकः इति **विदितः** । अथ भ्रमे दृष्टान्तमाह—**शुक्ति**केति । यथा शुक्त्यवच्छिन्नेऽधिकरणे रौप्यं प्रातिभासिकं प्रतीयते तद्वत् ब्रह्मण्यधिकरणे नामरूपात्मकं विश्वं प्रातिभासिकम् । तस्मात्कारणात् अवस्थात्रयेऽपि अनस्तमितं **प्राणायामव्रतं स्वात्मलब्धौ श्रुतिशिरसि** मतं, **नान्यत्** चक्षुरादिव्रतं, तस्यावस्थात्रयेऽपि आत्मलब्धौ अशक्तत्वात् ॥ ३९ ॥

---

अथ वैराग्ययोगेनैव ज्ञानसिद्धिरित्यनुवदति—

**नोऽकस्मादार्द्रमेधः स्पृशति च दहनः किं तु शुष्कं निदाघात् आर्द्रं चेतोऽनुबन्धैः कृतसुकृतमपि**

---

*तै. आ. ३-१२.

**स्वोक्तकर्मप्रजार्थैः । तद्वज्ज्ञानाग्निरेतत् स्पृशति न सहसा किं तु वैराग्यशुष्कं तस्माच्छुद्धो विरागः प्रथममभिहितस्तेन विज्ञानसिद्धिः॥ ४० ॥**

**आर्द्रं** जलाक्तं **एधः** काष्ठं **दहनः** अग्निः अकस्मान्न स्पृशति, **किंतु निदाघशुष्कमेव** स्पृशति । **तद्वत् अनुबन्धैः** भार्यादिविषयैः **आर्द्रं चेतः स्वोक्तकर्मप्रजार्थैः** कृतसुकृतमपि **ज्ञानाग्निः न स्पृशति** । स्वोक्तकर्म स्वाश्रमवर्णोचितं, प्रजाः पुत्राः "पुत्रेणैव जय्यो नान्येन कर्मणा"[1] इति, तथा "नापुत्रस्य लोकोऽस्ति"[1] इति श्रुतेः । तथा अर्थैः अर्थसाध्यैः यज्ञदानादिभिः कृतसुकृतमपीत्यर्थः । **किंतु वैराग्यशुष्कमेव** चेतः ज्ञानाग्निः स्पृशति । **तस्मात्** कारणात् **शुद्धो विरागः** वान्तत्यक्तान्नवत् विषयवितृष्णता **प्रथमं** आवश्यकत्वेन **अभिहितः** प्रोक्तः । अनेन कृत्वा **विज्ञानसिद्धिः** भवति । अत्र श्रुतिः—

> न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।
> परेण नाकं निहितं गुहायां विभ्राजते तद्यतयो विशन्ति ॥[2]

भाष्यं—एकेन त्यागेन वैराग्येण यतयः अमृतत्वं आनशुः प्राप्ताः। परं तु न कर्मणा फलापेक्षेण, न प्रजया पुत्रेण, न धनेन दानादिना । अथ अमृतत्वं निरूपयति—परेण परब्रह्मणा नाकं स्वांशीभूतं गुहायां हृदि आकाशे यन्निहितं निधिवत् गोपितं वस्तु, यच्चार्थप्रकाशकत्वेन भ्राजते स्फुरति, तदमृतं यतयो विशन्ति । "वैराग्यं ज्ञानगर्भं" इति यः कश्चित् पठति॥४०॥

---

[1] बृ. उ. ३-५-१६.  [2] याज्ञिक्यु. १२.

अथ प्रागुक्तोपदेशत्रये ईशावस्योपनिषदुक्तां श्रुतिं संवादयन्नाह—

**यत्किंचिन्नामरूपात्मकमिदमसदेवोदितं भाति भूमौ येनानेकप्रकारैर्व्यवहरति जगद्येन तेनेश्वरेण। तद्वत् प्रच्छादनीयं निभृतरशनया यद्वदेष द्विजिह्वः तेन त्यक्तेन भोज्यं सुखमनतिशयं मा गृधोऽन्यद्धनाद्यम् ॥ ४१ ॥**

**यत्किंचित् असदेवोदितं नामरूपात्मकमिदं** शुक्तिकारजतवत् इदंत्वेन **भूमौ येन** भासते, तथा गच्छतीति **जगत् येन** कृत्वा **अनेकप्रकारैर्व्यवहरति, तेनेश्वरेण** इदं **तद्वत्प्रच्छादनीयं** आच्छादनीयम् । किंवत्? **यद्वत् निभृतरशनया** निश्चयेन ज्ञातया रज्ज्वा **एषः** प्रातिभासिकत्वेन ज्ञातः **द्विजिह्वः** सर्पः आच्छाद्यते, तद्वत् जगद्भासकत्वेन चालकत्वेन च संविद्रूपत्वेन निश्चितेन परमात्मना जगदाच्छादनीयम् । **तेन** जगदाभासेन **त्यक्तेन** दूरतः अपास्तेन केवलीभावे प्राप्ते **अनतिशयं** अत्युत्कृष्टं आत्यन्तिकं **सुखं भोज्यम्**। परं तु **अन्यत्** तद्विलक्षणं **धनादिकं** विषयसुखं **मा गृधः** माऽभिकाङ्क्षयेति उपदेशत्रयम् । श्रुतिश्च—

**ईशा वास्यमिदं सर्वं यत्किंचिज्जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥**[1]

भाष्यं—इदं पुरो भासमानं यत्किंचिन्नामरूपात्मकं सर्वं ब्रह्मादिस्तम्बपर्यन्तं गच्छतीति जगत् व्यवहारवत् जगत्यां पृथिव्यां यद्भाति तत् ईष्टे इति ईट् तेन ईशा सर्वोत्कृष्टेन परमात्मना कृत्वा वास्यम् । वस आच्छादने, आच्छादनीयम्, जगद्भासकत्वेन चा-

[1] ई. उ. १.

लकत्वेन ज्ञातेन परब्रह्मणा प्रातिभासिकं जगदाच्छाद्यं, तुच्छत्वेन ज्ञेयम् । एवं तेन जगदाभासेन त्यक्तेन दूरतोऽपास्तेन अवशिष्टमात्मस्वरूपं आनन्दात्मकं भुञ्जीथाः । परं तु धनं विषयसुखं मा गृधः । गृधु अभिकाङ्क्षायाम् । इदं कस्य स्वित् किमुपादानमिति ज्ञात्वा माऽभिकाङ्क्ष ॥ ४१ ॥

---

अथ द्विधा मोक्षोपायमाह—

**जीवन्मुक्तिर्मुमुक्षोः प्रथममथ ततो मुक्तिरात्यन्तिकी च तेऽभ्यासज्ञानयोगाद्गुरुचरणकृपापाङ्गसङ्गेन लब्धात् । अभ्यासोऽपि द्विधा स्यादविकरणवशात् दैहिको मानसश्च शारीरस्त्वासनाद्यो ह्युपरतिरपरो ज्ञानयोगः पुरोक्तः ॥ ४२ ॥**

उपरतिः प्रपञ्चोपशमः । शेषं स्पष्टम् ॥ ४२ ॥

---

अथ प्रथमोद्दिष्टां जीवन्मुक्तिमाह—

**सर्वानुन्मूल्य कामान् हृदि कृतनिलयान् क्षिप्तशङ्कुनिवोच्चैः दीर्घे देहाभिमानस्त्यजति चपलतामात्मदत्तावधानः । यात्यूर्ध्वस्थानमुच्चैः कृतसुकृतभरो नाडिकाभिर्विचित्रं नीलश्वेतारुणाभिः स्रवदमृतभरं गृह्यमाणात्मसौख्यः ॥ ४३ ॥**

**हृदि कृतनिलयान्** अनेककल्पपर्यन्तं संस्काररूपेण हृदि स्थि-

तान् **सर्वान् कामान्** मनोरथान् **उन्मूल्य** समूलमुत्खातान् कृत्वा **दीर्घदेहाभिमानः** सन् **चपलतां त्यजति** अहंममताभिमानमुत्सृज्य मनोवेगं त्यजति । किंभूतः? **आत्मदत्तावधानः** आत्मनि **दत्तं** अवधानं अविरतानुसन्धानं येन सः तथा । एवं तथाभूतः सन् **उच्चैरूर्ध्वस्थानं** सर्वोत्कृष्टं ब्रह्मरन्ध्रं सुषुम्नाविवरेण **याति** । किंभूतं स्थानं? **नीलश्वेतारुणाभिः नाडिकाभिः विचित्रं** सहस्रदलं चक्रम् । पुनः किंभूतं? **स्रवदमृतभरं** कुण्डलिनीमुखनिर्भेदेन अमृतं स्रवतीत्यर्थः । किंभूतो जीवन्मुक्तः, **कृतसुकृतभरः** कृतानेकपुण्यपुञ्जः । पुनः किंभूतः? **गृह्यमाणात्मसौख्यः** ब्रह्मानन्दवानस्मीति किंचिदुर्वरिताहङ्कारशेष इत्यर्थः । अत्र श्रुतिः—कण्डिकाचतुष्टयम्—

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।**
**अथ मर्त्यो मृतो भवत्यत्र ब्रह्म समश्नुते ॥ १ ॥**

**तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदꣳ शरीरꣳ शेतेऽथायमनस्थिकोऽशरीरः प्राज्ञ आत्मा ब्रह्मैव लोक एव सम्राडिति होवाच याज्ञवल्क्यः ॥ २ ॥**

तदप्येते श्लोका भवन्ति—

**अणुः पन्था विततः पुराणो माꣳस्पृष्टोऽनुवित्तो मयैव ।**
**तेन धीरा अपियन्ति ब्रह्मविद उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः ॥ ३ ॥**

**तस्मिन् शुक्लमुत नीलमाहुः पिङ्गलꣳ हरितं लोहितं च ।**
**एष वः पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्तैजसः पुण्यकृच्च ॥ ४ ॥**[1]

---

[1] बृ. उ. ६-४-७, ८, ९.

भाष्यं—अस्य मुमुक्षोः पुरुषस्य हृदि श्रिताः सर्वे कामाः संकल्पाः यदा प्रमुच्यन्ते शान्ता भवन्ति, अथेत्यनन्तरं, तदानीमित्यर्थः, मर्त्यो मरणधर्मात्मकोऽपि अमृतो मुक्तो भवति । किंपुनर्देवादिः । अथामृतत्वमाह—अत्रेति । अस्मिन् देहे वर्तमान एव ब्रह्म समश्नुते परमानन्दमनुभवति ॥ १ ॥

अथ शरीरे वर्तमानः सन् तदभिमानशून्य इति सदृष्टान्तमाह—तद्यथेति । अहेः सर्पस्य निल्वयनी निर्मोकः कञ्चुकं मृता निर्जीवा वल्मीके सर्पस्थाने प्रक्षिप्ता सती शयीत निश्चेष्टतया स्थिता । सा दूरात् सर्प इव दृश्यते, परं तु सर्पकृत्यं न करोति । एवं तद्वत् इदं अयं पुरुषः शरीरमेवाधिष्ठाय शेते निश्चेष्टतया अवतिष्ठते । अथेत्यनन्तरं, अयं प्राज्ञः आत्मा जीवः अनस्थिकः, अस्थिरूपं स्थूलदेहं तदभिमानशून्यः, तथा अशरीरः शरीरं सूक्ष्मशरीरं तदभिमानशून्यश्च, भो सम्राडिति संबुद्ध्य याज्ञवल्क्यो जनकं प्रत्युवाच ॥ २ ॥

तदप्येते श्लोका इति । अत्रार्थे श्लोकाः प्रसिद्धमन्त्राः सन्ति । तानेव याज्ञवल्क्य आह—अणुरिति । अणुः सूक्ष्मो मार्गः सुषुम्नाविवरोपलक्षितः वितरो विशिष्टतरः श्रेष्ठतमः । एवंविधो मार्गः माऽऽस्पृष्टः मम गुरुमुखात् कर्णाध्मातो जातः, अनन्तरं मयैव अनुवित्तः अनुष्ठितः । तेन मार्गेण धीराः ब्रह्मविदः पुरुषाः अपि इतः प्रपञ्चाद्विमुक्ताः सन्तः स्वर्गं लोकं ब्रह्मरन्ध्राख्यं स्थानं यान्ति प्राप्नुवन्ति ॥ ३ ॥

तस्मिन् विचित्रवर्णा नाड्यः सन्तीत्याह—शुक्लमित्यादि । एवमध्यात्मरीत्या व्याख्यातम् । केऽपि अधिदैविकस्थित्या विष्ण्वादिलोकप्राप्तिं व्याकुर्वन्ति । एवमेषः पन्था मार्गः ब्रह्मणा मत्तः

पूर्वं अनुवित्तोऽनुष्ठितः । तेनैव मार्गेण ब्रह्मवित्तैजसः विराजत्वं प्राप्तः पुण्यकृदेति नान्य इत्यर्थः ॥ ४ ॥ ॥ ४३ ॥

---

अस्मिन्नर्थे ईशावास्योपनिषदुक्तां श्रुतिं संवादयति—

**प्रापश्यद्विश्वमात्मेत्ययमिह पुरुषः शोकमोहाद्यतीतः शुक्रं ब्रह्माध्यगच्छत् स खलु सकलवित् सर्वसिद्ध्यास्पदं हि । विस्मृत्य स्थूलसूक्ष्मप्रभृति वपुरसौ सर्वसंकल्पशून्यो जीवन्मुक्तस्तुरीयं पदमधिगतवान् पुण्यपापैर्विहीनः ॥ ४४ ॥**

**अयं पुरुषः** इह अस्मिन् देहे वर्तमानः सन् **विश्वं आत्मेति प्रापश्यत्** पश्यतिस्म, विश्वं विश्वाकारेण नापश्यत् किंतु आत्माकारेणैव । किंभूतः? **शोकमोहाद्यतीतः** । एवंविधः सन् **शुक्रं** शबलं **ब्रह्म** हिरण्यगर्भाख्यं **अध्यगच्छत्** अधिगतवान् । एवं हिरण्यगर्भत्वं प्राप्तः **सकलवित्** सर्वज्ञो जातः । तथा **सर्वसिद्धीनां** अणिमाद्यष्टानां **आस्पदं** स्थानं च जातः । तथा **असौ** पुरुषः **स्थूलसूक्ष्मप्रभृति वपुर्विस्मृत्य सर्वसंकल्पशून्यः** सन् **तुरीयं पदमधिगतवान्** आत्मसुखमनुभवति स्म । ततः **पुण्यपापैर्विहीनः** सकलकर्मातीतः ।

अत्र श्रुतिः सार्धकाण्डिका—

**यस्मिन्त्सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥**
**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्धमपापविद्धम् ।**[1]

---

[1] ईशोपनिषदि.

भाष्यं—यस्मिन्काले विजानातो विज्ञानवतः पुरुषस्य सर्वभूतानि आत्मैवाभूत् सकलं ब्रह्मैवाभूत्, तत्र तस्मिन्काले को मोहः किमज्ञानं? तथा तन्मूलः शोकः कः? न कोऽपीत्यर्थः । किंभूतस्य विजानतः? एकत्वमभेदमनुपश्यतः, सर्वत्रैकत्वभावनयैव विज्ञातस्वरूपस्य[1] इत्यर्थः । एवं स जीवन्मुक्तः शुक्रं शबलं हिरण्यगर्भस्वरूपं पर्यगात् प्राप्तवान् । किंभूतं शुक्रं? अपापविद्धं, पापं अहंकारः तेनास्पृष्टं, अत एव शुद्धमपि प्राप्तवानित्यर्थः । पुनः किंभूतं? अस्नाविरं स्नायवः सिराः तत्स्वरूपं स्थूलदेहं, तस्मादतीतमस्नाविरम् । तथा अव्रणं, व्रणं चिह्नं सूक्ष्मभूतेन्द्रियप्राणावस्थात्मकं लिङ्गदेहं, तस्मादप्यतीतं, एवं चतुर्थे महाकारणे देहे वर्तमानमित्यर्थः ॥ ४४ ॥

———

अथ जीवन्मुक्तस्य मनःप्राणौ ऊर्ध्वं गच्छत इत्येतस्मिन्नर्थे ऋक्शाखीयां श्रुतिं संवादयति—

**यः सत्त्वाकारवृत्तौ प्रतिफलति युवा देहमात्रावृतोऽपि तद्धर्मैर्बाल्यवार्द्धक्यादिभिरनुपहतः प्राण आविर्बभूव । श्रेयान् साध्यस्तमेतं सुनिपुणमतयः सत्यसंकल्पभाजो ह्यभ्यासाद्देवयन्तः परिणतमनसा साकमूर्ध्वं नयन्ति ॥ ४५ ॥**

यः आत्मा **सत्त्वाकारवृत्तौ** **प्रतिफलति** स **युवा** **प्राणः** **आविर्बभूव** सत्त्वगुणोपपन्नो जीव इत्यर्थः । सः **देहमात्रावृतोऽपि** **बाल्यवार्द्धक्यादिभिः** **तद्धर्मैः** देहधर्मैः **अनुपहतः** सन्

[1]विज्ञानस्वरूप.

**श्रेयान्** कल्याणरूपः तथा साध्यः साधयितुं उत्तमां गतिं प्रापयितुं योग्यः । तमेतं प्राणं **सुनिपुणमतयः** कुशलबुद्धयः सत्ये परब्रह्मणि संकल्पो मनो गतिर्येषां ते तथाविधाः पूर्वोक्तात् **अभ्यासात्** देवत्वं प्राप्तुमिच्छन्तः **परिणतमनसा** विविक्तेन मनसा सह ऊर्ध्वं **नयन्ति** । अत्र श्रुतिः तृतीयाष्टके—

**युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः ।**
**तं धीरासः कवय उन्नयन्ति स्वाध्यो ३ मनसा देवयन्तः ॥**[1]

भाष्यं—बाल्यवार्धकाद्यैः देहविकारैः विरहितो युवा मुख्यः प्राणः सुष्ठु वासः प्रावरणं यस्य सत्त्वकारान्तःकरणवृत्तिप्रतिबिम्बितः परिवीतः शरीरावृतः सन् आगात् जीवदशां प्राप्तः । उ इति निश्चयेन । स जायमानः प्रादुर्भूतमात्रः सन् श्रेयान् सत्कर्मनिरतो भवति । सः स्वाध्यः सुखेनाराध्यः । तमेवं धीरं धीरासः दृढव्रताः कवयः क्रान्तदर्शिनो ज्ञानिनः देवयन्तो देवत्वं प्राप्तुमिच्छन्तः मनसा सह उन्नयन्ति सुषुम्नामार्गेण उर्ध्वं नयन्ति ब्रह्मरन्ध्रं प्रापयन्ति ॥ ४९ ॥

---

अथ निर्वाणमुक्तिमाह—

**प्रायोऽकामोऽस्तकामो निरतिशयसुखायात्मकामस्तदाऽसौ तत्प्राप्त्यावाप्तकामः स्थितचरमदशास्तस्य देहावसाने । प्राणा नैवोत्क्रमन्ति क्रमविरतिमिताः स्वस्वहेतौ तदानीं क्वायं जीवो विलीनो लवणमिव जलेऽखण्ड आत्मैव पश्चात् ॥ ४६ ॥**

---

[1] ऋ. ३-१-८.

प्राक् निरूपितो जीवन्मुक्तः पुरुषः **प्रायः** बाहुल्येन **अकाम** एव तिष्ठति, यतः **अस्तकामः**, आत्माकारस्य मनसः विक्षेपाभावात् । परं तु **निरतिशयसुखं** परमानन्दः तदर्थं **आत्मकामः** आत्माकारः कामो यस्य सः तथा । अथ **तत्प्राप्तौ आप्तकामः** परमानन्दे क्षुद्रानन्दानामन्तर्भूतत्वात् । तदुक्तं भगवता—

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।**[1]

किंभूतः ? **स्थितचरमदशः** स्थिता चरमा प्रान्त्या दशा यस्य । अथ दशातीतत्वमाह—**तस्येति** । **तस्य** पुरुषस्य **देहावसाने** प्राप्ते सति **प्राणाः नैव उत्क्रमन्ति** । उत्क्रमणं हि पुनर्देहारम्भाय कल्पते । प्रकृते तु तथा न भवति । किं तु **स्वस्वहेतौ** स्वस्वकारणे **क्रमविरतिं** क्रमेण नाशं इताः प्राप्ताः । **तदानीं क्वायं** जीवदशापन्नः ? क्वास्ति ? न क्वापीत्यर्थः, यतो **जले लवणमिव** विलीनः लयं प्राप्तः । **पश्चात् अखण्डः आत्मैव** तिष्ठति, अवच्छेदकाभावात्, "ब्रह्मैव सन् ब्रह्माप्येति"[2] इति श्रुतेः । जीवः प्रथमं ब्रह्मैवासीत्, मध्ये जीवदशां प्राप्तः, पुनः ब्रह्मत्वमेवाप्नोतीत्यर्थः ॥ ४६ ॥

———

अथ लवणमिव जले इत्येतद्दृष्टान्तं विशदयन्नाह—

**पिण्डीभूतं यदन्तर्जलनिधिसलिलं याति तत् सैन्धवाख्यं भूयः प्रक्षिप्तमस्मिन् विलयमुपगतं नामरूपे जहाति । प्राज्ञस्तद्वत् परात्मन्यथ भजति लयं तस्य चेतो हिमांशौ वागग्नौ चक्षुरर्के पयसि पुनरसृग्रेतसी दिक्षु कर्णौ ॥ ४७ ॥**

---

[1] भ. गी. ६-२२.    [2] तै. आ. २-२.

स्पष्टोऽर्थः । अत्र श्रुतिः—

यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायैव स्याद्यतोयतस्त्वाददीत लवणमेवैवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ।[1]

भाष्यं—मैत्रेयीं ज्येष्ठपत्नीं प्रति याज्ञवल्क्य उवाच—अरे मैत्रेयि ! सैन्धवखिल्यः सैन्धवपिण्ड उदके प्रास्तः प्रक्षिप्तः सन् अनुविलीयेत, विलीनः सन्नुदकत्वमेव प्राप्नोति, न प्रकारान्तरम् । ह इति निश्चये । पुनरस्य सैन्धवस्य उद्ग्रहणाय नैव स्यात् । यत्सैन्धवं जले प्रक्षिप्तं तस्य उत् ऊर्ध्वं ग्रहणं बहिर्निष्कासनं तदर्थं नैव स्यात्, पुनस्तस्य नैव प्राप्तिः । अथ तदेवाह—तु पुनः लवणं क्षारोदकमेव लक्ष्यते । एवममुना प्रकारेण इदं महद्भूतं अनन्तं अक्षोभ्यं अपारं अमर्यादं वैराजरूपं विज्ञानघने परमात्मस्वरूपे एव एतेभ्यो भूतेभ्यः स्वकारणेभ्यः समुत्थाय उदयं प्राप्य तान्येव भूतानि अनु लक्षीकृत्य विनश्यति । तस्य न प्रेत्य संज्ञाऽस्ति इति—प्रेत्य नाशं प्राप्य संज्ञा नास्तीति । स्वकारणे लीयन्त इत्यत्र आर्तभागयाज्ञवल्क्ययोः संवादश्रुतिमुक्तवान् । तथा च श्रुतिः—

याज्ञवल्क्य इति होवाच । यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीꣳ शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीत्याहर सोम्य हस्तम् ॥[2]

[1] बृह. ४-४-१२.

[2] बृह. ५-२-१३.

भाष्यं—जारत्कारव आर्तभागो याज्ञवल्क्यं प्रति वदति । भो याज्ञवल्क्य ! अस्य जीवन्मुक्तस्य पुरुषस्य मृतस्य त्यक्तदेहस्य वागग्निं स्वाधिदैवतं अप्येति प्रविशति, चक्षुरादित्यं प्रविशति, मनश्चन्द्रं दिशः श्रोत्रं प्रविशतीत्यधिदेवतप्रवेश उक्तः । अथ शरीरं पृथिवीं स्वकारणभूतां प्रविशति, आत्मा हृदयावकाशः आकाशे प्रविशति, लोमानि कण्ठादधःस्थानि ओषधीः प्रविशन्ति, केशाः मूर्धन्याश्च वनस्पतीन् वृक्षान्प्रविशन्ति, रेतः शुक्रं लोहितं च अप्सु प्रविशति । तदा क्वायं पुरुषो भवतीति प्राप्तसङ्केतो याज्ञवल्क्यो वदति—आहरेति । भोः सौम्य आर्तभाग ! हस्तं आहरेति हस्तं देहीत्यर्थः ॥ ४७ ॥

---

अथ सर्वं विश्वं आत्मसम्बन्धेनैव चलतीत्याह—

**क्षीरान्तर्यद्वदाज्यं मधुरिमविदितं तत् पृथग्भूतमस्मात् भूतेषु ब्रह्म तद्वद्व्यवहृतिविदितं श्रान्तविश्रान्तिबीजम् । यं लब्ध्वा लाभमन्यं तृणमिव मनुते यत्र नोदेति भीतिः सान्द्रानन्दं यदन्तः स्फुरति तदमृतं विद्ध्यतो ह्यन्यदार्तम् ॥ ४८ ॥**

यद्वत् क्षीरान्तः दुग्धमध्ये आज्यं घृतमस्तीति मधुरिमविदितं मधुरिम्णा माधुर्येण विदितं ज्ञातं, अथ तत् घृतं अस्मात् क्षीरात् पृथग्भूतं भिन्नं मथनात् ज्ञातं यतः पुनः घृतं क्षीरान्तर्निक्षिप्तं सत् दुग्धत्वं नाप्नोति, तद्वत् भूतेषु ब्रह्म अस्तीति व्यवहृतिः व्यवहारः तेन विदितम् । तच्च भूतापेक्षया भिन्नम्, यतः श्रान्तविश्रान्तिबीजं जाग्रत्यां श्रान्तस्य पुरुषस्य

सुषुप्तौ या विश्रान्तिः यो विश्रामः तस्य बीजं कारणं, यतः यं लब्ध्वा प्राणी **लाभमन्यं तृणमिव मनुते**, तथा **यत्र** यस्मिन्ब्रह्मणि **भीतिः नोदेति** अद्वैतत्वात्, 'द्वितीयाद्वै भयं भवति'[1] इति श्रुतेः, यतः सुषुप्तौ स्थूलसूक्ष्मप्रपञ्चलये मनः केवलं आत्माकारं भवति । एवं **सान्द्रानन्दं** वस्तु **यदन्तः स्फुरति तदमृतं विद्धि** जानीहि । **अतोऽन्यत्** पदार्थजातं **आर्तं** बाधितं, शुक्तिकारजतवत् उत्तरक्षणे बाधदर्शनात् । अयमर्थः—केवलमुदकरूपे दुग्धे उदकाद्विलक्षणं यत् माधुर्यं तत् अन्तर्गतस्य आज्यस्यैव संभवति । एवं मृतरूपे देहे चलनादिव्यापारः, तथा इन्द्रियेष्वर्थप्रकाशः । एतत् आत्मकृतमेव, न शरीरकृतं, यतो मृतशरीरे तथात्वं न दृश्यते । अनेन 'तेजोमयोऽमृतमयः,'[2] तथा 'अन्तर्याम्यमृतः'[3] इत्यादिश्रुतीनां विषयो दर्शितः ॥ ४८ ॥

---

अथ इदं विश्वं परंपरया ब्रह्मण्येव ओतं प्रोतमिति दर्शयति—

**ओतः प्रोतश्च तन्तुष्विह विततपटश्चित्रवर्णेषु चित्रः तस्मिन् जिज्ञास्यमाने ननु भवति पटः सूत्रमात्रावशेषः । तद्वद्विश्वं विचित्रं नगनगरनरग्रामपश्वादिरूपं प्रोतं वैराजरूपे स वियति तदपि ब्रह्मणि प्रोतमोतम् ॥ ४९ ॥**

इह लोके **विततो** विस्तृतः **पटः तन्तुषु ओतः प्रोतो** दृश्यते । किंभूतेषु तन्तुषु? **विचित्रवर्णेषु** । किंभूतः पटः?

---

[1]बृ. उ. ३-४-२. [2]बृ. उ. ४-५-१. [3]बृ. उ. ५-७-३.

विचित्रवर्णः । तस्मिन् पटे जिज्ञास्यमाने सम्यक् विचार्यमाणे ननु निश्चयेन पटः सूत्रमात्रावशेषो भवति । ऊर्ध्वतन्तुषु ओतः तिर्यक्तन्तुषु प्रोतः एवंविधो यः पदार्थः स पटसंज्ञां प्राप्तः । परं तु तत्र सूत्रव्यतिरेकेणान्यः कोऽपि पदार्थो नानुभूयते। तद्वत् नगनगरनरग्रामपश्वादिरूपं गुणकर्मविभागेन विचित्रं विश्वं वैराजरूपे ब्रह्माण्डविग्रहे प्रोतम्। स च वैराजः वियति आकाशे प्रोतः । तदपि वियत् ब्रह्मणि प्रोतम् । अनेन अक्षरं ब्रह्म प्रतिपादितम् । अत्र श्रुतिः—

> स होवाच यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं चेति। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति। स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसंगमस्पर्शमगन्धमरसमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखमनाममगोत्रमजरममरमभयममृतमरजमशब्दमविवर्तमसंवृतमपूर्वमनपरमनन्तरमबाह्यं न तदश्नोति कंचन तदश्नोति कश्चन ॥[1]

भाष्यं—जनकसभायां याज्ञवल्क्येन सह विवदमानेषु ब्राह्मणेषु गर्गकन्या वाचक्नवी तया पृष्टो याज्ञवल्क्यः तस्याः प्रश्नं अनुवदति स्म—स होवाचेति । स याज्ञवल्क्यः, ह इति निश्चित्य गार्गीं प्रत्युवाच। भो गार्गि! त्वयैतत्पृष्टम्। तत्किं? दिवो यदूर्ध्वं स्वर्गादप्युच्चं, तथा पृथिव्याः सकाशात् यत् अर्वाक् अधो वर्तते, तथा यदन्तरा यन्मध्ये इमे दृश्यमाने द्यावापृथिवी, तथा यद्भूतं अतिक्रान्तं भवत् वर्तमानं भविष्यत् आगामि पदार्थमित्या-

---

[1] बृ. उ. ५-८-३.

चक्षते तत् कस्मिन्नोतं प्रोतं चेति त्वया पृष्टे सति मयोत्तरितं तदाकाश एव ओतं च प्रोतं चेति। पुनः त्वया पृष्टं कस्मिन्वा आकाश ओतश्च प्रोतश्चेति। तत्रोत्तरं श्रूयतामित्याह—स होवाचेति। भो गार्गि! त्वया एतद्वै पृष्टम्। तर्हि ब्राह्मणाः ब्रह्मज्ञाः पुरुषाः एतदक्षरं अविनाशि ब्रह्म अभिवदन्ति, तस्मिन्नक्षरे ब्रह्मणि आकाश ओतश्च प्रोतश्चेति शेषः। तत्र किंभूतमक्षरमिति यदि पृच्छसे तर्हि श्रूयतामित्याह—अस्थूलमिति, स्थूलादिचतुर्विधपरिमाणातीतम्। जात्यभिप्रायेण चतुर्विधत्वनिर्देशः। अलोहितमिति, लोहितादिवर्णातीतम्। तथा अस्नेहं, स्नेहश्चिक्कणतागुणः, तद्रहितम्। अच्छायं अमूर्तम्। अतमः, तमो भावरूपं अज्ञानमायाख्यं, ततोऽप्यतीतम्। अवाय्वनाकाशं, ताभ्यामतीतम्। असङ्गमसम्मिलितम्। अस्पर्शं स्पर्शरहितं, तथा अचक्षुष्कमित्यादितः इन्द्रियरहितम्। अथ तद्गतं अधिदैवतरूपं तेजो न भवतीत्यतेजस्कम्। तर्हि इन्द्रियचालकः प्राणो भविष्यतीति चेत्तदपि निषेधयति—अप्राणमिति। अमुखं मुखरहितम्, नामगोत्ररहितं च। अजरं जरातीतं च अमरणस्वभावम्। द्वितीयाभावात् अभयम्। अमृतं नित्यमुक्तस्वभावम्। अरजं गुणातीतं लोकातीतं च। अशब्दं शब्दागोचरम्। अविवर्तं विवर्तवर्जितम्। असंवृतमवच्छेदरहितम्। अपूर्वं, न विद्यते किंचित्पूर्वं यस्मात्। अनपरं, न विद्यते अपरं यस्मात्। अनन्तरं, न विद्यते अन्तरं अभ्यन्तरं यस्य। अबाह्यं, न विद्यते बाह्यावरणं यस्य। एवंविधं यत् तत् कंचन कमपि न अश्नोति नाङ्गीकुरुते, असङ्गोदासीनत्वात्। तथा कश्चन तन्नाश्नोति व्याप्नोति, अग्राह्यत्वात् ॥ ४९ ॥

---

अथात्मनो बिम्बप्रतिबिम्बन्यायेन सर्वात्मकत्वमाह—

**रूपंरूपं प्रतीदं प्रतिफलनवशात् प्रातिरूप्यं प्रपेदे ह्येको द्रष्टा द्वितीयो भवति च सलिले सर्वतोऽनन्तरूपः। इन्द्रो मायाभिरास्ते श्रुतिरिति वदति व्यापकं ब्रह्म तस्मात् जीवत्वं यात्यकस्मादतिविमलतरे बिम्बितं बुद्ध्युपाधौ ॥ ५० ॥**

अत्र प्रतिबिम्बविषयश्रुतित्रयमुपन्यस्तवान्। इदं ब्रह्म प्रतिफलनवशात् रूपंरूपं प्रति प्रातिरूप्यं प्रपेदे प्रतिरूपस्य भावः प्रातिरूप्यम्। अत्र श्रुतिः—

> दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। रूपंरूपं प्रतिरूपो बभूव[1]।

इति। अत्रेयमाख्यायिका—पूर्वं अश्विनौ देवभिषजौ आत्मज्ञानोपदेशार्थं दधीचिं प्रति गत्वा आवाभ्यामात्मविद्योपदेष्टव्येति ऊचतुः। तेनोत्तरितं क्षणान्तरे उपदेक्ष्यामीति। दधीचिवाक्यं श्रुत्वा स्वगृहं गतौ। तदन्तरे इन्द्रः समागत्य दधीचिं प्रत्युक्तवान्—त्वयैतौ मदीयभिषजौ नोपदेष्टव्यौ। अथ यदि मदीयं वचनं न शृणोषि तर्हि तव शिरः पोथयिष्यामि इत्युक्त्वा निर्गतः। पुनरश्विभ्यामागतम्। ततस्तौ दधीचिमुखात् विदिततवृत्तान्तावूचतुः—भो दधीचे! क्षणान्तरे उपदेक्ष्यामीति प्रतिज्ञा मिथ्या भवितुं नार्हतीति तर्हीदानीं तव शिरः स्थानान्तरे निधायाश्वशिरस्त्वयि संयोज्य तेन शिरसाऽऽत्मविद्यामुपदिशस्व। ततः इन्द्र आगत्याश्वशिरः छित्वा गमिष्यति। पुनस्तव स्वाभाविकं शिरः संयोजयिष्याव इति

---

[1] बृ. उ. ४-५-१८.

नासत्यवचसा तथाविधायां सत्यां अश्वशिरसा मधुकाण्डमुपदिष्टवान् इति पूर्ववृत्तान्तः। अथ दध्यङ्ङाथर्वणः अथर्वणस्यापत्यं आथर्वणः एवंविधो दधीचिः अश्विभ्यां यदुवाच तदेतदृषिर्वेदः पश्यन्नवोचत्। तत्किं? रूपंरूपं प्रतिरूपो बभूवेति। प्रतिबिम्बितं रूपं यस्येति प्रतिरूप इत्यर्थः। अथ द्वितीयां श्रुतिमाह—**एक** इति। **च** परं **एको द्रष्टा सलिले द्वितीयो भवति**। पश्यतीति **द्रष्टा**। अत्र-श्रुतिः—

**सलिल एको द्रष्टा द्वितीयो भवति**[1]।

अथ तृतीयां श्रुतिं दर्शयति—**इन्द्र** इति। **इन्द्रः** परमात्मा **मायाभिः कृत्वा सर्वतः अनन्तरूपः आस्ते**। अत्र श्रुतिः—

**इन्द्रो मायाभिः पुरुरूप ईयते**[2]।

पुरुरूपो बहुरूपः ईयते जायत इत्यमुना प्रकारेण श्रुतिः व्यापकं ब्रह्म वदति। तत् **अकस्मात् बुद्ध्युपाधौ प्रतिबिम्बितं सज्जीवत्वं याति**। किंभूते उपाधौ? **विमलतरे** स्वच्छतरे॥९०॥

---

अथास्मिन्नर्थे ऋक्शाखीयां श्रुतिं संवादयन्नाह—

**तज्ज्ञाः पश्यन्ति बुद्ध्या परमबलवतो मायया-ऽक्तं पतङ्गं बुद्धावन्तः समुद्रे प्रतिफलितमरीच्यास्पदं वेधसस्तम्। यादृग्यावानुपाधिः प्रतिफलति तथा ब्रह्म तस्मिन् यथाऽऽस्यं प्राप्तादर्शानुरूपं प्रतिफलति यथाऽवास्थितं सत् सदैव॥ ९१॥**

पतनशीलः **पतङ्गो** जीवः तं पूर्वप्रतिपादितं जानन्ति ते **तज्ज्ञाः**

---

[1]बृ. उ. ६-३-३२.    [2]बृ. उ. ४-५-१९.

शास्त्रविदः **बुद्ध्या** निश्चितान्तःकरणवृत्त्या पश्यन्ति । अथ किंरूपत्वेन पश्यन्तीत्याह—**बुद्धाविति** । **बुद्धौ** बुद्धिलक्षणे **समुद्रे अन्तः वेधसः** परमात्मनः **प्रतिफलितमरीच्यास्पदं** प्रतिफलिताः प्रतिबिम्बिता ये मरीचयः किरणाः तदेवास्पदं स्वरूपं यस्य स तथा । अथ तस्य पतनशीलत्वं प्रकटयन्नाह—**परमेति । परमबलवतो** दुर्जेयमायस्य **वेधसो** हिरण्यगर्भस्य **मायया अक्तं** व्याप्तं मुह्यमानम् । अत्र श्रुतिः—

**पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चित ।**
**समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः॥**[1]

भाष्यं—असुरस्य बलवतो दुरन्तमायस्य परमात्मनो मायया अक्तं व्याप्तं अत एव पतङ्गं पतनशीलं जीवं विपश्चितो ज्ञानिनो मनसः (?) संकल्पात्मकस्य हृदा बुद्धिरूपेण, बुद्ध्येत्यर्थः, अन्तः पश्यन्ति । समुदनाद्व्यापनात्समुद्रः स एव बुद्धिलक्षणः तस्मिन्प्रतिफलितानां वेधसः ईश्वरस्य चित्स्वरूपाणां मरीचीनां पदं स्थानं इति कवयः क्रान्तदर्शिनः विचक्षते वदन्ति, परं इच्छन्ति उपासते च । अथ श्लोकोत्तरार्धेन प्रतिबिम्बप्रकारं विशदयन्नाह—**यादृगिति** । यद्रूपो **यादृक्** यत्प्रमाणो **यावान्** एवंविधो य **उपाधिः** बुद्धिलक्षणः **तस्मिन् तथा ब्रह्म प्रतिफलति ।** यादृगिति सत्त्वरजस्तमोमयः, यावानिति स्थूलः सुक्ष्मो दीर्घो वर्तुलो वा यथोपाधिरस्ति तत्र तथैव स्वयं सदैव **यथाऽवस्थितं सत् प्रतिफलति** स्वमर्यादां न जहाति । अथ दृष्टान्तमाह—यथेति । **यथा आस्यं** मुखं **प्राप्तादर्शानुरूपं प्रतिफलति** वर्तुलो दीर्घः स्थूलो लघुर्मलिनः शुद्धो वा यथाप्राप्तो य आदर्शो दर्पणः तदनुरूपमेव प्रतिफलति । परं तु स्वयं **यथावस्थितमेव** तिष्ठति । तद्वत् ब्रह्मापि ॥ ९१ ॥

---

[1] ऋक्सं. १०-१७७-१.

अथैतदेव दृष्टान्तान्तरेण द्रढयन्नाह—

**एको भानुस्तदस्थः[1] प्रतिफलनवशाद्यस्त्वनेको[2]-दकान्तः नानात्वं यात्युपाधिस्थितिगतिसमतां चापि तद्वत् परात्मा । भूतेषूच्चावचेषु प्रतिफलित इवाभाति तावत्स्वभावावच्छिन्नो यः[3] परं तु स्फुटमनुपहतो भाति तावत्स्वभावैः[4] ॥ ५२ ॥**

स्पष्टार्थमिदं पद्यम् ॥ ५२ ॥

---

ननु जलादिष्वर्कप्रतिबिम्बः स्वकीयं रूपमेव प्रकटयति, न पदार्थान्तरं, एवमात्मप्रतिबिम्बो जीवश्चेत्तर्हि कथं पदार्थान्तरज्ञापको भवतीत्याशङ्क्य सदृष्टान्तमाह—

**यद्वत् पीयूषरश्मौ दिनकरकिरणैर्बिम्बितैरेति सान्द्रं नाशं नैशं तमिस्रं गृहगतमथवा मूर्छितैः कांस्यपात्रे । तद्वद्बुद्धौ परात्मद्युतिभिरनुपदं बिम्बिताभिः समन्तात् भासन्ते हीन्द्रियास्यप्रसृतिभिरनिशं रूपमुख्याः पदार्थाः ॥ ५३ ॥**

**यद्वत् पीयूषरश्मौ** जलमये चन्द्रे **दिनकरकिरणैः बिम्बितैः** सद्भिः **सान्द्रं** निबिडं **नैशं** रात्रिभवं **तमिस्रं** अन्धकारः **नाशं एति** प्राप्नोति । ‘आदित्येन चन्द्रमा भाति’ इति श्रुतेः **अथ वा कांस्यपात्रे** दिनकरकिरणैः **मूर्च्छितैः** सद्भिः **गृहगतं**

---

[1]तटस्थः. [2]नैको. [3]भावाच्छिन्नो योऽसौ. [4]भासते तैस्स्वभावैः.

गृहान्तर्वर्ति तमिस्रं नाशमेतीति प्रसिद्धम् । **तद्वद्बुद्धौ विम्बिताभिः परमात्मद्युतिभिः समन्ताद्रूपमुख्याः पदार्थाः भासन्ते ।** तर्हि निमीलितनेत्रस्यापि पदार्थभानमस्त्विति तत्राह—किंभूताभिः? **अनुपदं** तत्कालं **इन्द्रियास्यप्रसृतिभिः** इन्द्रियास्यैः इन्द्रियमुख्यैः प्रसृतिः प्रसारो यासां ताभिः ॥ ९३ ॥

---

अथोपाधावेव त्रेधा ब्रह्मप्रतीतिरस्तीत्याह—

**पूर्णात्मानात्मभेदात् त्रिविधमिह परं बुद्ध्यवच्छिन्नमन्यत् तत्रैवाभासमात्रं गगनमिव जले त्रिप्रकारं विभाति । अम्भोवच्छिन्नमस्मिन् प्रतिफलितमतः पाथसोऽन्तर्बहिश्च पूर्णावच्छिन्नयोगे व्रजति लयमविद्या स्वकार्यैः सहैव ॥ ९४ ॥**

इहोपाधौ पूर्णं च आत्मा च अनात्मा चेति **त्रिविधं** ब्रह्म भासते । तत्रैकं **परं** पूर्णं उपाधेर्बाह्याभ्यन्तरतो वर्तमानम् । तथा द्वितीयं **बुद्ध्यवच्छिन्नं** बुद्ध्या युतम् । तथा **अन्यत्** तृतीयं **तत्रैव** बुद्धौ **आभासमात्रं** प्रतिबिम्बस्वरूपम् । किमिव? **जले त्रिप्रकारं गगनमिव विभाति ।** अथ प्रकारत्रयमाह—एकं **अम्भोवच्छिन्नं** उदकावृतं, अपरं तस्मिन्नेवोदके **प्रतिफलितं** प्रतिबिम्बितं, तृतीयं **अतः** अस्मात् **पाथसः** उदकात्सकाशात् **अन्तर्बहिश्चेति** । एवं **पूर्णावच्छिन्नयोगे** सति उपाधिभूता **अविद्या स्वकार्यैः** प्रतिबिम्बादिभिः सह **लयं** नाशं याति; अधिष्ठानसाक्षात्कारे आभासो नश्यतीत्यर्थः ॥ ९४ ॥

---

अथ सूत्ररूपं सर्वात्मकं ब्रह्माह—

**दृश्यन्ते दारुनार्यो युगपदगणिताः स्तम्भसूत्र-प्रयुक्ताः सङ्गीतं दर्शयन्त्यो व्यवहृतिमपरां लोक-सिद्धां च सर्वाम्। सर्वत्रानुप्रविष्टात् अभिनवविभ-वात् यावदर्थानुबन्धात् तद्वत् सूत्रात्मसंज्ञात् व्यव-हरति जगत् भूर्भुवस्स्वर्महान्तम्॥ ५५॥**

**युगपदे**कसमयावच्छेदेन **अगणिता** अनेकाः **दारुनार्यः** काष्ठ-रचिताः अचेतना अपि नार्यो नर्तक्यः **सङ्गीतं** वाद्यनृत्यात्मकं **दर्शयन्त्यो दृश्यन्ते**। न ह्यचेतनेषु तथात्वं युक्तमित्याश-ङ्क्याह—किंभूता नार्यः? **स्तम्भसूत्रप्रयुक्ताः** शिल्पकेन रचितं यत् स्तम्भान्तः सूत्रं तेन प्रयुक्ताः तालादिनियमेन चेष्टां प्रा-पिताः। अथ न केवलं सङ्गीतं दर्शयन्त्यः, किंतु **लोकसिद्धां सर्वां व्यवहृतिं च** लोकप्रसिद्धा सर्वा व्यवहृतिः व्यवहारः मल्लयुद्धशस्त्रसाधनमृगयादिः तमपि दर्शयन्त्यः। तद्वत् **सर्वत्रा-नुप्रविष्टात् सूत्रात्मसंज्ञात्** परमात्मनः प्रेरकात् **भूर्भुवस्स्वर्महान्तं जगद्व्यवहरति**। किंभूतात्? **अभिनवविभवात्** अतर्क्यसाम-र्थ्यात्। पुनः किंभूतात्? **यावदर्थानुबन्धात्** यावानर्थः प्रयो-जनं तावानेव सम्बन्धो यस्मात् यस्मिन्व्यवहारे यावत्प्रयोजनं तावदेवानुबध्नाति नियतत्वेन संबन्धं प्रापयति, न त्वनियतत्वेन। अत्र श्रुतिः—

> वायुर्वै गौतम तत्सूत्रं वायुना वा गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति।[1] इति।

---

[1]बृ. उ. ५-२-७.

अथैतदर्थे ऋक्शाखीया श्रुतिश्च—

**स्त्रियः सतीस्ता उ मे पुंस आहुः**
**पश्यदक्षण्वान्न विचेतदन्धः ।**
**कविर्यः पुत्रः स ईमाचिकेत**
**यस्ता विजानात्स पितुः पिताऽसत् ॥**[1]

भाष्यं—याः इदानीं स्त्रियः सतीः स्त्रीत्वं प्राप्ताः आहुर्लौकिकाः ताः उ तानेव मे मह्यं पुंसः पुरुषानाहुः प्रतिपादयन्ति तत्त्वज्ञाः । कथमन्यस्यान्यभावः? उच्यते—एकस्यैव निरस्तसमस्तोपाधिकस्यात्मनः तत्तद्देहावस्थानमात्रेण तत्तद्व्यपदेशोपपत्तेः । श्रूयते हि—

**त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।**[2]

इत्यादि । स्त्रीत्वं पुंस्त्वं चोभयमपि वस्तुतो नास्तीत्युक्तं भवति । श्रुतिस्तदभावं बोधयति—

**नैव स्त्री न पुमानेष नैव चायं नपुंसकः ।**
**यद्यच्छरीरमादत्ते तेन तेन तथोच्यते ॥**[3]

अमुमर्थमत्यन्तानिगूढं अक्षण्वान् ज्ञानदृष्ट्युपेतः कश्चित्पश्यत् जानाति । तथा अन्धः अतथारूपः स्थूलदृष्टिः न विचेतत् तत्र न विचेताति न जानाति । किंतु पुत्रः वयसा अल्पोपि यः कविः क्रान्तप्रज्ञः ज्ञानी स्यात् स ईं इममर्थं आचिकेत जानाति । यः एवमुक्तलक्षणस्य परमात्मनः जातानि स्त्रीत्वपुरुषत्वादीनि विजानात् औपाधिकानि विजानीयात् स पितुः स्वोत्पादकस्यापि ज्ञानरहितस्य पिता असत् पितृवत्पूज्यो भवति ॥ ९९ ॥

---

अथ सत्यशब्दव्यपदेश्यं ब्रह्माह—

**तत् सत्यं यत् त्रिकालेष्वनुपहतमदः प्राणदिग्व्योममुख्यं यस्मिन् विश्रान्तमास्ते तदिह निगदितं**

---

[1] ऋग्वे. १-१६४-१६. [2] श्वे. ४-३. [3] श्वे. ५-१०

**ब्रह्म सत्यस्य सत्यम् । नास्त्यन्यत् किंच यद्वत् परमधिकमतो नाम सत्यस्य सत्यं सच्च त्यच्चेति मूर्ताद्युपहितमवरं सत्यमस्यापि सत्यम् ॥ ५६ ॥**

**यत्त्रिकालेषु** भूतभविष्यद्वर्तमानेषु **अनुपहतं** उपहतिवर्जितं अबाधितं **अदः** अमूर्तं **प्राणादिग्व्योममुख्यं** प्राणाः मुख्यप्राणादयः दिशः व्योम—मुख्यशब्दात् कालादि—तदेव **सत्यम्** । यद्वा प्रकारान्तरेणाह—**अतः** अस्माद्ब्रह्मणः सकाशात् **अन्यत्परं** उत्कृष्टं **अधिकं** महत्किंचिदपि **सत्यस्य नाम नास्ति** । यद्यस्ति, तर्हि वेदेषु कथं न प्रसिद्धं अतः ब्रह्मैव सत्यत्वव्यपदेश्यम् । अथ सत्यशब्दव्युत्पत्तिमाह—**सच्च त्यच्चेति** । सन्मूर्तं पृथिव्यप्तेजोरूपं त्यच्चेति यदमूर्तौ वाय्वाकाशौ ताभ्यां **उपहितं** आश्रितं यत् **अवरं** शबलं ब्रह्म **अस्यापि सत्यं** ब्रह्म ॥ ५६ ॥

---

अथ सत्यस्य सत्यमिति दृढीकुर्वन् सदृष्टान्तमाह—

**यत्किंचिद्भात्यसत्यं व्यवहृतिविषये रौप्यसर्पाम्बुमुख्यं तद्वै सत्याश्रयेणेत्ययमिह नियमः सावधिर्लोकसिद्धः । तद्वै सत्यस्य सत्ये जगदखिलमिदं ब्रह्मणि प्राविरासीत् मिथ्याभूतं प्रतीतं भवति खलु यतः तच्च सत्यं वदन्ति ॥ ५७ ॥**

लोके **व्यवहारविषये** दृश्यजाते **यत्किंचिद्रौप्यसर्पाम्बुमुख्यं असत्यं भाति** शुक्तिकायां रजतं, रज्ज्वां सर्पः, मरीचिकास्वम्बु, एवमेतत्प्रमुखमसत्यं यद्भासते **तत् सत्याश्रयेणैव** भासते । शुक्तिकाद्यधिकरणं हि व्यावहारिकं सत्यं, तदाश्रयेणैव रौप्यसर्पाम्बुमुख्य-

मसत्यं भाति, तद्व्यतिरेकेण प्रतिभासासंभवात् । इह लोके **अयं नियमः सावधिः लोकसिद्धो दृष्टः** सत्याश्रयेणैवासत्यं भातीति नियमः लोकसिद्धोऽस्ति । किंभूतो नियमः? **सावधिः** अवधिना सह वर्तमानः, नेदं रजतमित्युत्तरकाले बाधदर्शनात् । एवं यावद्बाधादर्शनं तावदेव रजतादि भासते । अत एवास्यासत्यत्वम् । तद्वत् **सत्यस्य सत्ये ब्रह्मणि इदमखिलं जगत् प्राविरासीत्** प्रादुर्भूतं तदपि सावधित्वात् प्रातिभासिकमित्यर्थः । प्रकारान्तरेण सत्यं दृढीकरोति—**मिथ्येति । मिथ्याभूतं** रजतादि येन प्रतीयते प्रतीतिविषयो भवति **तत् खल्विति** निश्चयेन **सत्यं वदन्ति** ॥ ९७ ॥

---

अथ पूर्णं ब्रह्म दर्शयति—

**यत्राकाशावकाशः कलयति च कलामात्रतां यत्र कालो यत्रैवाशावसानं बृहदिह हि विराट्पूर्वमर्वागिवास्ते । सूत्रं यत्राविरासीत् महदपि महतस्तद्धि पूर्णाच्च पूर्णं संपूर्णादर्णवादेरपि भवति यथा पूर्णमेकार्णवाम्भः ॥ ९८ ॥**

हि इत्याश्चर्ये । बृहत् महदपि स्थूलमपि **विराट्पूर्वं** ब्रह्म विराडिति पूर्वं उपलक्षणं यस्य, एवंविधं विश्वरूपाख्यं **अर्वागिवास्ते** । तत्किं? **यत्र** यस्मिन् **आकाशावकाशः** आकाशस्याप्यवस्थानं, तथा **यत्र कालः कलामात्रतां** लेशमात्रतां **कलयति** प्राप्नोति, तथा **यत्र** आशावसानं दिक्पर्यवसानं भवति । एवंविधमपि अर्वागिवास्ति । तथा **तत्र सूत्रं आविरासीत्** । किंभूतं? **महतोपि** विराजोपि **महत्** हिरण्यगर्भाख्यमित्यर्थः । एवंविधं यत्

हीति निश्चयेन **तदेव पूर्णात्पूर्णं** ब्रह्म । अत्र दृष्टान्तमाह—**य-थेति** । **यथा** स्वरूपेणैव पूर्णात् **अर्णवादेः** समुद्रादिपदार्थात् **एकार्णवाम्भः** एकीभूतं सप्तसमुद्रोदकं पूर्णात्पूर्णं तद्वत्प्रकृतेऽपीत्यर्थः। अत्र श्रुतिः—

**पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥**[1]

भाष्यं—एकं सावधिपूर्णं, तदापेक्षिकं, यथा नदीह्रदात्तडागः पूर्णः, तडागात्समुद्रः । तथा इदं मूर्तं पूर्णं, तदपेक्षया अदः अमूर्तं पूर्णं, तस्मादपि पूर्णमुदच्यते उत्कर्षं प्राप्नोति । तत्पूर्णस्य पूर्णं पूर्णत्वं आदाय अङ्गीकृत्य सम्मेलनेन एकीभावं प्राप्य पूर्णमेवावशिष्यते । तदेव पूर्णात्पूर्णं, अनतिशयं पूर्णमित्यर्थः ॥ ५८ ॥

---

अथ सर्वान्तरं ब्रह्माह—

**अन्तः सर्वौषधीनां पृथगमितरसैः गन्धवीर्यैर्वि-पाकैः एकं पाथोदपाथः परिणमति यथा तद्वदेवान्त-रात्मा । नानाभूतस्वभावैः वहति वसुमती येन विश्वं पयोदो वर्षत्युच्चैः हुताशः पचति दहति वा येन सर्वान्तरोऽसौ ॥ ५९ ॥**

स्पष्टार्थमिदं पद्यम् । श्रुतिरपि—‘यः पृथिव्यां तिष्ठन्पृ-थिव्या अन्तरो यं पृथिवी न वेद[2]’ इत्यादिका ॥ ५९ ॥

---

[1] बृ. उ. ७-१-१.

[2] बृ- इ. ५-७-३.

अथ ब्रह्मण एकत्वे मूलश्रुतिसहकारिणीमीशावास्योपनिषच्छ्रुतिं संवादयन्नाह—

**भूतेष्वात्मानमात्मन्यनुगतमखिलं भूतजातं प्रपश्येत् प्रायः पाथस्तरङ्गान्वयवदथ चिरं सर्वमात्मैव पश्येत् । एकं ब्रह्माद्वितीयं श्रुतिशिरसि मतं नेह नानाऽस्ति किंचित् मृत्योराप्नोति मृत्युं स इह जगदिदं यस्तु नानेव पश्येत् ॥ ६० ॥**

**भूतेषु** बहुषु **आत्मानं** एकं **पश्येत्** । तथा एकस्मिन् **आत्मनि अखिलं** समग्रं **भूतजातं प्रायः** बाहुल्येन **चिरकालं प्रपश्येत्** । किमिव? **पाथस्तरङ्गान्वयवत्** पाथश्च तरङ्गाश्च तेषामन्वयः संबन्धः तद्वत् । यथैकस्मिन्नुदके सहस्रशस्तरङ्गाः दृश्यन्ते, तथा सर्वेषु तरङ्गेषु एकं जलमेव दृश्यते, नान्यत् किंचित्पदार्थान्तरं अनुभूयत इत्यर्थः । एवमेतैरुक्तप्रकारैः **एकमद्वितीयं ब्रह्मैव** श्रुतिभिरभिहितं निरूपितं, परं तु **इह किंचिन्नाना न** विद्यते, वस्तुतस्तु नाना न भवति । परं तु **यः नानेव पश्येत् स मृत्योः** देहाहंकाराभिनिवेशात् पुनः **मृत्युमेवाप्नोति** । श्रुतिरपि—

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।**

**सर्वभूतेषु चात्मानं ततो न विचिकित्सते**[1] ॥

न विचिकित्सति उत्तमाधमभावेन तारतम्यं न करोति ।

तथा—

**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति**[2] ॥ ६० ॥

———

[1] ई. ६.

[2] बृ. ह. ६-४-१९.

अथोक्तं प्रमेयं दृष्टान्तेन दृढीकुर्वन्नाह—

**प्राक् पश्चादस्ति कुम्भाद्गगनमिदमिति प्रत्यये सत्यपीदं कुम्भोत्पत्तावुदेति प्रलयमुपगते नश्यतीत्यन्यदेशम् । नीते कुम्भेन साकं व्रजति भजति वा तत्प्रमाणानुकारौ इत्थं मिथ्याप्रतीतिः स्फुरति तनुभृतां विश्वतस्तद्वदात्मा ॥ ६१ ॥**

इदं गगनं आकाशः कुम्भात् सकाशात् प्राक् पश्चादस्तीति प्रत्यये सत्यपि तनुभृतां इत्थं इतिप्रकारैः मिथ्याप्रतीतिः स्फुरति । अथ तदेवाह—इदं घटावच्छिन्नं गगनं घटोत्पत्तौ सत्यां उदेति उत्पद्यते । तथैव घटे प्रलयं नाशं उपगते घटाकाशो नश्यति । तथा कुम्भे अन्यदेशं प्रदेशान्तरं नीते सति गगनमपि कुम्भेन साकं व्रजति तत्प्रमाणानुकारौ भजति लघीयसि महति च घटे तत्प्रमाणं भवति । यथा दीर्घे वक्रे निम्ने वा घटे तत्तदाकारं भजति । तद्वत् विश्वतः चराचरात्प्राक् पश्चादात्मा वर्तत इति ज्ञात्वाऽपि पूर्ववत्तत्रावस्थाकल्पनं भ्रान्तमेवेत्यर्थः ॥ ६१ ॥

---

अथ प्रकारान्तरेणापि ब्रह्मणः सर्वात्मकत्वमाह—

**यावान् पिण्डो गुडस्य स्फुरति मधुरिमैवास्ति सर्वोऽपि तावान् यावान् कर्पूरपिण्डः परिणमति सदामोद एवात्र तावान् । विश्वं यावद्विभाति द्रुमनगनगरारामचैत्याभिरामं तावच्चैतन्यमेकं प्रविकसति यतोऽन्ते त[1]दात्मावशेषम्[2] ॥ ६२ ॥**

---

[1]यतस्तत्त.

[2]विशेषम्.

स्पष्टार्थमिदं पद्यम् ॥ ६२ ॥

---

अथ पुनरपि ब्रह्मणः सर्वात्मकत्वमाह—

**वाद्यान्नादानुभूतिः यदपि तदपि सा नूनमाघातगम्या वाद्याघातध्वनीनां न पृथगनुभवः किंतु तत्साहचर्यात् । मायोपादानमेतत् सहचरितमिव ब्रह्मणाऽऽभाति तद्वत् तस्मिन्प्रत्यक् प्रतीते न किमपि विषयीभावमाप्नोति यस्मात् ॥ ६३ ॥**

यद्यपि **वाद्यात्** सकाशात् **नादानुभूतिः** भवति **तदपि** तथाऽपि **सा नादानुभूतिः आघातगम्या** आघातव्यतिरेकेण नोत्पद्यते । आघात इत्युपलक्षणं—क्वचिदाघातेन क्वचिद्वादनेन क्वचिद्वायोरास्फुरणेन नादानुभूतिर्भवति । **किंतु साहचर्यात्** एकसमयावच्छेदेन भवतीति प्रत्यक्षासिद्धम् । **तद्वत् एतन्मायोपादानं** विश्वं **ब्रह्मणा** साकं **सहचरितमेवाभाति । यस्मात्** कारणात् **तस्मिन्** ब्रह्मणि **प्रत्यक्** विपरीतरीत्या **प्रतीते** अनुभूते सति **किमपि** प्रातिभासिकं **विषयीभावं न प्राप्नोति** । अत्र श्रुतिः—

> **यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेर्ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ।**[1]

भाष्यं—यथा हन्यमानस्य दुन्दुभेर्बाह्यान् पृथक् स्थितान् शब्दान् ग्रहणाय ग्रहीतुं न शक्नुयात्, किंतु दुन्दुभेर्ग्रहणेन ज्ञानेन सह दुन्दुभ्याघातस्य साहचर्येण शब्दो गृहीतः ॥ ६३ ॥

---

[1] बृह. ४-४-७.

अथ निरूपितप्रमेयस्य पर्यवसितमर्थमाह—

**दृष्टः साक्षादिदानीमिह खलु जगतामीश्वरः संविदात्मा विज्ञान[1]स्थाणुरेको गगनवदभितः सर्वभूतान्तरात्मा । दृष्टं ब्रह्मातिरिक्तं सकलमिदमसद्रूपमाभासमात्रं शुद्धं ब्रह्माहमस्मीत्यविरतमधुनाऽत्रैव तिष्ठेदनीहः ॥ ६४ ॥**

स्पष्टार्थः ॥ ६४ ॥

विज्ञानकोशप्रकरणं समाप्तम्.

---

अथानन्दकोशो व्याख्यायते । तत्रानन्दस्वरूपस्य ब्रह्मणोऽभिव्यक्तिः सुषुप्तौ भवतीति सुषुप्तिस्वरूपमाह—

**इन्द्रेन्द्राण्योः प्रकामं सुरतसुखजुषोः स्याद्रतान्तः सुषुप्तिः तस्यामानन्दसान्द्रं पदमतिगहनं यत्स आनन्दकोशः । तस्मिन् नो वेद किंचिन्निरतिशयसुखाभ्यन्तरे लीयमानो दुःखी स्याद्बोधितः सन्निति कुशलमतिः बोधयेन्नैव सुप्तम् ॥ ६५ ॥**

इन्द्रश्च इन्द्राणी च तयोः **प्रकामं** स्वेच्छया **सुरतसुखं** अभिलषतोः यो **रतान्तः** सुरतसमाप्तिः सा **सुषुप्तिः** । यथा लोके शुक्रद्रावोपलक्षिते सुरतान्ते सुखाविर्भावो भवति तथैवेन्द्रेन्द्राण्योः

---

[1] विज्ञातः

सुषुप्तौ सुखाविर्भावो भवति । तत्रेन्द्रो नाम दक्षिणेऽक्षिण[1] पुरुषः । तथा वामनेत्रस्थं अर्थप्रकाशकं ज्योतिः सेन्द्राणी । तयोर्जाग्रत्यां भ्रूमध्येऽवस्थानं, स्वापकाले तु तस्मादवरुह्य हृदयाकाशे पुरीतति स्थाने तिष्ठतोस्तयोः सुरतप्रसङ्गः स्वप्नावस्था । सुरतान्तः सुषुप्तिः । **तस्यां यत् आनन्दसान्द्रं पदं** स्थानं स एवानन्दकोशः । **तस्मिन्** सुषुप्त्युपलक्षिते आनन्दकोशे जीवः **किंचिन्न वेद** न जानाति । कुत इत्यत आह—**निरतिशयसुखाभ्यन्तरे लीयमानः** न विद्यते अतिशयो यस्मात्तन्निरतिशयं सुखं परमानन्दः तत्र लीयमानो लुप्ताहंकारत्वात् । अथ तस्य सुखस्य निरतिशयत्वं प्रकटयन्नाह—**दुःखी स्यादिति** । यतो **बोधितः** बलात्कारेण जाग्रद्दशां प्रापितः **सन् दुःखी** भवति दुःखं प्राप्नोति, भोजनादिविषयसुखप्राप्त्यर्थं अपि बोधितः दुःखमाप्नोति । तस्माद्विषयसुखापेक्षया आत्मसुखमेव निरतिशयमित्यर्थः । यस्मादेवं तस्मात्कारणात् **कुशलमतिः** ज्ञाता पुरुषः **सुप्तं** सुषुप्त्यवस्थं **पुरुषं नैव बोधयेत्** निद्राभङ्गं न कुर्यात् श्रुत्युक्तप्रत्यवायश्रवणात् । एवमिन्द्रेन्द्राणीसुरतविषये जगन्मिथ्यात्वप्रकरणे बह्वृचः शातपथ्यः श्रुतयः सभाष्याः सम्यगुदाहृताः सन्ति । अथ स्वप्नसुषुप्तिविषयिणी श्रुतिः—

> **अथ हैतत्पुरुषः स्वपिति नाम गृहीत एव प्राणो भवति गृहीता वाक् गृहीतं चक्षुः गृहीतं श्रोत्रं गृहीतं मनः स यत्रैतत्स्वप्नया चरति ते हास्य लोकास्तदुतेव महाराजो भवति उतेव महाब्राह्मणः उतेवोच्चावचं निगच्छति स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तते एवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ।**[2]

---

[1] दक्षिणेक्षन्पुरुषः

[2] बृह. ४-१-१८.

भाष्यं—ह इति। यदा एतदयं पुरुषः स्वपिति निद्रां करोति तदा प्राणः क्षुत्पिपासाप्रवर्तकः गृहीत आकर्षित एव भवति, वाक् चक्षुः श्रोत्रमपि गृहीतं भवति, स्वस्वविषयग्रहणाशक्तत्वात्। तथा संकल्पविकल्पात्मकं मनोपि गृहीतम्। अथेत्यनन्तरं एतदयं जीवः स्वप्नया स्वप्नावस्थया चरति। ह इति निश्चयेन। अस्य ते लोकाः क्रीडास्थानानि। तद्धुतेव तत्क्षण एव महाराजो भवति। तथा तद्धुतेव तत्क्षणादेव महाब्राह्मणः श्रोत्रियो भवति। उतेवोच्चावचं उच्चापकृष्टयोनिं निगच्छति। अत्र दृष्टान्तमाह—यथा महाराजः जानपदान् स्वप्रजाः गृहीत्वा आक्रम्य स्वे जनपदे प्राप्तसाम्राज्ये यथाकामं यथेच्छं परिवर्तते तं व्यापारं करोति एवमेव एष जीवः प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते॥

तथा—

**अथ यदा न कस्य च न वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततिमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते। स यथा कुमारो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते।**[1]

भाष्यं—अथ स्वप्नावस्थातिक्रमादनन्तरं यदा सुषुप्तः सुषुप्त्यवस्थां प्राप्तो भवति अथ तदुपलक्षणमाह—यदेति। यदा न कस्य चन वेद कस्यापि किंचिदपि न जानाति। तदा हिताः सुखकारिण्यो द्वासप्ततिसहस्राणि नाड्यः हृदयात्सकाशात् अभि समन्ततः पुरीततिः एकान्तस्थलं तस्मादभितः प्रतिष्ठन्ते आवृत्य स्थिताः भवन्ति। ताभिर्नाडीभिः प्रत्यवसृप्य आवरणं विधाय पुरीतति एकान्तस्थले शेते निश्चेष्टतया तिष्ठति। अत्र दृष्टान्तमाह—स यथेति। यथा कुमारो बालः महाब्राह्मणः श्रोत्रियो वा अतिघ्नीं स्थूलसूक्ष्मप्र-

[1]बृह. ४-१-१७, १८.

पञ्चनाशकर्त्रीं आनन्दस्य पदवीं गत्वा शयीत । अनेन सर्वेषां जीवानां सुषुप्तिसुखे तारतम्यं नास्तीति सूचितम् । एवमेवोक्तप्रकारेण पुरीतति शेते ॥ ६५ ॥

---

अथास्मिन्नर्थे ऋक्शाखीयां श्रुतिं संवादयन्नाह—

**सर्वे नन्दन्ति जीवा अधिगतयशसा गृह्णता चक्षुरादीन् अन्तः सर्वोपकर्त्रा बहिरपि च सुषुप्तौ यथा तुल्यसंस्थाः । एतेषां किल्बिषस्पृक् जठरभृतिकृते यो बहिर्वृत्तिरास्ते त्वक्चक्षुःश्रोत्रनासारसनवशमितो याति शोकं च मोहम् ॥ ६६ ॥**

अधिगतेन प्राप्तेन यशसा ब्रह्मणा कृत्वा सर्वे जीवाः नन्दन्ति परमसुखं प्राप्नुवन्ति, आत्मसाक्षात्कारे वर्णाश्रमादयः प्रयोजका न भवन्ति । किंभूतेन ब्रह्मणा? **चक्षुरादीनन्तर्गृह्णता** आक्रमता । पुनः किंभूतेन? **बहिरपि च सर्वोपकर्त्रा** इन्द्रियद्वारा विषयभोगदानेनाराद्युपकारकेण । किंभूताः जीवाः? **तुल्यसंस्थाः** आत्मप्राप्तौ तुल्या संस्था संस्थानं येषां ते, जातिप्रयुक्ततारतम्यवर्जिता इत्यर्थः । अत्र दृष्टान्तमाह—**सुषुप्ताविति** । **सुषुप्तौ** यथात्माकारान्तःकरणवृत्तौ सत्यां सकलजीवानां सुखतारतम्यं नास्ति तद्वदात्मप्रतीतावपि । अथ **एतेषां** जीवानां मध्ये **यः जठरभृतिकृते** अन्नादिविषयभोगार्थं **बहिर्वृत्तिरास्ते** स **किल्बिषस्पृक्** किल्बिषं दुःखं स्पृशति स तथा । अथैतदेव प्रकटयन्नाह—**त्वगित्यादि** । **त्वक्चक्षुश्श्रोत्रनासारसनवशमितः** इन्द्रियाधीनसत्त्वं प्राप्तः सन् **शोकं मोहं च याति** विषयाप्राप्तौ शोकं प्राप्तौ च मोहमित्यर्थः । श्रुतिः—

**सर्वे नन्दन्ति यशसाऽऽगतेन सभासाहेन सख्या सखायः।**
**किल्बिषस्पृत् पितुषणिर्ह्येषामरं हितो भवति वाजिनाय ॥**[1]

अत्र प्रथममाचार्याभिमतमध्यात्मरीत्या रावणभाष्यं—'न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः'[2] इति श्रुतेः यशसा परमात्मना आगतेन प्राप्तेन सर्वे जीवाः नन्दन्ति परमानन्दं प्राप्नुवन्ति। यथा नृपशुपक्षिप्रभृतयः सर्वे जीवाः सुषुप्तिसमये परमसुखिनो भवन्ति तद्वदात्मप्राप्तावित्यर्थः। किंभूतेन यशसा? सभासाहेन सभाः तेजोरूपान् अर्थप्रकाशकान् चक्षुरादीन् सहते आक्रमते स तथा। 'गृहीता वाक् गृहीतं चक्षुः'[3] इति श्रुतेः। पुनः कथंभूतेन? सख्या उपकारिणापि विषयभोगनिमित्तत्वेनेत्यर्थः। किंभूताः जीवाः? सखायः समानज्ञानाः सदृशसुखानुभवाः। अथैषां जीवानां मध्ये यः पितुषणिः, पितुरित्यन्ननाम, पितुः सनोति सः पितुषणिः, केवलमुदरंभरः स किल्बिषस्पृक् दुःखभागी भवति। हि यस्मात्कारणात् अरमत्यर्थं वाजिनाय इन्द्रियवीर्याय हितः तत्परो भवति। अथैतदुक्तं भवति—सुखशब्दव्यपदेश्यं आत्मसुखमेव सुखं, इन्द्रियसुखं तु दुःखपक्षान्तर्भूतमित्यर्थः॥

अथाधिदैवरीत्या सायणभाष्यकारः—सर्वे नन्दन्तीति। सखायः समानाख्यानाः समानज्ञानाः सर्वे मनुष्याः सभ्याः सभासाहेन सभां सोढुं शक्नुवता सख्या ऋत्विजा प्रतिभूतेन यज्ञं प्रत्यागतेन यशसा यशस्विना सोमेन हेतुना नन्दन्ति हृष्टाः भवन्ति। स हि स एव सोमः एषां जनानां किल्बिषस्पृक् यः स्वस्माद्न्यः पुरुषः श्रेष्ठतामश्नुते स किल्बिषं भवति बाध्यत्वेन यथा पापं सदाचारैर्बाधितव्यं भवति तद्वत्पापरूपस्य शत्रोर्बाधकः। यद्वा—यज्ञे साध्वनुप्रवचनाकरणेन यत्किंचित्किल्बिषमेषां ज्ञायते,

---

[1] ऋ. १०-७१-१०. [2] श्वेत. ४-१९ [3] बृह. ४-१-१८.

तं यो बाधते स किल्बिषस्पृत् । यथा त्वं पितुषणिः पितुरित्यन्ननाम दक्षिणा वा तमनेन सोमेन सनोति यजमानः । किंच हितः पात्रेषु निहितः सोमः वाजिनाय इन्द्रियवीर्याय तत्कर्तुं अरं अलं पर्याप्तं समर्थो भवति ॥ ६६ ॥

---

अथ परमानन्दापेक्षया क्षुद्रानन्दानां अतितुच्छत्वं अस्तीत्यनुभवैकसिद्धत्वेन निरूपयति—

**जाग्रत्यामन्तरात्मा विषयसुखकृतेऽनेकयत्नान् विधास्यन् श्राम्यत्सर्वेन्द्रियौघोऽधिगतमपि सुखं विस्मरन् याति निद्राम् । विश्रामाय स्वरूपे त्वतितरसुलभं तेन चातीन्द्रियं हि सुखं सर्वोत्तमं स्यात् परिणतिविरसादिन्द्रियोत्थात् सुखाच्च ॥ ६७ ॥**

**जाग्रत्यां** जाग्रदवस्थायां **अन्तरात्मा** जीवः **विषयसुखकृते अनेकयत्नान् विधास्यन्** करिष्यन् वर्तते—तत्र विद्वान् देशपर्यटनात् दुःशीलप्रभुसमर्जनात्, शूरस्तु संग्रामादिना प्राणसमर्पणात्, चोरस्तु देहहिंसापर्यवसन्नकर्मकरणात्, तथैव गारुडादिविद्योपजीविनः । एवं सर्वोऽपि जनः स्वस्वोद्यमानतिक्रमेण विषयसुखाय यतते । तत्र तत्र **श्राम्यत्सर्वेन्द्रियौघः** शिथिलीभूतकरचरणवाग्व्यापारः पुमान् विधिवशात् प्राप्तमपि विषयं **विस्मरन् विश्रामाय** हृदयाकाशावस्थिते स्वात्मरूपे क्षणं **निद्रां याति** । अप्राप्ते विषये समुद्विग्नस्य विश्रान्त्यै निद्रैव शरणमित्यर्थः । **तेन** कारणेन **इन्द्रियोत्थात् सुखात् अतीन्द्रियं सुखं सर्वोत्तमं** सर्वापेक्षया श्रेष्ठतमम्, तथा **अतितरसुलभं** विषय-

सुखप्रयासापेक्षया अल्पप्रयाससाध्यमित्यर्थः । अथ अतिप्रयाससाध्यं किमपि विषयसुखं क्षणभङ्गुरं अन्ते च विरसमित्याह—

किंभूतादिन्द्रियसुखात् ? **परिणतिविरसात्** परिणामे दुःखप्रदात् ॥ ६७ ॥

---

अथात्र श्रुत्युक्तं दृष्टान्तमुपन्यसन् उक्तार्थमेव दृढीकुर्वन्नाह—

**पक्षावभ्यस्य पक्षी जनयति मरुतं तेन यात्युच्चदेशं लब्ध्वा वायुं महान्तं श्रममपनयति स्वीयपक्षौ प्रसार्य । दुःसंकल्पैः विकल्पैः विषयमनु कदर्थीकृतं चित्तमेतत् खिन्नं विश्रामहेतोः स्वपिति चिरमहो हस्तपादान्प्रसार्य ॥ ६८ ॥**

**पक्षी पक्षावभ्यस्य** व्यापारयित्वा **मरुतं** वायुं उत्पादयति । **तेन** वायुना । **उच्चदेशं याति** तत्रोच्चतराकाशदेशे **महान्तं वायुं लब्ध्वा पक्षौ प्रसार्य** प्राक्तनं **श्रममपनयति** त्यजति । एवं प्रकृते **दुःसंकल्पैः** तद्विपरीतैः **विकल्पैश्च विषयमनु** लक्षीकृत्य **एतच्चित्तं कदर्थीकृतम्** । ततः **खिन्नं** सत् **हस्तपादान् प्रसार्य विश्रामहेतोश्चिरं स्वपिति** । अत्र श्रुतिः—

> तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संलयाय ध्रियत एवमेवायं पुरुषः एतस्मादन्ताय धावति यत्र सुप्तो न कं चन कामं कामयते न कं चन स्वप्नं पश्यति ॥[1]

भाष्यं—यथा यद्वदस्मिन् दृक्प्रसारोपलक्षित आकाशे श्येनः पक्षिकुलनिहन्ता पतत्रिविशेषः सुपर्णो गृध्रादिः विपरिपत्य उच्चै-

---

[1]बृह. ६-३-१९.

रुत्प्लुत्य तत्र श्रान्तः सन् पक्षौ संहत्य प्रसार्य संलयाय विश्रान्तये ध्रियते प्रयत्नं करोति । एवमेवायं पुरुष एतस्माज्जागृतिप्रयासात् अन्ताय उपरमाय धावति तूर्णं स्वमूलमाश्रयते । तत्र सुप्तः सन् जाग्रद्दशावन्न कं चन कामं विषयोद्देशं* च करोति । न वा स्वप्नं पश्यति ।

अथ हस्तपादान्प्रसार्येत्यत्र, तथा बोधितः सन्दुःखी स्यादित्यत्र च श्रुतिः—

**तं नायतं बोधयेदित्याहुः ॥**[1] इति ।

भाष्यं—तस्मात्कारणादायतं विस्तारितहस्तपादाद्यं प्रसुप्तं न बोधयेत् जागरं न प्रापयेत् इति श्रूयते इति आहुः ।

तथा चोक्तमग्निरहस्ये दशमकाण्डे—

**तस्मादु ह स्वपन्तं धुरेव न बोधयेत् नैते देवते मिथुनीभवन्त्यौ न हिनसानीति ।**

भाष्यं—तस्मात्कारणात् उह नियमेन स्वपन्तं पुरुषं धुरेव सहसा न बोधयेत् । यतः एते देवते इन्द्रेन्द्राण्यौ मिथुनीभवन्त्यौ सुरतसुखासक्तौ न हिनसानीति न हन्मीति मत्वा न बोधयेदित्यर्थः । अनया निद्राभङ्गकर्तुः प्रत्यवायोपि दर्शितः ॥६८॥

---

अथ सुप्तेः परिणामावस्थामाह—

**आश्लिष्यात्मानमात्मा न किमपि सहसैवान्तरं वेद बाह्यं यद्वत्कामी विदेशात्सदनमुपगतो गाढमाश्लिष्य कान्ताम् । यात्यस्तं तत्र लोकव्यवहृतिर-**

---

*विषयोद्देशेनेच्छां.

[1] बृह. ६-३-१४.

**खिला पुण्यपापानुबन्धः शोको मोहो भयं वा सम-**
**विषममिदं न स्मरत्येव किंचित् ॥ ६९ ॥**

**आत्मा** जीवः **आत्मानं** परमात्मानं **सहसा** अकस्मात् **आ-**
**श्लिष्य** आलिङ्ग्य एकीभूय **किमप्यान्तरं** सूक्ष्मदेहानुभूतं स्वप्नं
**बाह्यं** स्थूलदेहानुभूतं च **न वेद** न जानाति । सर्ववृत्तीनां
लीनत्वात् । अथात्र दृष्टान्तमाह—**यद्वदिति । यद्वद्विदेशात्** पर-
देशात्सकाशात् **सदनं** स्वगृहं **उपगतः कामी** चिरकालं प्रोषि-
तत्वात्कामातुरः **कान्तां** कमनीयां स्त्रियं **गाढं** अत्यौत्कण्ठ्येन
**आश्लिष्य** आलिङ्ग्य बाह्यमान्तरं वा किमपि विषयान्तरं न
वेद तद्वदित्यर्थः । अत्र श्रुतिः—

> **तद्वा अस्यैतदात्मकाममाप्तकाममकामं रूपम् । एवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किं च न वेद नान्तरम् । तद्यथा प्रियया स्त्रिया संपरिष्वक्तो बाह्यं किं च न वेद नान्तरम् ॥**[1]

भाष्यं—पूर्वश्रुतौ योऽस्य परमो लोकोऽथ यत्र सुप्तौ न कंचन
कामं कामयत इत्याद्युक्तम् । तद्वा एतस्य सुषुप्त्यवस्थां प्राप्तस्य
पुरुषस्य रूपं प्रथमतः आत्मकामं आत्मसुखान्यसुखनिरपेक्षं आ-
प्तकामं सुखप्राप्तावावाप्तसकलकामं ततः अकाममस्तमितकामं भवति ।
एवं शारीरः शरीरावच्छिन्नः परमात्मा प्राज्ञेन जीवात्मना परि-
ष्वक्तः आश्लिष्टः सन्न वेद किं च न नान्तरं बाह्यं वा ।
अत्र दृष्टान्तमाह—तद्यथेति । प्रियया प्रेमास्पदीभूतया स्त्रिया
परिष्वक्तः पुमानिति स्पष्टम् ॥ ६९ ॥

---

इदानीं मुक्तिसुषुप्त्योर्लक्षणसाम्येऽपि वैलक्षण्यं दर्शयति—

---

[1] बृह. ६-३-२१.

**अल्पानल्पप्रपञ्चप्रलय उपरतिश्चेन्द्रियाणां सुखाप्तिः जीवन्मुक्तौ सुषुप्तौ त्रितयमपि समं किं तु तत्रास्ति भेदः । प्राक् संस्कारात्प्रसुप्तः पुनरपि च परावृत्तिमेति प्रबुद्धो नश्यत्संस्कारजालो न स किल पुनरावर्तते यश्च मुक्तः ॥ ७० ॥**

**जीवन्मुक्तौ सुषुप्तौ** च एतत् **त्रितयं समं** तुल्यम् । तत्किं त्रयं? **अल्पानल्पप्रपञ्चप्रलयः** सूक्ष्मस्थूलयोः प्रपञ्चयोः प्रलयः प्रकृष्टमात्यन्तिको लयः तथा **इन्द्रियाणामुपरतिः** परमो विलयः 'गृहीत एव प्राणो गृहीता वाक्'[1] इत्यादि पूर्वमेवोक्तम् । तथा—**सुखप्राप्तिः** निरतिशयसुखप्राप्तिः । एवं चेत्तर्हि सुषुप्तिरेव मुक्तिरास्तां नाम, कथं पुनर्मुक्तिसाधनार्थं प्रयास इत्याशङ्क्याह—किं त्विति । **किंतु तत्र** सुषुप्तिमुक्त्योर्मध्ये **भेदोस्ति** । तमेवाह—**प्रसुप्तः** सुषुप्तिं प्राप्तः पुरुषः **प्राक्संस्कारात्पुनरपि परावृत्तिं एति** । तथा यश्च **प्रबुद्धः** प्रबोधं ज्ञानं प्राप्तो निरन्तरं मुक्तः सन् **नश्यत्संस्कारजातः** सन् **पुनर्नावर्तते** आवृत्तिं न प्राप्नोति । अयमर्थः—यद्यपि सुषुप्तौ सर्वप्रलयो भवति तथाऽपि तस्या दैनन्दिनत्वादाकस्मिकत्वाच्च प्राक् पूर्वं जाग्रति तदुत्पन्नाः संस्कारा बीजरूपेण तिष्ठन्ति तैरात्मा जीवं आकृष्टः पुनरावर्तते । मुक्तौ तु शनैर्ज्ञानयोगात् सर्वसंस्कारनाशो भवति । तेन न स पुनरावर्तते ॥ ७० ॥

---

अथ सकलसुखापेक्षया आत्मसुखस्य निरतिशयत्वं युक्त्या निरूपयति—

---

[1] बृह. ४-१-१७.

**आनन्दान्यश्च सर्वाननुभवति नृपः सर्वसंपत्समृद्धः तस्यानन्दः स एकः स खलु शतगुणः सन् प्रदिष्टः पितॄणाम्। आदेवब्रह्मलोकं शतशतगुणिताः ते यदन्तर्गताः स्युः ब्रह्मानन्दः स एकोऽस्त्यथ विषयसुखान्यस्य मात्रा भवन्ति ॥ ७१ ॥**

**यः सर्वसंपत्समृद्धो नृपः सर्वानन्दाननुभवति** दरिद्राणामेकैकविषयप्राप्तौ एक एवानन्दो भवति। मनागधिकानामानन्दद्वयं, एवमुत्तरोत्तरं यस्य यावतां विषयाणां प्राप्तिः तावन्तस्तस्यानन्दा भवन्ति। एवं सर्वविषयप्राप्तिः नृपस्यास्ति; अतस्तस्य सर्वानन्दभोगः। तथा च सर्वविषयानन्दाः यत्र एकीभवन्ति स एको राज्ञ आनन्दः **स खल्विति** निर्धारणे। **शतगुणः** सन् **पितॄणामानन्दः**। स एवमुत्तरोत्तरं देवलोकमारभ्य ब्रह्मलोकपर्यन्तं शतगुणिता आनन्दा भवन्ति। **ते** सर्वेऽपि **यदन्तर्गता** अन्तर्भूताः **स्युः स एको ब्रह्मानन्दोऽस्ति**। अथ अस्य ब्रह्मानन्दस्य **विषयसुखानि** पूर्वोक्तानि क्षुद्राः **मात्राः** अंशाः **भवन्ति**। यथाऽऽत्मैवोपाधिवशेन पृथक् क्षुद्रत्वेन भासते तथैव परमानन्दोपि विषयसुखाकारेणेत्यर्थः। अत्र श्रुतिः—

> **स यो मनुष्याणां राद्धः समृद्धो भवति अन्येषां अधिपतिः सर्वैर्मानुष्यकैः कामैः संपन्नतमः मनुष्याणां परमानन्दः अथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दः।**[1]

इत्यादि। तथा—

> **अथैष ब्रह्मलोकः सम्राडिति हैनमुवाचैषाऽस्य परमा संपदेषोस्य परमो लोकः एषोस्य परमानन्दः अथैतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति।**[2]

---

[1] बृह. ६-३-३३.

[2] बृह. ६-३-३२.

इति । भाष्यं—यो मनुष्याणां मध्ये राद्धः सिद्धः साम्राज्य-समृद्धः प्राप्तसर्वविषयो भवति अन्येषां मनुष्याणामधिपतिः नि-यन्ता तथा सर्वैर्मानुष्यकैः मनुष्यप्रसिद्धैः कामैः प्रार्थनीयपदार्थैः संपन्नतमः तस्य य आनन्दः स मनुष्याणां परमानन्दः । अथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणामानन्दः । जितः अर्वाक् लोको यैस्ते जितलोकास्तेषां पितॄणामित्यर्थः । एवमुत्तरोत्तरं कर्म-देवाद्यानन्दाः स्युः । अथैष ब्रह्मलोक इति । ह इति निश्चित्य एनं जनकं प्रति याज्ञवल्क्य इत्युवाच । इतीति किं? भो सम्राट् जनक! एष उक्तप्रकारेण आनन्दः ब्रह्मलोकः ब्रह्मैव लोकः प्राप्तव्यस्थानं यस्मिन् स ब्रह्मलोकः । अथास्य मुमुक्षोः पुरुषस्य एषा परमा उत्कृष्टा निरतिशया संपत्परमैश्वर्यम् । तथा एष परमो लोकः पूर्वोक्तः । तथा एषोस्य परमानन्दः । अथैतस्यैवेति । अन्यानि आत्मबहिर्मुखानि भूतानि जीवजातानि एतस्य निरूपितस्य परमानन्दस्य मात्रामेकदेशमुपजीवन्ति ये भू-तानां क्षुद्रानन्दास्ते परमानन्दस्यैवांशाः; परमानन्दे क्षुद्रानन्दाना-मन्तर्भूतत्वात् ॥ ७१ ॥

———

अत्रास्मिन्नर्थे ऋक्शाखीयां श्रुतिं संवादयन्नाह—

**यत्रानन्दाश्च मोदाः प्रमुद इति मुदश्चासते सर्व एते यत्राप्ताः सर्वकामाः स्युरखिलविरमात्केवली-भाव आस्ते । मां तत्रानन्दसान्द्रे कृधि चिरममृतं सोम पीयूषपूर्णां धारामिन्द्राय देहीत्यपि निगमगि-रो भ्रूयुगान्तर्गताय ॥ ७२ ॥**

**यत्र** यस्मिन्परमानन्दे **सर्वे आनन्दाः** मनुष्यानन्दाः, तथा पितॄणां **मोदाः**, **प्रमुदः** आजानदेवानाम्, एवमुत्तरोत्तरं सर्वे अपि **आसते** वर्तन्ते। तथा—**यत्र** यस्मिन्परमानन्दे **सर्वे कामाः** सत्य लोकादिप्राप्तिरूपाः **आप्ताः** प्राप्ताः **स्युः**। तथा—यत्र **अखिल-विरमात्** स्थूलसूक्ष्मप्रपञ्चविलयात् **केवलीभाव आस्ते**। भो **सोम** षोडशकलारूप हिरण्मयरूप! **मां** जीवदशापन्नं **तत्र सान्द्रानन्दे चिरं अमृतं कृधि** कुरुष्व। तथा—**इन्द्राय** जीवात्मने **पीयूषपूर्णां** धारां देहि। मुक्तानां सोमचक्रादमृतद्रावो भवतीति योगशास्त्रे प्रसिद्धम्। किंभूताय? **इन्द्राय भ्रूयुगान्तर्गतायेति**। एवमुक्तप्रमेयं **निगमगिरः** प्राहुः। अत्र श्रुतिः सप्तमाष्टके—

> **यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते।**
> **कामस्य यत्राप्ताः कामस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव।**[1]

भाष्यं—कामस्य वासनारूपस्य मनसः कामाः यत्राप्ताः प्राप्ता भवन्ति तत्र माममृतं कृधि। तदेवाह—भो इन्दो चन्द्ररूप परमात्मन्! इन्द्राय सकलेन्द्रियनियन्त्रे जीवाय अमृतं परिस्रव ॥ ७२ ॥

---

नन्वतीन्द्रियं सुखं हि परमानन्दः तथा विषयसुखं इन्द्रियजन्यं एवमुभयोर्महति वैषम्ये अनुभवसिद्धे सति कथमुक्तं 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'[2] इत्याशङ्क्य श्लोकद्वयेनोत्तरयति—

**आत्माऽकम्पः सुखात्मा स्फुरति तदपरा त्वन्यथैव स्फुरन्ती स्थैर्यं वा चञ्चलत्वं मनसि परिणतिं**

---

[1]ऋ. ९-११३-११. [2]बृह. ६-३-३२.

**याति तत्रत्यमस्मिन् । चाञ्चल्यं दुःखहेतुर्मनस इद-महो यावदिष्टार्थलब्धिः तस्यां यावत्स्थिरत्वं मनसि विषयजं स्यात्सुखं तावदेव ॥ ७३ ॥**

**आत्मा** तावदकम्पः कम्परहितः, तथा **सुखात्मा** सुखस्वरूपोपि, 'विज्ञानमानन्दं ब्रह्म' इति आत्मन आनन्दरूपत्वं श्रुतिसिद्धं सुषुप्त्यवस्थायामनुभवसिद्धं च अतः **स्फुरति** इत्युक्तम् । तथा— **तदपरा** तद्विलक्षणा माया **अन्यथा** उक्ता तद्विपरीतस्वभावा सकम्पा दुःखरूपा च आत्मसहचरितैव स्फुरन्ती पूर्ववदनुभवसिद्धाऽस्ति । एवं एतं **तत्रत्यं** तयोरात्ममाययोरनुगतं **स्थैर्यं चञ्चलत्वं वा अस्मिन्मनसि परिणतिं** परिणामं **याति**; तस्य चिदचिद्ग्रन्थिरूपत्वम् । **अहो** इति संबुद्धौ । **यावदिष्टार्थलब्धिः** अभीष्टविषयप्राप्तिः तावत्प्रयत्नशताकुलस्य **मनसः चाञ्चल्यमिदं दुःखहेतुः** भवति । अथ **तस्यां** विषयप्राप्तौ सत्यां कृतकृत्यत्वेन **मनसि यावत्स्थिरत्वं तावदेव विषयजं सुखं स्यात्** ॥७३॥

---

अथात्र द्वितीयश्लोकेन दृष्टान्तद्वयमाह—

**यद्वत्सौख्यं रतान्ते निमिषमिह मनस्येकताने रसे स्यात् स्थैर्यं यावत्सुषुप्तौ सुखमनतिशयं तावदेवाथ मुक्तौ । नित्यानन्दः प्रशान्ते हृदि तदिह सुखस्थैर्ययोः साहचर्यं नित्यानन्दस्य मात्रा विषयसुखमिदं युज्यते तेन वक्तुम् ॥ ७४ ॥**

यथा **इह** अस्मिन्ननुभवसिद्धे **रतान्ते** शृङ्गाररसे **मनस्येकताने**

एकाग्रे सति **निमिषं** निमिषमात्रं **सौख्यं** भवति, तथा **सुषुप्तौ मनसि यावत्स्थैर्यं तावदेवानतिशयं सुखम्** । अथ **मुक्तावपि हृदि प्रशान्ते** सति नित्यानन्दो भवति । **तत्** तस्मात्कारणात् **इह सुखस्थैर्ययोः साहचर्यं** सहचरितत्वं अनुभवसिद्धम् । **तेन** कारणेन **इदं** विषयसुखं **नित्यानन्दस्य मात्रेति वक्तुं युज्यते** ॥ ७४ ॥

इत्यानन्दकोशप्रकरणम्.

---

अथ जगन्मिथ्यात्वप्रकरणमुच्यते । तत्र प्रपञ्चमिथ्यात्वे प्रथमतः स्वप्नदशानिदर्शनेन दर्शयन् स्वप्नस्वरूपं निरूपयति—

**श्रान्तं स्वान्तं स बाह्यव्यवहृतिभिरिदं ताः समाकृष्य सर्वाः तत्तत्संस्कारयुक्तं ह्युपरमति परावृत्तमिच्छन्निदानम् । स्वाप्नान् संस्कारजातप्रजनितविषयान् स्वाप्नदेहेऽनुभूतान् प्रोज्झ्यान्तः प्रत्यगात्मप्रवणमिदमगात् भूरि विश्राममस्मिन् ॥ ७५ ॥**

**इदं स्वान्तं** मनः **बाह्यव्यवहृतिभिः** स्त्रीपुत्रादिपोषणप्रभृतिभिः **श्रान्तं** सत् **उपरमति** विरमति विरतव्यापारं भवति । किं कृत्वा? **ताः सर्वाः** बाह्येन्द्रियार्थस्य व्यवहृतीः **समाकृष्य** । यद्वा—**इदन्ताः** इन्द्रियैः कृत्वा इदन्ताकारेण भासमानाः विषयास्तान् अन्तः **समाकृष्य** । एवं यद्यपि बाह्यव्यवहारस्त्यक्तः, तथाऽपि दृढानुसन्धानोत्पन्न**तत्तत्संस्कारयुक्तं** सत् **परावृत्तम्** । अथ किमुद्दिश्य परावृत्तमित्याशङ्क्याह—**निदानं इच्छन्** निदानं स्वीयमादिकारणं आत्मरूपं इच्छन् । यथा

बहुदेशाटनैः खिन्नः पान्थो विश्रान्त्यै स्वगेहागमनमिच्छति तद्व-दित्यर्थः । अत्र श्रुतिः—

अथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाक् गृहीतं चक्षुः गृहीतꣳ श्रोत्रं गृहीतं मनः ।[1]

इति । ततः स्मरणाधिरूढसंस्कारजातेन **प्रजनितविषयान्** **स्वाप्नान्** **सूक्ष्मदेहानुभूतान्** **प्रोज्झ्य** त्यक्त्वा **प्रत्यगात्म-प्रवणं** परमात्मसंयोगोन्मुखं तत् **अस्मिन्** आत्मनि **विश्रामं** विश्रान्तिं **अगात्** अगच्छत् । यथा महद्भूपदर्शनाय कश्चित्प्र-वृत्तः सामन्तो बहिर्द्वारि सेनासन्नाहं त्यक्त्वा द्वित्रैः पार्षदैः सह प्रविशति तथा अन्तर्द्वारि तानपि त्यक्त्वा केवलरूपेणैव समक्षं गच्छति तद्वदित्यर्थः । अनेन मनसः प्रथमतः सुषुप्तिरेवोद्दिष्टा, स्वप्नावस्था तु विधिवशादान्तरालिकैवोत्पन्नेत्युक्तम् ॥ ७५ ॥

---

अथ पूर्वपक्षमुद्भाव्य दृढीकुर्वन् श्लोकमाह—

**स्वप्ने भोगः सुखादेर्भवति ननु कुतः साधने मूर्छमाने स्वाप्नं देहान्तरं तद्व्यवहृतिकुशलं नव्य-मुत्पद्यते चेत् । तत्सामग्र्या अभावात्कुत इदमुदितं तद्धि सांकल्पिकं चेत् तत्किं स्वाप्ने रतान्ते वपुषि निपतिते दृश्यते शुक्रमोक्षः ॥ ७६ ॥**

**नन्वित्याशङ्कते**—**साधने** भोगसाधने स्थूलशरीरे ज्ञानकर्मेन्द्रियैः सह **मूर्छमाने** निश्चेष्टतया पतिते सति **स्वप्ने** स्वप्नावस्थायां **सुखादेः** सुखदुःखसाधकविषय**भोगः** **कुतः** कस्मात् **भवतीति** । अथ चेदेवं ब्रूषे—**स्वाप्नं** स्वप्नसंबन्धि **देहान्तरं** **तद्व्यवहृति-**

---

[1] बृह. ४-१-१७.

**कुशलं** स्वाप्नविषयभोगकुशलं **नव्यं** नवीनं **उत्पद्यते,** तेन स्वाप्नव्यवहारोऽस्तु, किं प्राक्तनेन शरीरेणेति । तदपि दूषयति—**तदिति । तत्सामग्र्याः** तस्य स्वाप्नदेहस्य या सामग्री पित्रोः शुक्रशोणितरूपा तस्याः **अभावात्, कुतः** कस्मात् सामग्र्यन्तरात् **इदमुदितं** उत्पन्नम् । असद्रूपं भूतावेशन्यायेनोत्पन्नमिति चेन्न, **स्वाप्ने** रतान्ते स्वाप्ने स्त्रीभोगान्ते **शुक्रद्रावः** स्वाप्नशरीर एवास्तु । **निपतिते वपुषि** निश्चेष्टे स्थूलशरीरे किमिति **दृश्यते** । मृषारूपस्य देहस्य सुरतान्तोपि मृषैवास्तु, सुरतान्ताभिव्यञ्जकः शुक्रद्रावः प्रातः सत्यत्वेन कथमुपलभ्यते इत्यर्थः ॥७६॥

---

दूषणान्तरमाह—

**भीत्या रोदित्यनेन प्रवदति हसति श्लाघते नूनमस्मात् स्वप्नेऽप्यङ्गेऽनुबन्धं त्यजति न सहसा मूर्छितेऽप्यन्तरात्मा । पूर्वं येयेऽनुभूताः तनुयुवतिहयव्याघ्रदेशादयोऽर्थाः तत्संस्कारस्वरूपान् सृजति पुनरमून् श्रित्य संस्कारदेहम् ॥ ७७ ॥**

स्वाप्नोत्पन्नया दस्युव्याघ्रादिभीत्या **अनेन** स्थूलदेहेन कृत्वैव **रोदिति** साट्टहासं रोदनं करोति, न स्वाप्नशरीरेणेत्यर्थः । न केवलं रोदिति, अनेनैव **प्रवदति** यत्किंचिज्जल्पति । तथा **हसति, श्लाघते** अहं कृतार्थ इति । एवं पूर्वपक्षमनूद्य प्रागुक्तं पर्यवसितमर्थमाह—**नूनमिति । नूनं** निश्चयेन **अस्मात्** हेतोः **अन्तरात्मा स्वप्नेऽपि अङ्गे** स्थूलदेहे **मूर्छितेऽपि सहसा अनुबन्धं** संबन्धं **न त्यजति** । अथ सोनुबन्धः पूर्वं त्वयैव नि-

राकृतः, कथमिदानीमनुबन्धः प्रोच्यते इत्याशङ्क्याह—**पूर्वमिति ।** **पूर्वं** अनादिजाग्रदवस्थासु **येये अर्थाः** पदार्था **अनुभूताः** । ते के? **तनुयुवतिहयव्याघ्रदेशादयः** तनुः शरीरं, युवतिः स्त्री स्वकीया परकीया वा, हयोऽश्वः प्रयाणनिमित्तं, व्याघ्रो भयनिमित्तं, देशः काश्यादिप्रदेशः, आदिशब्दादन्येऽपि विषयाः । **तेषां** पूर्वमनुभूतानां यः **संस्कारः** स एव रूपं **स्वरूपं** येषां ते तथाविधान् अमून् शरीरादिविषयान् तदनुरूपानेव **पुनः सृजति** त एव विषयाः संस्काररूपत्वेन आभासन्त इत्यर्थः । अथान्तरात्मा किं सृजतीत्याह—**संस्कारदेहं** लिङ्गदेहं **श्रित्य** अधिष्ठाय तस्मिन् देहे सर्वे संस्काराः उद्बुद्धाः सन्तः तत्तद्विषयाकारेण परिणमन्तीत्यर्थः ॥ ७७ ॥

---

अथ श्रुत्यर्थानुरूपामुक्तार्थप्रक्रियां निरूपयति—

**सन्धौ जाग्रत्सुषुप्त्योरनुभवविदिता स्वाप्न्यवस्था द्वितीया तत्रात्मज्योतिरास्ते पुरुष इह समाकृष्य सर्वेन्द्रियाणि । संवेश्य स्थूलदेहं समुचितशयने स्वीयभासाऽन्तरात्मा पश्यन्संस्काररूपानभिमतविषयान् याति कुत्रापि तद्वत् ॥७८॥**

**जाग्रत्सुषुप्त्योः** अवस्थयोः **सन्धौ अनुभवसिद्धा स्वाप्नी द्वितीयावस्था** । **तत्र** तस्यां अवस्थायां **इह** स्वरूपे **सर्वेन्द्रियाणि समाकृष्य पुरुषः** अन्तरात्मा **आत्मज्योतिरास्ते** । इन्द्रियाभावात् तस्यां अवस्थायां यद्विषयग्रहणं तदात्मज्योतिषैव सम्पाद्यतीत्यर्थः । ननु तदा स्थूलदेहस्य का गतिरित्यत आह—

**स्थूलदेहं समुचितशयने** यथा प्राप्तनिद्रास्थले निवेश्य प्रसारित-हस्तपादं **संवेश्य** तथा **स्वीयभासा** स्वसामर्थ्येन स्वप्नदेहान् **संस्काररूपान्** समुचितेन्द्रियगणान्निर्माय यत्र **कुत्रापि** अभीष्ट-स्थाने **तद्वत्** संस्कारस्वरूपेणैव **याति** विचरति ॥ ७८ ॥

---

पूर्वश्लोके देहं विसृज्य याति इत्युक्तं; तत्र जीवत् अजीवद्वा विसृजति ? जीवच्चेत्तर्हि कथमव्यापारं, अजीवच्चेत्तर्हि कथं श्वा-साद्युपेतमित्याशङ्क्य श्लोकद्वयेनोत्तरमाह—

**रक्षन् प्राणैः कुलायं निजशयनगतं श्वासमा-त्रावशेषैः मा भूत् तत्प्रेतकल्पाकृतिकमिति पुनः सा-रमेयादिभक्ष्यम् ।स्वप्ने स्वीयप्रभावात् सृजति हयर-थान् निम्नगाः पल्वलानि क्रीडास्थानान्यनेकान्यपि सुहृदबलापुत्रमित्रानुकारान् ॥ ७९ ॥**

**निजशयनगतं कुलायं** शरीरं **प्राणैः** कृत्वा **रक्षन्** यत्र कुत्रापि यातीति पूर्वेणान्वयः । तर्हि तत्र क्षुत्पिपासादिप्राणकृत्यं कथं न दृश्यते इत्याशङ्क्याह—किंभूतैः प्राणैः ? **श्वासमात्राव-शेषैः** श्वासमात्रं अवशिष्टं येषां ते । न हि प्रयोजकव्यतिरेकेण प्राणाः कर्म कुर्वन्ति । अथ तद्रक्षणे हेतुमाह—**तत् पुनः** शरीरं **प्रेतकल्पाकृतिकं मा भूदिति** । अथास्तां तथात्वमिति चेत्तत्र बाधकमाह—**सारमेयादिभक्ष्यं** मा भूदिति, निर्जीवस्य गन्धं गृह्णतां सारमेयादीनां श्वापदानां भक्ष्यं मा भूदिति । अथ पूर्वश्लोके स्वाप्नदेहान्निर्मायेत्युक्तं, तदर्थप्रतिपादकं श्रुत्यर्थं दर्श-यति—**स्वप्ने स्वीयप्रभावात्** स्वसामर्थ्यात् **हयरथान्, निम्नगाः**

नदीः, **पल्वलानि** ईषत्संचितोदकानि, तथा **अनेकानि क्रीडा-स्थानानि**, तथा **सुहृदबलापुत्रमित्रानुकारांश्च सृजति** । अनु-कारशब्देन प्रागुक्तसंस्कारोत्पन्नानीत्यर्थः ॥ ७९ ॥

———

तथा—

**मातङ्गव्याघ्रदस्युद्विषदुरगकपीन् कुत्र चित् प्रेय-सीभिः क्रीडन्नास्ते हसन् वा विहरति कुह चिन्मृष्ट-मश्नाति चान्नम् । म्लेच्छत्वं प्राप्तवानस्म्यहमिति कुह चिच्छङ्कितः स्वीयलोकात् आस्ते व्याघ्रादिभी-त्या प्रचलति कुह चिद्रोदिति ग्रस्यमानः ॥ ८० ॥**

**मातङ्गव्याघ्रदस्युद्विषदुरगकपींश्च सृजति** । तथा—कुत्रापि **अहं** ब्राह्मणः सन् **म्लेच्छत्वं प्राप्तवानिति स्वीयसुहृ-ल्लोकाच्छङ्कितः आस्ते** । ‘स्वप्ने शूद्रत्वमापन्नः’ इत्यादि वासिष्ठोक्तेः । तथा—**कुत्रचित् व्याघ्रादिभीत्या प्रचलति** पला-यनं करोति । पलायनसमर्थोऽपि व्याघ्रादिना **ग्रस्यमानः** सन् क्रन्दते **रोदिति** । उक्तार्थनिरूपिकाः क्रमेण श्रुतयः—

‘स यत्रायं प्रस्वपितीत्यस्य सर्वावतो मात्रामादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा स्व-पितीत्यत्रायं पुरुषः स्वयंज्योतिर्भवति न तत्र रथा न रथ-योगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता[1] ॥

---

[1] बृह. ६-३-१०.

तथा—

**प्राणेन रक्षन्नवरं कुलायं बहिः कुलायादमृतश्चरित्वा।**
**स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः ॥[1]**

तथा—

**स्वप्नान्त उच्चावचं नीयमानो रूपाणि देवः कुरुते बहूनि।**
**उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥[1]**

भाष्यं—सः जीवः यत्र यदा स्वपिति निद्रां करोति तदाऽस्य सर्वावतः सर्वं अवति रक्षति इति सर्वावान् तस्य सर्वावतः परमात्मनः मात्रां एकदेशं आदाय गृहीत्वा स्वयं विहत्य स्वत एव सुषुप्त्यवस्थां त्यक्त्वा, तथा मायिकं वासनामयं स्वप्नदेहं स्वयं निर्माय स्वेन स्वया भासा स्वसामर्थ्येन स्वेन ज्योतिषा स्वप्रकाशेन स्वपिति । अत्रायं पुरुषः स्वयंज्योतिर्भवति । तत्र तस्मिन्स्वप्नसमये न रथाः सन्ति, रथयोगाः अश्वादयः, न पन्थानो रथमार्गाः सन्ति । परं तु असौ रथान् रथयोगान् पथः सृजति। तथा न तत्र आनन्दाः सुखविशेषाः मुदः क्षुद्रानन्दाः प्रमुदः पुत्रादिलाभहर्षाश्च । परं तु अयमानन्दादीन् सृजति । तथा न तत्र वेशान्ताः पल्वलानि स्रवन्त्यः नद्यः सन्ति पुष्करिण्यः सरांसि न तडागानि सन्ति । परं तु एषः वेशन्तादि सर्वं सृजति। कस्सृजति? स हि कर्ता अन्तरात्मा । अथ दैनन्दिनस्वप्नदशायां प्राणेन पञ्चवृत्तिना कौ लीयते तत्कुलायं शयनभूमौ संनिविष्टं शरीरं रक्षन्सन्, अन्यथा मृतभ्रान्तिः स्यात् । स्वयममृतः अमरणधर्मा कुलायाद्बहिश्चरित्वा शरीरान्तर्गतोपि आकाशवद्बाह्येऽपि वसन् । यत्रकामं यथाकामम् । भिन्नं पदं वा, यत्रयत्र कामो विषयेषूत्पद्यते तंतं कामं संस्काररूपेण ईयते गच्छति । अथ स्वप्नान्त इति।

---

[1] बृह. ६-३-१२, १३,

ततः स्वप्नावस्थान्ते स्वप्नावसरे उच्चावचं देहमीयमानः प्राप्यमाणः, उच्चं देवादि अवचं तिर्यगादि यथा संस्कारतारतम्यानुरूपं देहं गम्यमानः देवः प्रकाशात्मा बहूनि रूपाणि असंख्यानि वासनारूपाणि निर्वर्तयति । तदेवाह—उतेव यथावासनं स्त्रीभिः सह मोदमानः उतेव जक्षदिव हसन्निव उतेव भयानि व्याघ्राद्युत्पन्नानि पश्यति ॥ ८० ॥

---

अथ जाग्रदवस्थायां दृष्टिसृष्टिपक्षं निरूपयति—

**योयो दृग्गोचरोऽर्थो भवति सस तदा तद्गतात्मस्वरूपाविज्ञानोत्पद्यमानः स्फुरति ननु यथा शुक्तिकाज्ञानहेतुः। रौप्याभासो मृषैव स्फुरति च किरणाज्ञानतोऽम्भो भुजङ्गो रज्ज्वज्ञानान्निमेषं सुखभयकृदतो दृष्टिसृष्टं किलेदम् ॥ ८१ ॥**

जाग्रदवस्थायां **योयोऽर्थः** पदार्थः नृपशुपक्षितिर्यगादिरूपो **दृग्गोचरो** दृष्टिविषयो **भवति सस**ः पदार्थः **तदा** तद्दर्शनसमये **तद्गतात्मस्वरूपाविज्ञानोत्पन्न** एव **स्फुरति** । तच्छब्देन पूर्वोक्तः पदार्थः, तद्गतं तस्मिन्नन्तर्यामित्वेन स्थितं यदात्मरूपं तस्य अविज्ञानमज्ञानं तस्मादुत्पद्यमान एव स्फुरति दृग्गोचरीभूतपदार्थोत्पत्तावधिकरणाज्ञानमेव कारणमित्यर्थः । तदेव दृष्टान्तेन द्रढयति—**यथेति। यथा रौप्याभास**ः **शुक्तिकाज्ञानहेतु**ः दृष्टः शुक्तिकाया अज्ञानमेव हेतुः कारणं यस्य, शुक्त्यज्ञानेनोत्पादितो रजताभासः इदं रजतमित्याकारेण **स्फुरति** । तद्वदात्माज्ञानेन पदार्थाकारः स्फुरति । यतः सुषुप्तावात्माकारान्तःकरणवृत्तौ सत्यां

पदार्थमात्रं न स्फुरति। परं किरणाज्ञानतो मरीच्यज्ञानान्मृगजलोत्पत्तिः। तथा रज्ज्वज्ञानाद्भुजङ्गोत्पत्तिः। एवं स प्रातिभासिकोपि पदार्थः निमेषं निमेषसमयं यावत् सुखभयकृत् भवति दरिद्रस्य पिपासार्दितस्य च रौप्यमरीच्यम्बुदर्शनादाश्वासनेन सुखं भवति, तथैव भुजङ्गदर्शनाद्भयं भवति, तथा प्रातिभासिकस्यापि पदार्थस्य ईषत्कार्यक्षमत्वं दृष्टमस्ति। तद्वत् प्रकृतेऽपि क्षणिकसुखदुःखोत्पत्तिशक्तत्वमस्तीत्यर्थः। अत इदं पदार्थजातं किलेति निर्धारणे, दृष्टिसृष्टं दर्शनकाल एव सृष्टं, परं तु दृढसंस्कारानुबन्धेन ज्ञायते। यथोल्मुके भ्राम्यमाणे परिधिरूपं तेजो गोचरीभवति नोल्मुकं भवतीत्यर्थः॥ ८१॥

---

अथोक्तार्थे भगवद्वाक्यं संवादयन्नाह—

**मायाध्यासाश्रयेण प्रविततमखिलं यन्मया तेन मत्स्थान्येतान्येतेषु नाहं यदपि हि रजतं भाति शुक्तौ न रौप्ये। शुक्त्यंशस्तेन भूतान्यपि मयि न वसन्तीति विष्वग्विनेता प्राहास्माद्दृश्यजातं सकलमपि मृषैवेन्द्रजालोपमेयम्॥ ८२॥**

यत् यस्मात्कारणात् मायारूपो योयं अध्यासः आरोपः तस्याश्रयीभूतेन मया अखिलं विश्वजातं नामरूपात्मकं प्रविततं विस्तारितं, तेन कारणेन एतानि भूतानि मत्स्थानि मदाश्रयवर्तीनि इति प्रतीयते। परं तु एतेषु भूतेषु अहं न अस्मि असङ्गो ह्यहं न वर्ते। ननु कारणं हि स्वकार्यमभिव्याप्य तिष्ठतीति प्रसिद्धिरस्ति, कथमुक्तं तेषु नाहमित्याशङ्क्य दृष्टान्तेनो-

त्तरयति—यदपीति । यद्यपि **शुक्तौ रजतं भाति** । परं तु **रौप्ये शुक्त्यंशो न दृश्यते** । अथ यदि दृश्येत भ्रम एव न स्यात् । **तेन** कारणेन **मयि भूतानि** आरोपितानि । परं तु **एतेषु नाहमि**त्यर्थः । इति **विष्वग्विनेता** जगद्गुरुः श्रीयादवेन्द्रः **प्राह**, **अस्मात्** कारणात् **सकलमपि दृश्यजातं मृषैव** । किंभूतं? **इन्द्रजालोपमेयं** इन्द्रजालवदुपमीयते तत् । तदुक्तं भगवता—

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः[1] ॥ ८२ ॥

---

अथ कर्ममीमांसाप्रकरणं व्याख्यायते—तत्र सर्वप्राणिनां सदसत्फलहेतुः कर्मैवास्ति इति निरूपयति—

**हेतुः कर्मैव लोके सुखतदितरयोरेवमज्ञोऽविदित्वा मित्रं वा शत्रुरित्थं व्यवहरति मृषा याज्ञवल्क्यार्तभागौ । यत्कर्मैवोचतुः प्राक् जनकनृपगृहे चक्रतुस्तत्प्रशंसां वंशोत्तंसो यदूनामिति वदति न कोप्यत्र तिष्ठत्यकर्मा ॥ ८३ ॥**

**लोके** जीवलोके **सुखतदितरयोः** सुखदुःखयोः **हेतुः** कारणं **कर्मैव** नान्यत् । **एवं** उक्तप्रमेयं **अविदित्वा अज्ञो** ज्ञानहीनो जन्तुः **मित्रं शत्रुर्वा इत्थं मृषैव व्यवहरति**, मित्रं सुखहेतुः शत्रुर्दुःखहेतुः इत्थं अभिनिविष्टः सन् व्यवहरतीत्यर्थः । **यत्** यस्मात्कारणात् **प्राक्** पूर्वं **याज्ञवल्क्यार्तभागौ जनकनृपगृहे** यज्ञमण्डपे

---

[1] भग. ९-४.

**कर्मैवोचतुः** । तथा—तच्छब्देन कर्म, तस्यैव **प्रशंसां चक्रतुः।** न केवलं तौ प्रशशंसतुः, किंतु **यदूनां वंशोत्तंसः** श्रीकृष्णोपि इति वदति स्म । इतीति किं? अत्र अस्मिन् लोके **कोऽप्य-कर्मा न तिष्ठतीति** । तदुक्तं गीतासु—

> **न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
> **कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥** इति[1] ॥ ८३ ॥

---

अथ पूर्वग्रन्थे यद्यपि कर्मणः प्रशंसा कृता, तथाऽपि केवलस्य कर्मणो न फलदानसामर्थ्यं,—कुतः?—अचेतनत्वात्, किंतु ईश्वरप्रेरितस्येति सदृष्टान्तमाह—

**वृक्षच्छेदे कुठारः प्रभवति यदपि प्राणिनोद्यस्तथाऽपि प्रायोऽन्नं तृप्तिहेतुस्तदपि निगदितं कारणं भोक्तृयत्नः । प्राचीनं कर्म तद्वद्विषमसमफलप्राप्तिहेतुस्तथाऽपि स्वातन्त्र्यं नश्वरेऽस्मिन्न हि खलु घटते प्रेरकोऽस्यान्तरात्मा ॥ ८४ ॥**

**यदपि** यद्यपि **वृक्षच्छेदे कुठारः प्रभवति** समर्थो भवति, **तथाऽपि सः प्राणिनोद्यः**—प्राणोऽस्यास्तीति प्राणी—जीवत्पुरुषेण नोद्यः प्रेर्यमाण एव भवति न स्वातन्त्र्येणेत्यर्थः । अथ पुनर्दृष्टान्तमाह—**प्राय इति** । **अन्नं प्रायो** निश्चयेन **तृप्तिहेतुः** भवत्येव, **तथाऽपि भोक्तृयत्नः** पचनभोजनक्रियारूपः **कारणं निगदितम्** । अथ यदर्थं दृष्टान्तद्वयमुक्तं तदाह—**प्राचीनमिति** । तद्वत् उक्तदृष्टान्तवत् **प्राचीनं कर्म** प्राक्जन्मकृतं कर्म **यद्यपि विषम-**

---

[1] भग. ३-५.

समफलप्राप्तिहेतुः भवति । तथाऽपि अस्मिन् नश्वरे कर्मणि फलदाने स्वातन्त्र्यं न हि घटते । किंतु तत्प्रेरकोऽन्तरात्मा भवति । अयमर्थः—क्रियमाणं सदसत्कर्म तदैव नश्यति । तत् धर्माधर्मरूपेण आत्मनि तिष्ठति, तत्तदात्मना प्रेरितं सत् भोगानुकूलं भवति । फलभोगस्तु कर्मसाक्षिणा ईश्वरेण प्रेरितस्य अविद्यया देहाभिमानिनो जीवस्यैव संभवति, 'पुण्यः पुण्येन कर्मणा भवति पापः पापेन'[1] इति श्रुतेः । तदुक्तं भगवता—

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते[2] ॥ इति ॥ ८४ ॥**

---

क्षुद्रदेवताराधनमपि ब्रह्मार्पणमेव भवतीत्याह—

**स्मृत्या लोकेषु वर्णाश्रमविहितमदो नित्यकाम्यादि कर्म सर्वं ब्रह्मार्पणं स्यादिति निगमगिरः संगिरन्तेऽतिरम्यम् । यन्नासानेत्रजिह्वाकरचरणशिरःश्रोत्रसंतर्पणेन तुष्येदङ्गीव साक्षात्तरुरिव सकलो मूलसंतर्पणेन ॥ ८५ ॥**

लोकेषु मनुष्यलोकेषु स्मृत्या वर्णाश्रमक्रमेण यत् नित्यकाम्यादि कर्म विहितं तत् सर्वं निषिद्धव्यतिरेकेण पञ्चविधं ब्रह्मार्पणमेव स्यात् इति निगमगिरः अतिरम्यं युक्तियुक्तं संगिरन्ते । यद्यपि कर्तारः फलाभिसन्धानादन्यदेवतोद्देशेन कर्म कुर्वन्ति तथाऽपि ब्रह्मार्पणमेव, कर्तारस्तु तत्तद्वासनाभिर्लिप्यन्ते । तत्र षड्विधानि कर्माण्यभिहितानि । नित्यानि अकरणे प्रत्यवाय-

---

[1] बृह. ६-४-५. [2] भग. १३-२०.

साधनानि सन्ध्यावन्दनादीनि । काम्यानि इष्टसाधनानि ज्योतिष्टोमादीनि । नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्टयादीनि । प्रायश्चित्तानि पापक्षयसाधनानि । उपासनानि शाण्डिल्यविद्यादीनि । प्रतिषिद्धानि हिंसादीनि । तत्र नित्यादीनां बुद्धिशुद्धिः परमं प्रयोजनम् । उपासनानां तु तदैकाग्र्यम्, 'विविदिषन्ति यज्ञेन[1]' इत्यादिश्रुतेः, 'तपसा किल्बिषं हन्ति'[2] इत्यादिस्मृतेश्च । नित्यनैमित्तिकयोरुपासनानां चावान्तरफलं पितृलोकप्राप्तिः, 'कर्मणा पितृलोको विद्यया देवलोकः[3]' इति श्रुतेः । अथान्यदेवतोद्देशेन कर्म कृतं तद्ब्रह्मार्पणमित्यत्र युक्तिमाह—**यदिति** । **नासानेत्रजिह्वाकरचरणशिरःश्रोत्राणां** अवयवानां **संतर्पणेन साक्षात्** प्रतीतिसिद्धः **अङ्गी** देही **तुष्येत्** । क इव? **मूलसंतर्पणेन तरुरिव** वृक्षचरणसंतर्पणेन यथा **सकलो** वृक्षः संतर्पितो भवति एवमन्यदेवतोद्देशेन कृतेऽपि कर्मणि अवयविभूतः सकलदेवतात्मकः परमेश्वर एव तुष्यतीत्यर्थः ॥ ८९ ॥

---

अथेश्वरानभिज्ञानेन यत्कर्म कृतं तद्व्यवस्थामाह—

**यः प्रैत्यात्मानभिज्ञः श्रुतिविदपि तथाकर्मकृत् कर्मणोस्य नाशः स्यादल्पभोगात् पुनरवतरणे दुःखभोगो महीयान् । आत्माभिज्ञस्य लिप्सोरपि भवति महान् शाश्वतः सिद्धिभोगो* ह्यात्मा तस्मादुपास्यः खलु तदधिगमे सर्वसौख्यान्यलिप्सोः॥ ९०**

**यः श्रुतिविदपि** वेदज्ञोपि **तथाकर्मकृत्** तत्प्रतिपादितयागादिकर्मकृत् पुरुषः **आत्मानभिज्ञः** आत्मबहिर्मुखः सन् **प्रैति**

---

[1]बृह. ६-४-२२. [2] मनु. १२-१०४. [3]बृह. ३-५-१६. *सिद्धभोगः.

म्रियते । **अस्य** पुरुषस्य **कर्मणः नाशः स्यात्** । कस्मात्? **अल्पभोगात्** देवलोकादिभोगात् 'ते तं भुक्त्वा स्वर्गलोकं विशालम्[1]' इत्यादिभगवद्वचनात् । तथाऽस्य पुरुषस्य **पुनरवतरणे महीयान्दुःखभोगो** भवति । अथात्माभिज्ञः सन् यः फलेप्सुर्भवति तस्य का गतिरित्याह—**लिप्सोरप्यात्माभिज्ञस्य महान् शाश्वतः सिद्धिभोगो भवति** । महान् स्वर्गलोकादप्यधिकः, तथा शाश्वतः बहुकालभोग्यः । एवंविधोऽणिमाद्यष्टसिद्धिभोगो भवति । तथा **अलिप्सोः** सिद्ध्यनपेक्षस्यात्माभिज्ञस्य पुरुषस्य **तदधिगमे** आत्मप्राप्तौ **सर्वसौख्यानि** भवन्ति परमानन्दप्राप्तिर्भवतीत्यर्थः । अत्र श्रुतिः—

> **अथ यो ह वा अस्माल्लोकात् स्वर्लोकं अदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति । यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतं भवति । यदु ह वा अप्यनेवंविन्महत्पुण्यं, कर्म करोति तद्धाऽस्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते । इति ॥**[1]

भाष्यं—अथ यः पुरुषः अस्मात् मृत्युलोकात् स्वर्लोकं आत्माभिधं आत्मानं अदृष्ट्वा साक्षादकृत्वा प्रैति म्रियते, स एनमात्मानमविदितः अजानन् कर्मफलं भोक्तुं न समर्थो भवति । भोगावसाने कर्मनाशात् च्यवत इत्यर्थः । अथ कुतः आत्मानं न पश्यतीत्याह—यथा वेदो वाऽननूक्तः यथावद्वेदः अननूक्तः अर्थमनु लक्षीकृत्य नोक्तः न पठितः । न अनूक्तः अननूक्तः । वेदतात्पर्यमजानत आत्मदर्शनं कुत इत्यर्थः । तथा अन्यद्वेदार्थाद्विपरीतं यत्कर्म तत् अकृतमेव निरर्थकमेवेत्यर्थः । तथा—अनेवंवित् न एवंवित् अनेवंवित् स्वस्वरूपानभिज्ञः पुरुषो यन्महत्पुण्यं अश्वमेधादिकं कर्म करोति

[1] बृह. ३-४-१५.

तदस्य अन्ततः भोगावसानात् क्षीयते नाशमाप्नोति । अथ चित्तशुद्धिद्वारा आत्मप्रकाशकं यत्कर्म तन्न नश्यतीत्यर्थः । तदुक्तं भगवता—'अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्[1]' इति । तदेवाह—तत्तस्मात्कारणात् आत्मानमेव लोकमुपासीत सः । यः आत्मानमेव लोकमुपास्ते, ह इति निश्चयेन, तस्य कर्म न क्षीयते । ननु विषयसुखलम्पटस्य कथमात्मलोकापेक्षेत्यत आह—अस्मादिति । अस्मादात्मनः सकाशात् यद्यत्कामयते कामनाविषयं करोति तत्तत्सृजते संपादयति । आत्मयोगात् अणिमादिसिद्धयो लभ्यन्ते किं पुनरन्यदित्यर्थः ॥ ८६ ॥

---

अथ सूर्यचन्द्रादीनां अर्थप्रकाशकत्वे न स्वातन्त्र्यमस्तीति प्रकटयन्नाह—

**सूर्याद्यैरर्थभानं न हि भवति पुनः केवलैर्नात्र चित्रं सूर्यात् सूर्यप्रतीतिः न भवति सहसा नापि चन्द्रस्य चन्द्रात् । अग्नेरग्नेश्च किं तु स्फुरति रविमुखं चक्षुषश्चित्प्रयुक्तात् आत्मज्योतिस्ततोऽयं पुरुष इह महो देवतानां च चित्रम् ॥ ८७ ॥**

**सूर्याद्यैः** सूर्यचन्द्राग्निभिः **केवलैः** स्वतन्त्रैः **अर्थभानं** पदार्थज्ञानं **न भवतीति** प्राङ्निरूपितमेवास्तीति **नात्र चित्रं** अपूर्वम् । अथान्यदपूर्वमस्तीत्याह—**सूर्यादिति** । लोके सूर्याद्याः स्वस्वप्रकाशका इति प्रसिद्धिरस्ति । सा न तात्त्विकी । कुतः ? यतः **सूर्यात् सूर्यप्रतीतिः सहसा** अकस्मात् **न भवति** । तथा

---

[1] भग. ७-२३.

चन्द्रप्रतीतिरपि **चन्द्रान्न भवति** । तथा **अग्नेः** दीपादेर्वा प्रतीतिर्न दीपात् **अग्नेः** वा भवति । **किंतु रविमुखं** सूर्यचन्द्रप्रभृति **चित्प्रयुक्तात्** आत्मप्रेरितात् **चक्षुषो** निमित्तभूतात् **स्फुरति** प्रकाशते, न निद्राणस्य जात्यन्धस्य प्रकाशते । तस्मात्कारणात् **अयं** यः कश्चित् **पुरुषो** जाग्रत्यां स्वप्नेऽपि **आत्मज्योतिः** स्वयं प्रकाशको यस्य स तथाविधोऽस्ति । इह इन्द्रियव्यापारे **चित्रं देवतानां** चक्षुरादीनां **महः** तेजो रूपरसादिप्रकाशकमस्ति । अत्र श्रुतिः सामवेदारण्यके—

**चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।**
**आऽप्रा द्यवापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥**[1]

भाष्यं—जगतो जङ्गमस्य तथा तस्थुषः स्थावरस्य चराचरस्य सूर्यः प्रकाशकः आत्मैव, न सूर्यादिः, यतः स आत्मा मित्रस्य नेत्राधिदैवतत्वेन रूपग्राहकस्य आदित्यस्य तथा वरुणस्य रसग्राहकस्य तथाऽग्नेर्वागाधिदैवतस्य चक्षुः प्रकाशकः । न ह्यात्मप्रकाशमन्तरेण सूर्यादिप्रतीतिः । अथैतदर्थे प्रत्यायकमनुभवमाह—चित्रमिति । द्योतयन्ति अर्थान् प्रकाशयन्ति तद्देवाश्चक्षुराद्याः तेषामनीकं प्रकाशसमूहं चित्रं विचित्रं उदगात् उदयं प्राप्तमनुभूयते। अत्रैतदुक्तं भवति—रूपरसादिषु पञ्चविधविषयेषु मध्ये सूर्यादिरेकैकस्यैव ग्राहकं, न सर्वेषां विचित्राणाम् । तथाविधानां ग्राहकत्वं तु तत्तद्वृत्तिप्रवर्तकस्य परमात्मन एव संभवति नान्यस्य । एवं देहावच्छेदेन यदध्यात्मस्वरूपं एकमनुभूयमानं परमात्मतत्त्वं तत् द्यावापृथिवी अन्तरिक्षं च आप्राः स्वकीयेन तेजसा आसमन्तादापूरयन्, सर्वात्मकत्वेन स्थितमित्यर्थः ॥ ८७ ॥

———

[1]साम. आ. ५-३.

अथ प्राणादिकृत्यमाह—

**प्राणेनाम्भांसि भूयः पिबति पुनरसावन्नमश्नाति तत्र तत्पाकं जाठरोऽग्निस्तदुपहितबलो द्राक् श-नैर्वा करोति । व्यानः सर्वाङ्गनाडीष्वथ नयति रसं प्राणसन्तर्पणार्थं निःसारं पूतिगन्धं त्यजति बहिरयं देहतोऽपानसंज्ञः ॥ ८८ ॥**

असौ देही प्राणेन कृत्वा भूयः **अम्भांसि पिबति, पुन-रन्नं** चाश्नाति । तस्यतस्य पीतस्य भक्षितस्य वा **तदुपहितबलो जाठराग्निः पाकं करोति** तेन प्राणेन उपहितबलः वीज्यमानः सन् **द्राक्** शीघ्रं **शनैर्वा**, यथा प्राणः प्रयत्नं करोति । **अथ** पा-कानन्तरं परिपक्वान्नोदकस्य **रसं** सारभागं **प्राणसंतर्पणार्थं व्यानः सर्वाङ्गनाडीषु नयति**, प्राणशब्देन इन्द्रियाणि तेषां संतर्पणार्थं करोति । तथा शेषं **निःसारं** अन्नमुदकं **पूतिगन्धं** मूत्रविष्ठादिरू-पेण **त्यजति बहिः** निस्सारयति **देहतः अपानसंज्ञः** । श्रुतिः—

**तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।**
**धियो यो नः प्रचोदययात् परोरजसेऽसावदोम् ॥**

भाष्यं—तत् देवस्य द्योतमानस्य स्वप्रकाशस्य भर्गः तेजो धीमहि चिन्तयामः । किंभूतं? सवितुर्वरेण्यं सवितुः सूर्यस्य वरेण्यं उप-जीव्यम् । अथ (त)देव स्वरूपमाह—धिय इति । यो देवः नोऽस्माकं धियः प्रचोदयात् बुद्धीः प्रेरयति निश्चयात्मकत्वेन रूपं प्रकटयति । अत्रैतदुक्तं भवति—सत्यज्ञानानन्दात्मकः सविता सर्वजगदुपादानाश्रय-तया जगत्कर्ता सर्वोपाधिभिः चिक्रीडिषुः सन् उपाधिधर्मान् विजि-

गीषुः स्वकमनीयत्वादिमहिम्नो दर्शयिषुः स्वयं वशीकृत [ताना] मपि सर्वात्मनामात्मभूतः सन् अन्तर्यामी देवो नः अस्माकं धियो धीः प्रचोदयात् । तस्य सवितुर्देवस्यात्मभूतं संसारक्लेशमूलभर्जकं भर्गः तेजः परं ज्योतिः धीमहि ध्यायेमहि । किंभूतः ? रजसः परः । अत्र रजसे इति चतुर्थ्यां पञ्चम्यर्थोऽवगम्यते । असौ अदः व्यक्ताव्यक्तस्वरूपाद्रजसो लोकात् परः । रजांसि लोकाः इति यास्कः । ........................... ॥ ८८ ॥

---

एवं प्राणादीनां कृत्यमुक्त्वा इदानीं तन्निखिलवृत्त्यात्मकस्य मुख्यप्राणस्य सत्ताप्रकाशदानेन तत्साक्षिसच्चिदानन्दमात्मानं विशदीकृत्य लक्षयति—

**व्यापारं देहसंस्थः प्रतिवपुरखिलं पञ्चवृत्त्यात्मकोऽसौ प्राणः सर्वेन्द्रियाणामधिपतिरनिशं सत्तया निर्विवादम् । यस्येत्थं चिद्घनस्य स्फुटमिह कुरुते सोऽस्मि[1] सर्वस्य साक्षी प्राणस्य प्राण एषोप्यखिलतनुभृतां चक्षुषश्चक्षुरेषः ॥ ८९ ॥**

इह व्यष्टिदेहे समष्टिदेहे च **चिद्घनस्य** चेत्यरहितचिन्मात्रस्य **यस्य** आत्मनः **सत्तया** सत्तां प्राप्य सन्भूत्वा **पञ्चवृत्त्यात्मकः** पूर्वोक्तप्राणनादिपञ्चवृत्तिमान् भूत्वा **देहसंस्थः** समष्टौ समष्टिरूपेण उपास्यो भूत्वा व्यष्टिदेहे व्यष्टिरूपेणोपासको भूत्वा स एव **सर्वेन्द्रियाणां** सर्वेषां शब्दादिज्ञानसाधनानां समष्टिव्यष्टिदेहस्थानां करणानां **अधिपतिः** स्वामी, तं विना सर्वकरणव्या-

---

[1]सोस्ति.

पारानुपपत्तेः । **असौ प्राणः** पूर्वोक्तप्राणः जीवभूतः सन् **प्रति-वपुः** प्रत्येकं सर्वशरीरेषु **स्फुटं** व्यक्तं यथा तथा **अखिलं** संपूर्णं **व्यापारं** व्यवहारं **कुरुते** निर्वर्तयति । स एवंविध-सर्वसत्ताप्रकाशदानेन निर्वाहकः अत एव **सर्वस्य** समस्तस्य कार्य-स्य निमित्तोपादानत्वाभ्यां **साक्षी** अव्यवधानेन प्रकाशकः **अस्मि** भवामि स एवाहमस्मीत्यर्थः । अत्र श्रुतिं प्रमाणयति— **एष** प्रत्यक् परोक्षत्वरहितः **प्राणस्य** समष्टिव्यष्टिरूपेण सकलज-गद्व्यापारकारणस्य वायोः **प्रणः** जीवनहेतुः आत्मा **अखिलतनु-भृतां** समस्तशरीरधारिणां व्यष्टिसमष्टिजीवानां **चक्षुषः** ज्ञानस्य **चक्षुः** ज्ञानप्रकाशक इत्यर्थः । 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः'[1] इत्यादिश्रुतेः ॥ ८९ ॥

---

एवं सर्वप्रकाशकत्वेन लक्षीकृतस्यैव स्थूणानिखननन्यायेन दृढी-करणाय तदेव सर्वप्रकाशकत्वमुक्तमपि,

**न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्वं**
**तस्य भासा सर्वमिदं विभाति ॥**[2]

इति श्रुत्यन्तरप्रमाणेन द्रढयति—

**यं भान्तं चिद्घनैकं क्षितिजलपवनादित्यचन्द्रा-दयो ये भासा तस्यैव चानु प्रविरलगतयो भान्ति तस्मिन् वसन्ति। विद्युत्पुञ्जोऽग्निसंघोप्युडुगणविततिः**

---

[1] बृह. ६-४-१८.

[2] कठ. ५-१५.

**भासयेत् किं परेशं ज्योतिः शान्तं ह्यनन्तं कविमज-
ममरं शाश्वतं जन्मशून्यम् ॥ ९० ॥**

**अविरलगतयः** अन्योन्यं न श्लिष्टा गतिः स्वरूपव्यवहारा-
दिस्थितिर्येषां ते तादृशाः **क्षितिः** पृथ्वी **जलं** तोयं **पवनो**
वायुः **आदित्यः** सूर्यः **चन्द्रः** सोमः **आदिः** येषां वागादीनां ते
सर्वे **यं** सच्चिदानन्दघनं **एकं** निरपेक्षं अन्यनिर्वाहक्षमं आत्मानं
**भान्तं** स्वतः प्रकाशमानं सन्तं **अनु** पश्चात् **भान्ति** प्रकाशन्ते।
किंच—**तस्मिन्** स्वप्रकाशसदात्मनि **वसन्ति** तिष्ठन्ति तत्सत्तां प्राप्यैव
स्वस्वव्यापारक्षमा जाता इत्यर्थः। तमुक्तलक्षणं **परेशं** सर्वजगत्कारण-
भूतं प्रकृतिनियन्तारं **शान्तं** जगद्वासनाऽस्पृष्टं **अनन्तं** नाश्यनाशा-
न्यथानुपपत्त्या स्वतो नाशहीनं **कविं** ज्ञानरूपं शास्त्रयोनित्वेन सर्व-
ज्ञोपलक्षितमित्यर्थः। **अजं** जन्मशून्यं **अमरं** मृतिशून्यं, जन्मनाशा-
न्यथानुपपत्त्या जन्ममरणहीनमित्यर्थः। तत्रैव हेतुद्वयं स्पष्टार्थं—**शा-
श्वतं** नित्यं **जन्मशून्यं** जन्मरहितम्। एतेन यास्कपठिताः 'जायते
अस्ति वर्धते विपरिणमते अपक्षीयते विनश्यति '[1] इति षड्विकारा
अपि निरस्ता ज्ञेयाः। तमात्मानं **विद्युत्पुञ्जो** विद्युतां पुञ्जः समूहः
लोकदृष्ट्या प्रकाशकोपि, तथा **अग्निसंघः** वह्नीनां समूहस्तथा-
भूतोपि, तथा उडूनां नक्षत्राणां गणस्य समूहस्य विततिः विस्ता-
रः—उपलक्षणमेतत् सूर्यादीनाम्—तत् सर्वप्रकाशजातं **भासयेत्किं**
प्रकाशयेत् किं, नैव प्रकाशयेत्। लोकेऽपि प्रकाशस्य प्रकाशकप्रका-
शयितृत्वमदृष्टचरमिति भावः ॥ ९० ॥

---

एवंभूतात्मानुभवतो जीवन्मुक्तिः फलं भवतीत्याह—

---

[1] निरुक्ते. १-१-३.

**तद्ब्रह्मैवाहमस्मीत्यनुभव उदितो यस्य कस्यापि चेद्वै पुंसः श्रीसद्गुरूणामतुलितकरुणापूर्णपीयूषदृष्ट्या । जीवन्मुक्तः स एव भ्रमविधुरमना निर्गतेऽनाद्युपाधौ नित्यानन्दैकधाम प्रविशति परमं नष्टसन्देहवृत्तिः ॥ ११ ॥**

**यस्य कस्यापि** इत्युक्त्या जातिवर्णाश्रमवयोवस्थास्त्रीपुरुषोच्चनीचादिभेदा लोकदृष्टाः न शास्त्रीयज्ञानप्रतिबन्धका इति सूचितम्, लौकिकानां अनधिकारित्वभ्रमभूतानां आतिदेशिकाधिकारित्वनिरूपकवाक्यैर्बाधस्य दृश्यमानत्वात् । **पुंसः** इत्युक्त्या मुमुक्षोः मोक्षस्य मुख्यसाधनतत्त्वज्ञानकारणगुरुशुश्रूषापूर्वकश्रवणादिषु पुरुषप्रयत्न एवापेक्षित इति सूचितम् । **यस्य कस्यापि** अधिकारिणः **पुरुषस्य श्रीसद्गुरूणां** मुक्तिश्रीसहितानां सतां सद्रूपब्रह्मसाक्षात्कारवतां गुरूणां देशिकवर्याणाम् । गुरूणां श्रीमत्त्वे सत्त्वे च श्रुतिः 'भद्रैषां लक्ष्मीर्निहिताऽधि वाचि' 'अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः'[1] इति । **अतुलिता** निरुपमा या करुणा तया **पूर्णा** भरिता अत एव **पीयूषं** अमृतं तद्वन्मरणनिवर्तिका **दृष्टिः** ज्ञानं तया कृत्वा 'दृश्यते त्वग्र्यया बुद्ध्या'[2] इति श्रुतेः । गुरुतः प्राप्तया ब्रह्मविद्ययेत्यर्थः । **तत्** उक्तलक्षणं **ब्रह्मैव** देशकालवस्तुकृतपरिच्छेदरहितं तत्पदलक्ष्यं **अहमेव** त्वंपदलक्ष्यं कूटस्थरूपमेव ततः पृथगहं न भवामीत्येवंनिश्चयरूपः **अनुभवः** साक्षात्कारः **उदितः** आविर्भूतः **चेत्** यदि स्यात्, तदानीमेव स पुरुषः **भ्रमविधुरमनाः** भ्रमेण विपरीतज्ञानेन विधुरं वियुक्तं मनः जीवन्मुक्तिव्यवहारयोग्यप्रारब्धशेषं यावत् मनो

---

[1] तै. उ. २-६.

[2] कठ. ३-१२.

यस्य, अत एव **नष्टसन्देहवृत्तिः** नष्टा विलीनाः संशयविशिष्टाः वृत्तयो यस्य स तथाभूतः सन् **जीवन्मुक्तः** भवति । तस्यैव विदेहमुक्तिफलमप्याह—**सः एवेति** । स जीवन्मुक्त एव प्रारब्धान्ते **अनाद्युपाधौ** निर्मूलमायोपाधौ **निर्गते** स्वरूपतो लयं प्राप्ते सति बीजनाशस्य पूर्वमेव ज्ञानसमकालं जातत्वात् **परमं** कार्यकारणास्पृष्टं निरुपाधिकमित्यर्थः, **नित्यानन्दं** निरतिशयं बाधहीनं सुखरूपं **एकं** मुख्यं **धाम** तेजः गृहं च स्वरूपं सर्वसूर्यादितेजःप्रकाशकत्वात् सर्वब्रह्मादिजीवानां निवासभूतत्वाच्च **प्रविशति** स एव भवतीत्यर्थः ॥ ९१ ॥

---

इदानीं तस्यैव ज्ञानिनो यावत्प्रारब्धं सर्वव्यवहाराप्रतिबन्धकत्वेन जीवन्मुक्तिसुखमनुभवितुं सर्व देहाद्यसत्त्वानुसन्धानपूर्वकं स्वात्मसुखानुसन्धानमाह—

**नो देहो नेन्द्रियाणि क्षरमतिचपलं नो मनो नैव बुद्धिः प्राणो नैवाहमस्मीत्यखिलजडमिदं वस्तुजातं कथं स्याम् । नाहंकारो न दारा गृहसुतसुजनक्षेत्रवित्तादि दूरं साक्षी चित्प्रत्यगात्मा निखिलजगदधिष्ठानभूतः शिवोऽहम् ॥ ९२ ॥**

**देहः** पञ्चीकृतपञ्चभूतकार्यः अन्नविकारः स्थूलदेहः **अहं न**, मम चिद्रूपत्वात् सत्त्वाच्च । देहस्तु **क्षरं अतिचपलमिति** हेतुगर्भितविशेषणद्वयम् । क्षरत्वान्नाशधर्मित्वात् अन्यथाऽन्यथा परिणामित्वेनातिचञ्चलत्वाच्च । आत्मा तु सद्रूपत्वेन स्थिरः चिद्रूपश्च अनुभूयते । अतो वैलक्षण्यादुभयोरहमात्मा देहो न भवामि, किं तु देहस्तु

नास्त्येवेत्यर्थः । किंच—**अहं** आत्मा **इन्द्रियाणि** क्रियासाधनानि ज्ञानसाधनानि चेत्युभयात्मकानि दशापि **न** भवामि इन्द्रियाणामन्योन्यव्यावृत्त्या असत्त्वप्रतीतेः। विषयाणामसत्त्वेनेन्द्रियाणां असत्त्वस्यानुभूयमानत्वात् चञ्चलत्वाच्च तान्यहं न भवामि । पूर्वविशेषणद्वयमपि अनात्महेतुत्वेनात्र योज्यम् । किंच—**अहं** मनः संशयात्मकं **न** भवामि नास्मि । कामादिवृत्तिमत्त्वेनोत्पत्त्यादिमत्त्वेन च विकारवत्त्वात् असत्त्वाच्च मनो नास्त्येव, अहं तु मनोविकाराणां उत्पत्तिविनाशयोश्च प्रकाशकत्वेन सच्चिद्रूपेण प्रकाशमानः अस्मि अतो मनो नाहमित्याशयः । किंच—**बुद्धिः** निश्चयात्मिकान्तःकरणवृत्तिरपि **अहं न** भवामि जाग्रदाद्यवस्थावत्त्वेनोत्पत्तिविलयत्वात्, अहं तु आत्मा अवस्थात्रयतद्बुद्धिसाक्षी सद्रूपः, सा बुद्धिः कथं स्यां नैव स्यामित्यर्थः । किंच—**प्राणः** पञ्चवृत्त्यात्मकः शारीरो वायुः अहं नैवास्मि नैव भवामि। **इदं** मम कूटस्थस्यात्मनः प्रकाश्यं **अखिलं जडमिदं** सर्वं अचिद्रूपं देहादिवस्तुजातं पदार्थसमूहः **अहं** कूटस्थः सच्चिदानन्दः **कथं स्यां** केन प्रकारेण भवामि । अत एवाहंकार्यस्य सर्वस्य दृश्यमानत्वात् जडत्वादसत्त्वाद्विकारित्वाच्च अहंकारस्यापि तथाऽसत्त्वात् सः अहंकारः अहं द्रष्टा सच्चिदानन्दः कूटस्थः इत्यतीव वैलक्षण्यान्न भवामि। अत एव **दाराः** स्त्री, **गृहं** वेश्म, **सुताः** पुत्राः, **सुजनाः** संबन्धिबान्धवमित्रभृत्यादयः, **क्षेत्रं** भूमिः, **वित्तं** द्रव्यं, **आदि**-मुख्यं यस्य जातिकुलवर्णाश्रमधर्मादेः तत्सकलमपि देहादिसापेक्षमिति कृत्वा **दूरं**, अतस्तन्नैवाहमस्मि। **अहं** तु एतस्य देहादिजडवस्तुजातस्य साक्षादव्यवधानेन प्रकाशकत्वात्**साक्षीति**, प्रकाशकत्वा**च्चित्** ज्ञानं, सर्वान्तरत्वेन स्वतः प्रकाशमानत्वा**त्प्रत्यक्**, अतत्त्वात्सद्रूपत्वा**दात्मा**, यं विना सर्वारोपाधिष्ठानस्य शबलब्रह्मणाप्ये-

सिद्धेरुपचारेण **निखिलस्य** समस्तजगतो विश्वस्य **अधिष्ठानभूतः** अधिष्ठानत्वेनोक्तः **शिवः** सुखरूपः अस्मि ॥ ९२ ॥

---

एवं जीवन्मुक्तस्यात्मानुसन्धानमुक्त्वा इदानीं प्रकारान्तरेण तदेव पुनराह—

**दृश्यं यद्रूपमेतद्भवति च विशदं नीलपीताद्यनेकं सर्वस्यैतस्य दृग्वै स्फुरदनुभवतो लोचनं चैकरूपम् । तद्दृश्यं मानसं दृक्परिणतविषयाकारधीवृत्तयोऽपि दृश्या दृग्रूप एव प्रभुरिह स तथा दृश्यते नैव साक्षी ॥ ९३ ॥**

**एतत्** इदंतया प्रतीयमानं **रूपं** रूप्यते प्रकाश्यत इति रूपं प्रकाशितं तत्सर्वं **दृश्यं** दृग्विषयं ज्ञानैकरूपं **नीलपीतादि** नीलं श्यामं पीतं गौरं इत्यादिविविधगुणवत्त्वात् । **एतस्य** प्रतीयमानस्य **सर्वस्य** अनेकविधस्य रूपस्य **दृक्** दृश्यते रूपमनया सा दृष्टिः **वै** निश्चयेन **स्फुरदनुभवतः** स्फुरन्ति प्रतीयन्ते **अनुभवा** रूपाणि स्फुरणानि यस्यां सा तथोक्ता सा **लोचनं** रूपालोकसाधनत्वात् । तच्च **एकरूपं** एकधैव प्रतीयते । किंच—**तत्** लोचनमपि **दृश्यं** प्रतीतिविषयं अतो जडं, तस्यापि **दृक्** दर्शनसाधनं **मानसं** मनः अस्ति, तस्यापि मानसस्य दृश्यत्वेनानुभूयमानत्वात् । तस्य **दृक्** दृष्टिः धीः निश्चयात्मकमन्तःकरणं तस्या अपि अनुभूयमानत्वात् **परिणतविषयाकारधीवृत्तयोपि** परिणामेन विषयाकृतित्वेन अनेकविधत्वात् विकारत्वात् धियो वृत्तयो **दृश्या** एव । सर्वस्यैतस्य जडविकारित्वेनानात्मत्वं निश्चेयम् । इह जडसमूहे

सर्वस्मिन् प्रभुः सर्वप्रकाशनसमर्थः साक्षी अव्यवधानेन सर्वप्रकाशकः आत्मा दृग्रूप एव सर्वप्रकाशसाधनभूतोऽपि तथा विषयवत् नैव दृश्यते अनुभवविषयो नैव भवतीत्यर्थः ॥ ९३ ॥

---

इदानीं तस्यैव जीवन्मुक्तस्य स्वरूपं स्वगुरुवचनविश्वासपूर्वकं युक्त्या स्वजीवत्वबाधेन स्वात्मानुसन्धानमाह—

**रज्ज्वज्ञानाद्भुजङ्गस्तदुपरि सहसा भाति मन्दान्धकारे स्वात्माज्ञानात् तथाऽसौ भृशमसुखमभूदात्मनो जीवभावः। आप्तोक्त्याऽहिभ्रमान्ते स च खलु विदिता रज्जुरेका तथाऽहं कूटस्थो नैव जीवो निजगुरुवचसा साक्षिभूतः शिवोऽहम् ॥ ९४ ॥**

यथा **मन्दान्धकारे** ईषदन्धकारावृते आलोके **रज्ज्वज्ञानात्** रज्जुरूपानवलोकनात् **तदुपरि** तत्सदृशाज्ञातरज्ज्वामित्यर्थः **सहसा** अकस्मात् **भुजङ्गः** सर्पः **भाति** भासते, **तथा** तेनैव प्रकारेण **स्वात्माज्ञानात्** स्वस्वरूपानवलोकनात् स्वसदृशेऽनवलोकिते आत्मनि **असौ** समस्ताज्ञान्यनुभूयमानः **भृशं** अत्यन्तं **असुखं** दुःखरूपं **आत्मनः**—सदाधारं विनाऽऽरोपासिद्धेः—आत्मसंबन्धी **जीवभावः** जीवत्वं भाति प्रकाशत इत्यर्थः । स भ्रान्तिरेवेति भावः । यथा रज्जुसर्पदृष्टान्ते **आप्तोक्त्या** प्रामाणिकपुरुषवचनविश्वासेन **अहिभ्रमान्ते** सर्पभ्रान्तिनिवृत्तौ सत्यां **सः** सर्पप्रत्ययः पूर्वः **विदिता** ज्ञाता सती **एका रज्जुः** एका सर्परहिता रज्जुः रशनाप्रत्यय एव अभूत् जाता, **तथा** तेन प्रकारेण **निजगुरुवचसा** निजः स्वकीयः गुरुर्देशिकः तस्य वचसा उक्त्या

'तत्त्वमसि'[1] इत्यादिवाक्यार्थबोधनरूपया तेन कृत्वा जीवत्वभ्रमान्ते जीवत्वभ्रमे नष्टे सतीत्यर्थः अहं जीवः सुखी दुःखी जननमरणकर्तृभोक्तृरूपः **नैव** नास्म्येव, **अहं साक्षिभूतः** जीवस्याव्यवहितप्रकाशत्वात्साक्षित्वोपचारवान्, वस्तुतस्तु **कूटस्थः** निर्विकारः **शिवः** आनन्दरूपः **अस्मि** ॥ ९४ ॥

---

इदानीं तस्यैव जीवन्मुक्तस्य स्वहृदि गुरुशिष्यभावं प्रकल्प्य संवादेन तस्य परमज्योतीरूपानुसन्धानमाह—

**किं ज्योतिस्ते वदस्वाहनि रविरिह मे चन्द्रदीपादि रात्रौ स्यादेवं भानुदीपादिकपरिकलने किं तव ज्योतिरस्ति । चक्षुस्तन्मीलने किं भवति च सुतरां धीर्धियः किं प्रकाशे तत्रैवाहं ततस्त्वं तदसि परमकं ज्योतिरस्मि प्रभोऽहम् ॥ ९५ ॥**

हे शिष्य! **ते** तव **अहनि** दिवसे घटपटादिप्रकाशव्यवहारे **रात्रौ** च निशि **किं ज्योतिः** तेजः किमस्ति तत् **वदस्व** कथय येन दिनरात्रिव्यवहारः सिद्ध्यति इति पृष्टे गुरुणा शिष्यः **चक्षुः** नेत्रं इत्याह—येन लोके प्रकाशकं सूर्यचन्द्राग्निरूपं प्रकाशकं द्रव्यं तत्प्रकाश्यं द्रव्यं च व्यवह्रियते तच्चक्षुरेव ज्योतिरित्यर्थः । एवमुत्तरे शिष्येण दत्ते गुरुः पृच्छति—**तन्मीलन** इति । **तन्मीलने** चक्षुषः निमीलने कृते सति **किं** ज्योतिः पश्चात्सूर्यचन्द्राग्निप्रकाशकतत्प्रकाश्यघटादिस्फुरणस्य किं प्रकाशसाधकं तेजः ते अस्ति ? इति पृष्टः शिष्य आह—नेत्रनिमीलनानन्तरं सर्वव्यवहारस्फुरणसा-

---

[1] छा. ६-८-७.

घनं ज्योतिः **सुतरां** अत्यन्तप्रकाशकं **धीः** बुद्धिः अस्तीति उत्तरं दत्तम् । ततो गुरुः पृच्छति—**धिय इति** । धियोऽपि बुद्धेः नेत्रसूर्यादिवत्प्रकाश्यत्वेनानुभूयमानायाः **तत्प्रकाशे** ज्ञेयत्वव्यवहारे ते तव किं ज्योतिस्तेजः ? इति पृष्टः शिष्य आह—**अहमिति** । मम बुद्ध्यनुभवितृत्वात् **तत्र** बुद्धिप्रकाशव्यवहारे साधकं **अहं** ज्योतिरस्मि । एवमुक्ते शिष्येण गुरुः पृच्छति—**तत्रेति** । तत्रापि अहंत्वस्यापि अनुभूयमानत्वव्यवहारे साधकं तव किं ज्योतिः किं प्रकाशकं तेजः अस्ति ? इति पृष्टः शिष्यआह—**अहमिति** । अहंत्वप्रकाशक आत्माऽस्तीत्यर्थः । एवमुक्तो गुरुराह—**ततस्त्वमिति** । त्वदन्यस्य कस्यापि प्रकाशद्रव्यस्याभावात् प्रकाशद्रव्यस्यापि तत्प्रकाशयितुमशक्यत्वात् स्वयंज्योतिष्ट्वेन प्रकाशमानत्वात् **तत् परमकं** ज्योतिः कार्यकारणप्रकाश्यप्रकाशकत्वाद्यस्पृष्टं तेजः **त्वं** त्वंपदलक्ष्य आत्मा **असि** भवसि । अतस्तज्ज्योतिःप्रकर्षभानरूपः अस्मीत्यनुभवः । अत्रार्थे बृहदारण्यकी श्रुतिरपि—'आत्मैवास्य ज्योतिः'[1] इत्यादिका ॥ ९९ ॥

———

एवंभूतानुभववतो जीवन्मुक्तस्य व्यवहारमाह—

**कं चित्कालं स्थितः कौ पुनरिह भजते नैव देहादिसङ्गं यावत्प्रारब्धभोगं कथमपि स सुखं चेष्टतेऽसङ्गबुद्ध्या । निर्द्वन्द्वो नित्यशुद्धो विगलितममताऽहङ्कृतिर्नित्यतृप्तो ब्रह्मानन्दस्वरूपः स्थिरमतिरचलोनिर्गताशेषमोहः ॥ १६ ॥**

---

[1]बृह. ६-३-६.

**सः ब्रह्मवेत्ता** जीवन्मुक्त इत्यर्थः **कं चित्कालं** कतिचित्कालपर्यन्तं **यथालोकं** यथाधिकारिव्यक्तिपरिच्छेदककालपर्यन्तमित्यर्थः । **कौ** स्थूलदेहापेक्षया पृथिव्याम् । वस्तुतस्तु ब्रह्मवसिष्ठादीनामपि अन्यलोकेषु स्थितिश्रुत्या **कौ** क्षेत्रशब्दवाच्येऽन्तःकरणे **स्थितः** वर्तमान इव लक्षितोऽपि इह पृथिव्यां क्षेत्रे च **पुनः** देहक्षेत्रादिसत्त्वनिवृत्तेः पश्चात् **देहादिसङ्घं** स्थूलदेहस्त्रीपुत्रमित्रादिसमूहं **नैव भजते** नैवाङ्गीकरोति, सत्त्वेनात्मनि तत्सबन्धवत्त्वप्रतीतिं न करोतीत्यर्थः । किंच—क्षेत्रस्थूलदेहादिसङ्घे च **यावत्प्रारब्धभोगं** प्रारब्धभोगपर्यन्तं **कथमपि**—ब्रह्मवेत्तुः ईश्वरत्वेन मायाप्रारब्धयोरधीनत्वाभावात्, तद्विना च कर्तृत्वभोक्तृत्वानुपपत्तेः भोक्तृत्वान्यथानुपपत्त्या प्रारब्धभोगस्य—ब्रह्मज्ञानां ब्रह्मादीनां कर्तृभोक्तृव्यवहारस्यापि दृश्यमानत्वात्—सर्वव्यवहारस्य मायामात्रत्वेनानिर्वचनीयो ब्रह्मवेत्तृव्यवहार इति भावः—**असङ्गबुद्ध्या** असङ्गब्रह्मात्मबोधेन **सुखं** यथा भवति तथा, निःसंशयत्वान्निर्दुःखमित्यर्थः, **चेष्टते** चेष्टावत्त्वेन प्रतीतो भवतीत्यर्थः । तस्यासङ्गबोधमेवोत्तरार्धेन विशेषणैर्विशदयति—**निर्द्वन्द्वः** सुखदुःखादिद्वन्द्वहीनः । तत्र हेतुः—**नित्यशुद्धः** जीवत्वस्य पापपुण्यवत्त्वेन शुद्धत्वस्य कादाचित्कत्वाद्ब्रह्मणोऽभेदं प्राप्तस्य ज्ञानिनः कालत्रयेऽपि पुण्यपापहीनत्वान्नित्यशुद्धत्वमिति भावः । अत एव—**विगलितममताऽहंकृतिः** अत्यन्तमुत्पत्तिबीजरहितत्वेन नष्टा ममता अन्यत्र पुत्रादौ देहादौ चाहंकृतिस्तादात्म्यं यस्य सः । अत एव—**नित्यतृप्तः** निरङ्कुशसन्तोषवान् । तत्र हेतुः—**ब्रह्मानन्दस्वरूपः** अपरिच्छिन्नानन्दरूपः । **स्थिरमतिः** स्थिरे ब्रह्मणि मतिर्यस्य । स्वतश्च ब्रह्मरूपत्वात् **अचलः** स्थिरः । तत्र हेतुः—**निर्गताशेषमोहः** निःशेषनिवृत्तः अशेषः मूलाज्ञानपर्यन्तः अज्ञानसमूहः विपरीतज्ञानस-

हितो यस्य । अतो ज्ञानिनि चेष्टा या प्रतीयते सा मायया इति भावः ॥९६ ॥

---

इदानीं ज्ञानिनि प्रतीयमानस्य चेष्टामात्रस्य संसारजनकत्वाभावं सहेतुकं प्रपञ्चयति—

**जीवात्मब्रह्मभेदं दलयति सहसा यत् प्रकाशैकरूपं विज्ञानं तच्च बुद्धौ समुदितमतुलं यस्य पुंसः पवित्रम् । माया तेनैव तस्य क्षयमुपगमिता संसृतेः कारणं या नष्टा सा कायकर्त्री पुनरपि भविता नैव विज्ञानमात्रात् ॥ ९७ ॥**

**यत्** महावाक्यजन्यत्वे सति गुरुमुखश्रुत्या स्वतो युक्तिपूर्वकं संभावितत्वेन निश्चितं **विज्ञानं** चरमवृत्त्याख्यं **प्रकाशैकरूपं** प्रकाश एवैकं मुख्यं रूपं यस्य तादृशं **सहसा** अकस्मात् तत्कालमित्यर्थः **जीवात्मब्रह्मभेदं** जीवात्मनः त्वंपदलक्ष्यस्य ब्रह्मणः तत्पदलक्ष्यस्य च भेदं भिन्नत्वं कारणेन मूलाज्ञानेन सह **दलयति** नाशयति **तत्** तादृशं **पवित्रं** रागद्वेषादिवासनारहितं सर्वमलनिवर्तकत्वात्पावनं, 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते'[1] इति भगवदुक्तेः, **अतुलं** निरुपमं **यस्य** अधिकारिधुरीणस्य **पुंसः** पुरुषप्रयत्नवतः **बुद्धौ** शुद्धान्तःकरणे **समुदितं** संशयविपर्ययरहितमाविर्भूतं अभूत् **तस्य** पुरुषस्य **तेनैव** अन्यसाधननिरपेक्षेण ज्ञानेन कर्त्रा **या संसृतेः कारणं** संसारस्य हेतुरूपा **माया** स्वतः कार्यकारणहीनत्वेनार्थः शून्या प्रकृत्यपरपर्याया **क्षयं** नाशं **उपगमिता** प्रापिता **विज्ञा-**

---

[1]भग. ४-३८.

**नमात्रात्** आभासमात्रत्वेन **सा माया पुनरपि** नाशप्राप्तेः पश्चादित्यर्थः—अपिशब्दात्पूर्वमपि कार्यत्वं कर्तृज्ञानिदृष्ट्या नासीत्, किंपुनर्ज्ञानानन्तरमित्यर्थः—**नष्टा** नाशं प्राप्ता सती **कार्यकर्त्री** कार्यं भ्रमः तस्य जनिका **नैव भविता** न भविष्यतीत्येवं निश्चय एव ॥ ९७ ॥

---

इदानीं भासमानायामपि संसृतौ ज्ञानिनि तत्त्यागं दृष्टान्तेन संभावयन्नाह—

**विश्वं नेति प्रमाणात् विगलितजगदाकारभानस्त्यजेद्वै पीत्वा यद्वत्फलाम्भः त्यजति च सुतरां तत्फलं सौरभाढ्यम् । सम्यक् सच्चिद्घनैकामृतसुखकबलास्वादपूर्णो हृदाऽसौ ज्ञात्वा निःसारमेवं जगदखिलमिदं स्वप्रभः शान्तचित्तः ॥ ९८ ॥**

**असौ** ज्ञानी **विश्वं** जगत् **न** नास्ति **इति प्रमाणात्** एवंविधस्वतःप्रमाणभूतात् 'नेह नानाऽस्ति किंचन '[1] इति श्रुतिवाक्यादित्यर्थः **विगलितजगदाकारभानः** विगलितं बीजसहितं नष्टं जगतः आकार इव आकृतिमद्भानं भासनं यस्य। किंच—**हृदा** सर्वापवादेन **सम्यक्सच्चिद्घनैकामृतसुखकबलास्वादपूर्णः** समीचीनतया चिद्रूपं यद्घनं निबिडं, अज्ञानजगदाद्यप्रवेशात्सम्यक् यच्छिद्रहीनमित्यर्थः, एकं स्वगतसजातीयभेदहीनं अमृतं नाशहीनं सुखमानन्दः तस्य कबलो ग्रासः—यथा ग्रासः हस्तेन मुखे क्रियते तद्वत् सांख्ययोगहस्तेनान्तःकरणस्य विद्यारूपमुखे

---

[1] बृह. ६-४-१९.

कृतः ग्रासत्वेनोक्तः—तस्य आस्वादोऽनुभवः, यद्वत् मुखे क्षिप्तस्य ग्रासस्य जिह्वयेव, तेन पूर्णः नित्यतृप्तः सन् **एवं** उक्तरीत्या **अखिलं** समस्तं **जगत्** विश्वं **निःसारं** सत्त्वसुखत्वहीनं अत एव **इदं** दृश्यत्वेन प्रतीयमानत्वाच्चिरस्वरहितं **ज्ञात्वा** अनुभूय **शान्तचित्तः** शान्तं भर्जितबीजत्वेनोपरतं चित्तं चेतो यस्य सः तज्जगत् **सृजेत्** विसृजेत् । तत्र दृष्टान्तः—**यद्वदिति** । लोके यद्वत् यथा कोऽपि **फलाम्भः** नारङ्गाम्रादेः फलस्य अम्भः रसं **सुतरां** अत्यन्तं निश्शेषमित्यर्थः **पीत्वा** प्राश्य **तत्फलं** पीतरसफलं **सौरभाढ्यं** सुगन्धभरितमपि **वै** निश्चयेन—फलगतसौगन्धस्य तृप्तिहेतुत्वाभावात्, तृप्तस्य तृप्त्यपेक्षाभावाच्च—**सृजति** तद्वदिति संबन्धः ॥ ९८ ॥

---

इदानीं ज्ञानिनि बाधिताहंकारादिजगत्प्रतीतावपि बन्धकत्वं कर्मणां न भवतीत्यस्मिन्नर्थे 'भिद्यते हृदयग्रन्थिः'[1] इत्यादिकां श्रुतिं प्रमाणयति—

**क्षीयन्ते चास्य कर्माण्यपि खलु हृदयग्रन्थिरुद्भिद्यते वै छिद्यन्ते संशया ये जनिमृतिफलदा दृष्टमात्रे परेशे । तस्मिंश्चिन्मात्ररूपे गुणमलरहिते तत्त्वमस्यादिलक्ष्ये कूटस्थे प्रत्यगात्मन्यखिलविधिमनोऽगोचरे ब्रह्मणीशे ॥ ९९ ॥**

तस्मिन् सर्ववेदान्तोक्तलक्षणलक्षिते । तान्येव लक्षणान्याह

---

[1] मु. उ. २-२-९.

विशेषणैः—**चिन्मात्ररूपे** चेत्यरहितचिन्मात्रे । तत्र हेतुः—**गुणमलरहिते** गुणकृता रागद्वेषादयः गुणरूपाश्च मलाः बन्धनलेपहेतवः तैः रहिते हीने । **तत्त्वमस्यादिलक्ष्ये** तत्त्वमस्यादिमहावाक्यैः भागत्यागलक्षणयैव केवलं लक्षितुं योग्ये **ब्रह्मणि** अपरिच्छिन्ने **ईशे** तं विना मायातत्कार्ययोरनिर्वाहात् नियन्तृत्वाद्युपचरिते **अखिलविधिमनोऽगोचरे** समस्तविधिवाक्यानामनियोज्यविषये च मनसां चाविषये **कूटस्थे** निर्विकारे **प्रत्यगात्मनि** अन्तर्मुखवृत्त्यैवाज्ञानमात्रनिरसने जाते स्वयमेव प्रकाशमाने आत्मनि वस्तुनि स्वस्मिन् **परेशे** परेषां ब्रह्मादीनां मायायाश्च नियन्तृत्वोपचरिते—तमात्मानं विना तेषां तत्कार्याणां चासिद्धेः—**दृष्टमात्रे** केवलमनुभूत एव अस्य कूटस्थब्रह्मरूपभूतान्तःकरणवृत्तिमतः **कर्माणि** संचितप्रारब्धक्रियमाणाख्यानि सर्वाण्यपि **क्षीयन्ते** नष्टानि भवन्ति। तत्र हेतुमाह—**खल्विति** । अस्येत्यनुवृत्त्या कूटस्थब्रह्मसाक्षात्कारवतः पुरुषस्य **हृदयग्रन्थिः** हृत् अन्तःकरणं तस्य यः प्रकाशकः आत्मा तयोर्ग्रन्थिः स्वात्माज्ञानरूपः अन्योन्यतादात्म्यरूपेणैक्यरूपः संश्लेषः सः निश्चयेन **खलु उद्भिद्यते** तयोरन्तःकरणचिदात्मनोर्भेदप्रतीत्या छिन्नो भवति । तल्लिङ्गमाह—**छिद्यन्त इति** । सर्वसंशयाः देहादात्मा भिन्नो वा अभिन्न इत्यादयः । अज्ञानग्रन्थिमूलत्वात्तेषां, तन्निवृत्तौ ते **छिद्यन्ते** नश्यन्ति । तत्फलं चाह विशेषणेन—**जनिमृतिफलदा इति** । जन्ममरणफलप्रदाः । अतस्तन्निवृत्तौ जन्ममरणनिवृत्तिः ब्रह्मज्ञानफलमित्यर्थः ॥९९॥

---

इदानीमेतादृशज्ञानिनो ब्रह्मात्मसाक्षात्कारवृत्तेः वासनाजननपर्यन्तं दृढीकरणाय ध्यानं तत्पूर्वावश्यकर्तव्यसहितमाह—

**आदौ मध्ये तथाऽन्ते जनिमृतिफलदं कर्ममूलं विशालं ज्ञात्वा संसारवृक्षं भ्रममदमुदिताशोकतानेकपत्रम् । कामक्रोधादिशाखं सुतपशुवनिताकन्यकापक्षिसङ्घं छित्वाऽसङ्गासिनैनं पटुमतिरभितश्चिन्तयेद्वासुदेवम् ॥ १०० ॥**

**आदौ** उत्पत्तेः प्राक् **तथाऽन्ते** नाशानन्तरं **मध्ये** प्रतीतिकाले असन्नपि **जनिमृतिफलदं** जनिः जन्म मृतिः मरणं ते एव फले प्रसवे तयोर्दातारं **कर्ममूलं** कर्म क्रिया सा मूलं यस्य **विशालं** महान्तं **भ्रमो** विपरीतज्ञानं **मदः** स्वश्रैष्ठ्यज्ञानं **मुदिता** हर्षवृत्तिः **शोकः** खेदवृत्तिः इत्यादीनि **अनेकानि** अनन्तानि **पत्राणि** पर्णानि इव यस्य **कामक्रोधादिशाखं** कामः प्रियविषयिणी इच्छा क्रोधः तत्प्रतिबन्धके रोषवृत्तिः—आदिपदेन लोभादिवृत्तयः—ता एव शाखा इव यस्य **सुतपशुवनिताकन्यकापक्षिसंघं** सुताः पुत्राः पशवः गोवृषादयः वनिताः स्त्रियः कन्यकाः दुहितरः ते पक्षिणः पतत्रिणस्तेषां संघो यस्मिन् **संसारवृक्षं** संसरणस्वभावं वृश्चनीयत्वाद्वृक्षं ‘ उर्ध्वमूलोऽवाक्शाखः ’[1] इत्यादिश्रुतेः, ‘ ऊर्ध्वमूलमधःशाखम् ’[2] इत्यादिस्मृतेश्च अश्वत्थापरपर्यायं **ज्ञात्वा** असत्त्वेन प्रतीय अनुभूयेत्यर्थः तत **एनं** उक्तलक्षणं संसारवृक्षं **पटुमतिः** कुशला पट्वी मतिः मननवती वृत्तिर्यस्य स पुमान् **असङ्गासिना** स्वासङ्गत्वानुभव एवासिः खड्गः तेन **छित्वा** विनाश्य **अभितः** सर्वदा **वासुदेवं** वा विकल्पेन असूनां प्राणेन्द्रियादीनां देवः प्रकाशकः आत्मा तं **चिन्तयेत्**

---

[1]कठ. ६-१. [2]भ. गी. १५-१.

अनुभवेत् प्राणादीनां सत्त्वासत्त्वे अनेन प्रकाश्येते इति विकल्प इति भावः ॥ १०० ॥

---

इदानीं सर्वोत्पत्तिस्थितिलयाधारत्वेन स्वस्मिन् ब्रह्मत्वानुसन्धानपूर्वकं स्वात्मज्ञानस्यैवाखिलकर्मसमाप्तित्वं द्योतयन् आत्मानं नमस्करोति—

**जातं मय्येव सर्वं पुनरपि मयि तत् संस्थितं चैव विश्वं सर्वं मय्येव याति प्रविलयमिति तत् ब्रह्म चैवाहमस्मि । यस्य स्मृत्या च यज्ञाद्यखिलशुभविधौ सुप्रयातीह कार्यं न्यूनं संपूर्णतां वै तमहमतिमुदैवाच्युतं सन्नतोऽस्मि ॥ १०१ ॥**

इति श्रीमच्छङ्करभगवत्पादकृता
शतश्लोकी समाप्ता.

---

सर्वं समस्तं द्वैतजातं मय्येव ब्रह्माभिन्नकूटस्थात्मसहिते ज्ञाने ब्रह्मात्मनि—एवकारेण अन्यः कोपि आधारो नास्तीति सूचितम्—जातं आविर्भूतम् । पुनरपि पश्चात् उत्पत्त्यनन्तरमपि तत् समस्तं विश्वं जगत् मयि शबले ब्रह्मात्मनि संस्थितं सम्यक् स्थितिं प्राप्तम् । किंच—तत् सर्वं समस्तं जगत् मय्येव शबले ब्रह्मण्येव प्रविलयं निद्राप्रलयसमये सबीजं शुद्धे मयि च ज्ञानेन अत्यन्तनाशं तिरोधानमित्यर्थः याति प्राप्नोति । इति अतो हेतोः तत् 'यतो वा इमानि भूतानि जायन्ते'[1] इत्यादिकया

---

[1] तै. उ. ३-१.

'तद्ब्रह्म'[1] इतीत्यन्तया श्रुत्या उत्पत्तिस्थितिलयाधारवत्त्वोपलक्षितोपादानत्वेन निर्दिष्टं **ब्रह्म** देशकालवस्तुकृतपरिच्छेदरहितं वस्तु **अहं** अहंपदलक्षितः कूटस्थः प्रत्यगात्मा **अस्मि** भवामि । **च** पुनः **यस्य** ब्रह्माभिन्नप्रत्यगात्मनः **स्मृत्या** अनुसन्धानेन **यज्ञाद्यखिलशुभविधौ** यज्ञः अश्वमेधादिः यस्य वाजपेयादेः तादृशे समस्तशुभकर्मणि विधाने **कार्यं** कर्तव्यविधिः **न्यूनं** मन्त्रतन्त्रादिभिः न्यूनमपि **वै** निश्चयेन **संपूर्णतां** समाप्तिफलप्रदत्वमित्यर्थः **सुप्रयाति** प्राप्नोति । **अहं** ब्रह्माभिन्नकूटस्थात्मसाक्षात्कारवान् **अतिमुदैव** अत्यन्तमानन्दसाक्षात्कारवृत्त्यैव केवलं **तं** ब्रह्माभिन्नं प्रत्यगात्मानं **अच्युतं** अच्युतस्वभावं **सन्नतः** अष्टाङ्गभूताष्टप्रकृतिसाहितः तत्र लीनः **अस्मि** भवामि ॥ १०१ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पूज्यपादकृतशतश्लोकीभाष्यं**

**आनन्दगिरि(?)कृतं**

**समाप्तम्.**

---

[1] तै. उ. ३-१.

# हरिस्तुतिः.

## सव्याख्या.

---

शङ्करं शङ्कराचार्यं केशवं बादरायणम् ।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनःपुनः ॥

सत्यज्ञानानन्दात्मकं अद्वितीयं ब्रह्मैव शुद्धसत्त्वप्रधानमायोपाधिकं सत् ईश्वरभावं, मलिनसत्त्वप्रधानाविद्योपाधिकं सत् जीवभावं च जगाम, 'जीवेशावाभासेन करोति माया चाऽविद्या च स्वयमेव भवति'[1] इति श्रुतेः । तत्र च मायाप्रतिबिम्ब ईश्वरः तां मायां वशीकृत्य सर्वज्ञः सर्वशक्तिश्च सन् जीवानां अभ्युदयापवर्गार्थं सङ्कल्पमात्रेणैव लीलया जगतः सर्गस्थितिलयान् आचरति । तत्र ये जीवाः स्वाज्ञारूपश्रुतिस्मृत्युक्तमार्गानतिलङ्घनेन स्वात्मानं भजन्ते तेषामनुग्रहाय उपासनार्थं च शङ्खचक्रगदाशूलमृगपरशुधरं नीलोत्पलदलकालमेवपूर्णचन्द्रस्फटिकसमानवर्णं आनन्दघनं सर्वाङ्गसुन्दरं मूर्तिद्वयं शुद्धसत्त्वमयं बहुलीलास्पदं विष्णुशङ्कराख्यं स एवेश्वरो जग्राह । तच्च मूर्तिद्वयं वैकुण्ठकैलासादिषु भक्तानां हृदयेषु च नित्यं सन्निहितं वर्तते । तत्र च भगवान् विष्णुः फलत्यागपूर्वकं निरन्तरानुष्ठितवेदानुवचनयज्ञदानतपोभिः विमलीकृतस्वान्तानां नित्यानित्यवस्तुविवेकेन तृणीकृतब्रह्मलोकादिभोगानां शमदमादिमतां मुमुक्षूणां बहुविधस्वनिश्वासभूतवेदार्थविचारासमर्थानां पुरुषवराणां मोक्ष-

---

[1] नृसिंह उत्तर. ९.

साधनीभूतब्रह्मात्मतत्त्वबोधनाय अंशेन श्रीमद्भगवद्बादरायणरूपेण अवतीर्णो बहुविधन्यायोपेतैः अध्यायचतुष्टयात्मकैः ब्रह्मसूत्रैः सकलवेदान्तवाक्यानि संग्रथयामास । तानि च सूत्राणि अतिगम्भीरार्थकतया दुरवगमाभिप्रायाणि सन्ति । इदानीं कलौ दुष्टचित्तैः भेदवादिभिः अभेदवादिभिश्च कैश्चित् अन्यथाऽन्यथा योजितानि पुरुषार्थपर्यवसायीनि न बभूवुः । अथ भगवान् परमेश्वरः सर्वज्ञः करुणया लोकानुग्रहार्थं स्वांशेन श्रीसर्वज्ञभगवत्पादशङ्कराचार्यरूपेण ब्रह्माद्यंशैश्च शिष्यभूतैस्सह अवतीर्य ब्रह्मसूत्रव्याख्यानरूपश्रीमच्छारीरकभाष्यकरणेन सकृच्छ्रवणमात्रेण अविद्यातिमिरतिरस्कारपटीयसा मुख्याधिकारिणः पुरुषधौरेयान् अनुजग्राह । अथेदानीं ब्रह्मसूत्रार्थमीमांसाऽसमर्थान् अनायासेन झडिति ब्रह्मतत्त्वं साक्षाच्चिकीर्षतो मन्दाधिकारिणोऽनुगृहीतुकामः श्रीभगवान् भाष्यकारः तेषां ब्रह्मतत्त्वं करतलबिल्वफलवत् कारयितुं जपमात्रेण सकलपुरुषार्थसाधकं सर्ववेदान्तसारभूतं श्रवणमनननिदिध्यासनात्मकं हरिस्तोत्रमारिप्सुः चिकीर्षितं प्रतिजानीते—

**स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं**
**यस्मिन्नेतत् संसृतिचक्रं भ्रमतीत्थम् ।**
**यस्मिन् दृष्टे नश्यति तत् संसृतिचक्रं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ १ ॥**

**विष्णुं** व्यापनशीलं त्रिविधपरिच्छेदशून्यं ब्रह्म इति तं **स्तोष्ये** आरोपितसकलाधिष्ठानतया सर्वात्मकत्वेन अनन्तकल्याणगुणतया वस्तुतो निर्विशेषचिन्मात्रतया च कीर्तयिष्ये इति प्रतिज्ञा । **ननु** लक्षणप्रमाणाभ्यां वस्तुसिद्धेः कीर्तयिष्यमाणस्य विष्णोः

किं लक्षणं, किं वा प्रमाणमित्याशङ्क्य जगत्कारणत्वं 'यतो वा इमानि'[1] इत्यादिश्रुत्युक्तलक्षणमाह—**जगदादिमिति** । जगतो वियदादिप्रपञ्चस्य आदिं कारणं, सकलजगदुपादानत्वे सति तत्कर्तृत्वमिति विवक्षितम् । ततश्च अव्याकृतप्रधानपरमाण्वादौ तटस्थेश्वरे च नातिव्याप्तिः ॥

ननु इदमभिन्ननिमित्तोपादानत्वं कुत्राप्यप्रसिद्धं, घटादिषु सर्वत्र उपादाननिमित्तयोः भेदस्यैव दर्शनात् ; सर्वोपादानत्वमप्यप्रसिद्धं, मृत्तिकादेः एकैकोपादानत्वस्यैव दर्शनात् ; अतः कथं अप्रसिद्धं लक्षणमुच्यते ? प्रसिद्धस्यैव लोके लक्षणत्वदर्शनादिति चेत्, उच्यते—पृथिव्यप्तेजोवायवो विप्रतिपन्ना उत्पत्तिमन्तः भूतत्वात् पृथिव्युत्पन्नघटचन्द्रकान्तोत्पन्नजलारण्युत्पन्नाग्निव्यजनपवनवत् इति पृथिव्यादेः कार्यत्वं अनुमाय, आकाशस्यापि भूतत्वहेतुना कार्यत्वमनुमाय, अनन्तरं पृथिव्यादीनि सदुपादानानि, तदुपरक्ततया प्रतीयमानत्वात्, यत् नियमेन यदुपरक्ततया प्रतीयते तत् तदुपादानं यथा घटादि मृदाद्युपादानमिति लाघवात् सर्वस्य जगतः एकसत्प्रकृतिकत्वस्य—तत एव अभिन्ननिमित्तोपादानत्वस्यापि—सिद्धिः संभवतीति । परमते च घटेश्वरसंयोगादौ जीवात्मगतज्ञानादौ च अभिन्ननिमित्तोपादानत्वदर्शनात् । ततश्च अनुमानसिद्धसर्वोपादाननिमित्तानुवादेन तस्य ब्रह्मत्वबोधनं श्रुत्या संभवति, एवं च श्रुतेः लक्षणपरत्वाभावेन अनुमानसिद्धं अभिन्ननिमित्तोपादानमनूद्य तस्य ब्रह्मत्वबोधनमात्रेण न वाक्यभेदप्रसङ्गः । तस्य च ब्रह्मणः स्वरूपं 'आनन्दाद्ध्येव खल्विमानि'[1] इति वाक्येन निर्णीयते । प्रमाणं च विष्णौ—'शास्त्रयोनित्वात्' 'तत्तु समन्वयात्'[2] इत्युक्तेन न्यायेन सर्वे वेदान्ताः । ततश्च लक्षणप्रमाणयोः सत्त्वेन विष्णोः स्तोत्रकरणप्रतिज्ञा संघटत इति न किञ्चित् अवद्यमिति भावः ।

---

[1] तै. उ. ३-१,६.   [2] ब्रह्मसू. १-१-३, ४.

ननु यद्यत् कारणं तत्तत् अन्यजन्यमिति व्याप्तिः आकाशादौ दर्शनात् आकाशादिकारणस्यापि विष्णोः अन्यजन्यत्वानुमानेन जन्यसकलोपादाननिमित्तत्वलक्षणं तस्मिन् अनुपपन्नं स्यादित्याशङ्क्य 'असंभवस्तु सतोऽनुपपत्तेः'[1] इति न्यायेन तस्याजन्यत्वमाह—**अनादिमिति** । न विद्यते आदिः कारणं यस्य सः अनादिः अजन्य इत्यर्थः । अयं भावः—किं ब्रह्मणो जडं कारणं? उत चेतनं? नाद्यः, जडस्य आकाशादेः ब्रह्मकार्यत्वात् । नापि द्वितीयः, स्वस्य स्वकारणत्वानुपपत्तेः, चेतनान्तराभावाच्च । सत्त्वे वा, तस्यापि कारणत्वेन अन्यजन्यत्वानुमानेन चेतनानवस्थाप्रसङ्गात् कस्य चित् अजन्यत्वे तत्रैव च कारणत्वहेतोः व्यभिचारात् तस्यैव वा ब्रह्मत्वाङ्गीकारात् 'स वा एष महानज आत्मा'[2] इत्यजन्यत्वप्रतिपादकश्रुतिविरोधाच्च न तस्य जन्यत्वमिति जन्यसकलोपादाननिमित्तत्वलक्षणमुपपन्नमिति ।

नन्वेवमपि स्तोत्रारम्भोऽत्र न युज्यते तस्य विषयप्रयोजनयोरभावात् । तथा हि—प्रत्यगभिन्नं ब्रह्मैव विषय इति भवतां अभिमानः; स चानुपपन्नः, कर्तृत्वभोक्तृत्वप्रमातृत्वादिना प्रतीयमानस्य प्रतीचः तद्रहितब्रह्मणः अभेदानुपपत्तेः । ननु प्रतीचि अध्यस्ताहङ्कार एव कर्तृत्वादिना अनुभूयते न तु प्रत्यगात्मेति चेत्—न, अध्यासकारणाभावेन कर्तुः अध्यस्तत्वानुपपत्तेः । किं जडे वस्तुनि कर्तुः अध्यासः, ? उत स्वप्रकाशे? नाद्यः, कर्तुः अभानप्रसङ्गात्, भवन्मते जडस्य सर्वस्य अध्यस्तत्वेन अधिष्ठानत्वानुपपत्तेश्च । न द्वितीयः, स्वप्राशस्य वस्तुनः अज्ञानविषयत्वाभावेन अधिष्ठानत्वायोगात् । लोके अंशतो ज्ञातस्यैव शुक्त्यादेः अधिष्ठानत्वदर्शनात्, अस्य च सांशत्वानङ्गीकारात् । न हि प्रकाशमानस्याऽप्यज्ञानविषयत्वं संभवति, प्रकाशाप्रकाशयोर्विरोधात्, सादृश्यादेः विषयदोषस्य स्वप्रका-

---

[1] ब्रह्मसू. २-३-९. [2] बृह. ६-४-२२.

शविषयप्रमितेः असंभवेन तत्करणप्रमाणदोषस्य च अभावाच्च । तस्मान्न कर्तुरध्यास इति तस्यैव आत्मत्वात् तस्य च बहुदोषवतो निर्दुष्टब्रह्मणाऽभेदायोगात् न विषयः संभवति। नापि प्रयोजनं संभवति, आत्मनि प्रतीयमानकर्तृत्वादेः अनर्थस्य निवृत्तिः प्रयोजनमिति वक्तव्यं; तस्य उक्तप्रकारेण अनध्यस्तस्य ज्ञानात् निवृत्त्ययोगादित्याशङ्क्य तदुभयं प्रतिपादयन् स्तुतिमारभते—**यस्मिन्नि**त्यादिना । **यस्मिन्** अज्ञाते विष्णौ अधिष्ठाने **एतत्** अनुभूयमानं **संसृतिचक्रं** संसरत्यनया जीव इति संसृतिः अहंकारादिप्रपञ्चः स एव चक्रं **भ्रमति** प्रत्यहं आविर्भावतिरोभावाभ्यां पुनःपुनः आवर्तते इत्थं कर्तृत्वादिप्रकारम् । अथवा—**संसृतिचक्रं** अहंकारादिप्रपञ्चजातं—कर्म—जीवो **भ्रमति** भ्रान्त्या गृह्णातीत्यर्थः । अयमभिसन्धिः—'आत्मा वा इदमेक एवाग्र आसीत्'[1] 'सदेव सोम्येदमग्र आसीत्'[2] 'सत्यं ज्ञानमनन्तं ब्रह्म'[3] 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति'[4] 'अन्यत्र धर्मादन्यत्राधर्मात्'[5] 'ब्रह्म ते ब्रवाणि'[6] 'यत्साक्षादपरोक्षाद्ब्रह्म'[7] 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति'[8] 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद'[9] 'अथ योऽन्यां देवतामुपास्ते'[10] 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति'[11] 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति'[12] 'तत्त्वमसि'[13] 'अहं ब्रह्मास्मि'[10] 'अयमात्मा ब्रह्म'[14] 'अपूर्वमनपरमनन्तरमबाह्यम्'[15] इत्यादिश्रुतयः उपक्रमोपसंहारादिभिः लिङ्गैः तत्परास्सत्यः प्रत्यगात्मानं अशनायाद्यतीतं अपेत-

---

[1] ऐत. १-१. [2] छा. ६-२-१. [3] तै. २-१. [4] मु. १-१-३.
[5] कठ. २-१४. [6] कौ. ४-१. [7] बृह. ५-४-१ [8] बृह. ५-५-१.
[9] बृह. ४-४-६. [10] बृह. ३-४-१०. [11] बृह. ६-४-१९. [12] तै. २-७.
[13] छा. ६-८-७. [14] बृह. ६-४-५. [15] बृह. ४-५-१९.

ब्रह्मक्षत्रादिकं सच्चिदानन्दात्मकं निर्विशेषं ब्रह्म भेदनिन्दापूर्वकं बोधयन्ति । न च ताः प्रत्यक्षादिभिः बाधितुं शक्यन्ते, बहुविधलिङ्गोपेततया तत्परत्वेन प्रबलत्वात् । किंतु ता एव—प्रत्यक्षादेः तात्त्विकांशानुपजीविकत्वात्, शुक्तिज्ञानवत् पश्चाद्भावित्वात्, स्वप्रमेयबोधने प्रत्यक्षादि अनुपजीव्य स्वप्रकाशचैतन्यविषयत्वात्, अनुमानापेक्षया प्रत्यक्षवत् अव्यवहितवस्तुविषयत्वाच्च—प्रत्यक्षादिकं बाधित्वा तात्त्विकांशात् प्रच्याव्य व्यावहारिकांशे व्यवस्थापयन्ति । ततश्च तादृशात्मनि कर्तृत्वादिप्रपञ्चस्य परमार्थतः असंभवेन सः अध्यस्त एव । न च स्वप्रकाशस्य अज्ञानविषयत्वाभावेन अधिष्ठानत्वायोगात् अध्यासानुपपत्तिः ; लोके "घटमहं न जानामि" इत्यज्ञानविशेषणतया भासमानस्यैव तद्विषयत्वदर्शनात्, स्वरूपचैतन्यस्य च "मामहं न जानामि" इत्यज्ञानसाधकतया सिद्धस्य तदविरोधित्वात्, वृत्त्यारूढस्यैव तस्य तद्विरोधित्वात्, आत्मनि आरोपितांशभेदसत्त्वात्, सादृश्यादेश्च आत्मनि ब्राह्मण्याद्यारोपे संविदनित्यत्वाद्यारोपे च दर्शनात्, स्वयंप्रकाशस्य च स्वयमेव स्वस्मिन् प्रमाणत्वेन तन्निष्ठाविद्यायाः प्रमाणदोषस्य सत्त्वाच्च । अतश्च कर्तुः अध्यस्तत्वेन अनात्मत्वात्, आत्मनश्च कर्त्रादिसाक्षिणो ब्रह्मत्वे बाधाभावात्, ब्रह्मात्मैक्यं विषयः संभवतीति । एवं कर्तृत्वादेः अनर्थस्य आत्मनि आरोपितस्य समूलस्य निवृत्तिः प्रयोजनमपि संभवतीत्याह—**यस्मिन् दृष्ट इति । यस्मिन्** सदानन्दचित्प्रकाशे परिपूर्णे विष्णौ **दृष्टे** शान्त्यादिसहितनिरन्तरानुष्ठितश्रवणमनननिदिध्यासनैः सम्यक् साक्षात्कृते सति **तत् संसृतिचक्रं** समूलं **नश्यति** लीयते—तं हरिमीडे इति संबन्धः । अत्रोभयत्र श्रुतिः—'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति....यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्'[1] इत्यादि ।

---

[1]बृह. ६-५-१५.

ननु अहंकारादिप्रपञ्चमूलाज्ञानस्य निवृत्तिः न संभवति, तस्यानध्यस्तत्वात्, स्वेनैव स्वस्य अध्यासे आत्माश्रयात्, अज्ञानान्तराङ्गीकारे च अनवस्थाद्यापत्तेः, लोके अनध्यस्तघटादेः ज्ञानात् निवृत्त्यदर्शनात् । किंच—भावरूपाज्ञानस्य अनादिनो निवृत्तिः न संभवति, अनादिभावस्य आत्मवत् नित्यत्वनियमात्, परमाणुश्यामसत्यत्वमते च अनादित्वस्य असंप्रतिपत्तेः । किंच—किमज्ञाननिवृत्तिः सती, उत असती, सदसती, सदसद्विलक्षणा वा? आद्ये च आत्मभिन्ना, उत अभिन्ना, उत भिन्नाभिन्ना, भिन्नाभिन्नविलक्षणा वा? नाद्यः, द्वैतापत्तेः; न द्वितीयः, आत्मनः अनादित्वेन अविद्यानिवृत्तेः ज्ञानसाध्यत्वानुपपत्तेः; नापि तृतीयः, विरोधात्; अत एव न चतुर्थोऽपि, भिन्नाभिन्नत्वव्यतिरेकेण प्रकारान्तरस्य अभावात् । न च प्रथमविकल्पे द्वितीयः, असत्त्वे शशशृङ्गतुल्यायाः तस्याः ज्ञानसाध्यत्वानुपपत्तेः, पुरुषार्थत्वाभावप्रसङ्गाच्च । नापि तृतीयः, विरोधात्, उक्तपक्षद्वयदूषणापत्तेश्च । न चतुर्थोपि, सदसद्विलक्षणत्वे अनिर्वचनीयत्वेन तस्या अज्ञानावस्थानप्रसङ्गात्, अनिर्वचनीयाज्ञाननिवृत्तेः अनिर्वचनीयत्वानुपपत्तेश्च । न हि घटनिवृत्तिः घटो भवति । ततश्च सर्वथाऽप्यनुपपत्तेः न अज्ञानस्य निवृत्तिस्संभवतीत्याशङ्क्य—न तावत् अज्ञानस्य कल्पकाभावेन अकल्पिततया ज्ञानात् निवृत्त्यसंभवः, दीपादिवत् तस्य स्वपरनिर्वाहकत्वात्, तस्य स्वप्रकाशे आत्मनि वस्तुतोऽसंभवेन कल्पितत्वस्यैव वक्तुं उचितत्वात्, 'अनृते न हि प्रत्यूढाः'[1] 'त इमे सत्याः कामा अनृतापिधानाः'[2] 'नासदासीन्नो सदासीत्'[3] इत्यादिश्रुतेश्च । नापि अनादिभावत्वेन तस्य निवृत्त्यनुपपत्तिः, अनादिभावस्य अनिवृत्तिरिति सामान्यव्याप्तेः ज्ञानेन अज्ञाननाश इति

---

[1] छा. ८-३-२. [2] छा. ८-३-१. [3] तै. ब्रा. २-८-९.

अनुभवसिद्धविशेषव्याप्तिविरोधेन, 'तरति शोकमात्मवित्'[1] 'भूयश्चान्ते विश्वमायानिवृत्तिः'[2] 'निचाय्य तं मृत्युमुखात्प्रमुच्यते'[3] 'ते ब्रह्मलोके तु परान्तकाले'[4] इत्यादिश्रुत्या,

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः[5] ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते[6] ॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता[7] ॥

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी मायाममेयाय तस्मै ज्ञानात्मने नमः ॥

इत्यादिस्मृत्या च अज्ञानव्यतिरिक्तस्थले सङ्कोचस्यैव वक्तुमुचितत्वात्, तस्य अस्माभिः भावरूपत्वानङ्गीकारात्, अभावविलक्षणत्वमात्रेणैव भावत्वव्यपदेशाच्चेत्यभिप्रेत्य अज्ञाननिवृत्तिः सद्रूपा आत्माभिन्ना चेत्याह—संसारध्वान्तविनाशमिति । संसारस्य कर्तृत्वादिरूपस्य कारणं यत् ध्वान्तं अज्ञानं तस्य विनाशं निवृत्तिरूपं हरिं, वृत्त्यारूढं सत् अज्ञानविरोधिचैतन्यमित्यर्थः । न च आत्माभिन्नायाः अज्ञाननिवृत्तेः ज्ञानसाध्यत्वानुपपत्तिः, यस्मिन् सति यस्य अग्रिमक्षणसंबन्धः असति च यस्मिन् यस्याभावः तत् तत्साध्यमिति साध्यलक्षणस्य विवक्षितत्वात्, ज्ञाने सति अज्ञाननिवृत्तिरूपात्मनः अग्रिमक्षणसंबन्धः ज्ञानाभावे अज्ञाननिवृत्त्यभावः अज्ञानमिति अज्ञाननिवृत्तिरूपात्मन्यपि ज्ञानसाध्यत्वोपपत्तेः, भिन्नसत्ताकयोः भावाभावयोः विरोधाभावाच्च, नित्यसिद्धायामपि अज्ञाननिवृत्तौ साध्यत्वभ्रान्त्या वा पुरुषप्रवृत्त्युपपत्तेश्च, 'प्रपञ्चोपशमं

---

[1]छा. ७-१-३. [2]श्वे. १-१०. [3]कठ. ३-१५. [4]याज्ञि. १२.
[5]गी. ५-१६. [6]गी. ७-१४. [7]गी. १०-११.

शान्तं शिवमद्वैतम्'[1] इत्यादिश्रुत्या तस्याः आत्माभेदसिद्धेश्च सर्वथाऽपि अज्ञाननिवृत्तिरूपप्रयोजनसम्भवेन स्तोत्रारम्भो युज्यत इति भावः । ईडे स्तौमीत्यर्थः ॥ १ ॥

---

ननु ब्रह्म स्वस्मात् अन्यत् जगत् आरभते? उत ब्रह्मैव जगत् जायते? नाद्यः, द्वैतापत्तेः, एकस्य निरवयवस्य आरम्भकत्वानुपपत्तेश्च । द्वितीये तु ब्रह्म सर्वात्मना जगदाकारं भवति? एकदेशेन वा? नाद्यः, मुक्तानां प्राप्यस्थलान्तराभावप्रसङ्गात्, निष्प्रपञ्चब्रह्मण एव मुक्तप्राप्यत्वात् । न द्वितीयः, ब्रह्मणो निरवयवत्वात्, सावयवत्वे च अनित्यत्वप्रसङ्गात्, 'निष्कळम्'[2] इत्यादिश्रुतिविरोधाच्चेत्याशङ्क्य—

निरंशेऽप्यंशमारोप्य कृत्स्नेंऽशे वेति पृच्छतः ।
तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतृहितैषिणी ॥

इति न्यायेन उत्तरमाह—

**यस्यैकांशादित्थमशेषं जगदेतत्**
**प्रादुर्भूतं येन पिनद्धं पुनरित्थम् ।**
**येन व्याप्तं येन विबुद्धं सुखदुःखैः**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ २ ॥**

यस्य परमात्मनः एकांशात् एकदेशतुल्यात् मायाऽवच्छिन्नात् इत्थं भोक्तृभोग्याकारेण एतत् अनुभूयमानं जगत् प्रादुर्भूतम्, उत्पन्नमित्यर्थः । ब्रह्मणो वस्तुतो निरवयवत्वेऽपि मायाऽवच्छेदेन अनिर्वचनीयांशत्वात्* एकांशादेवेदं सकलं जगदुत्पन्नम् ।

---

[1]माण्डू. ७. [2]श्वेता. ६-१९. *शसत्त्वात्.

तथा च श्रुतिः—'पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि'[1] अस्याश्चायमर्थः— विश्वा विश्वानि भूतानि, ब्रह्माण्डात्मकं सकलमिदं जगदिति यावत्, अस्य ब्रह्मणः पादः अंश इत्यर्थः ॥ त्रिपात् पादत्रयं अस्य ब्रह्मणः अमृतं मोक्षरूपं दिवि स्वप्रकाशात्मनि स्वरूपं एव वर्तते, न प्रपञ्चसम्बन्धः तत्राऽस्तीत्यर्थः। ब्रह्मणः प्रपञ्चसंबन्धरहितप्रदेशः बादरायणेनापि सूत्रितः 'विकारावर्ति च तथाहि स्थितिमाह'[2] इति विकाररूपेण आवर्तमानं ब्रह्मणो भागत्रयमस्ति । तथाहि स्थितिं अवस्थानं ब्रह्मण आह उक्ता श्रुतिरिति सूत्रार्थः । तथाच उक्तप्रकारेण ब्रह्मणो जगदाकारेण अवस्थानेऽपि न मुक्तप्राप्यस्थलाभावशङ्केति भावः । एवं जगदुत्पत्तिं परमात्मनः उक्त्वा तस्य जगत्स्थितिहेतुत्वमप्याह—**येन पिनद्धमिति** । पुनः पश्चात् **येन** परमात्मना एतत् जगत् इत्थं वर्णाश्रमादिभेदेन **पिनद्धं** सुदृढं बद्धमित्यर्थः । तथा च श्रुतिः—'एष सेतुर्विधरण एषां लोकानामसंभेदाय'[3] इति । अस्याऽश्चायमर्थः—एषः 'स वा एष महानज आत्मा'[3] इत्युपक्रम्य सर्ववशित्वेन सर्वेश्वरत्वेन चोक्तः प्रकृतः परमात्मा सेतुः। सेतुरिव सेतुः । सेतुसाम्यमेवाह—एषां लोकानां भूरादिभेदेन देवमनुष्यतिर्यगादिभेदेन वर्णाश्रमादिभेदेन च भिन्नानां भुवनानां प्राणिनां च असंभेदाय असाङ्कर्याय विधरणः विधारयिता यथा लौकिकस्सेतुः क्षेत्रसंपदां तत्रत्यजलानां च असाङ्कर्याय विधारयिता तद्वदिति **येन** वा अधिष्ठानभूतेन सर्वं जगत् आकाशेनेव **व्याप्तं** अन्तर्बहिः पूर्णमित्यर्थः । तथा च श्रुतिः—

**यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।**
**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः**[4] ॥

---

[1] तै. आ. ३-१२. [2] ब्रह्मसू. ४-४-१९. [3] बृह. ६-४-२२.
[4] याज्ञिक्यु. १३.

इति । सर्वव्यापकत्वे हेतुः—नारायण इति । नरात् पुरुषात् उत्पन्नानि सर्वाणि जगन्ति नाराणि, तेषां अयनं अधिष्ठानमित्यर्थः । अन्यत् स्पष्टम् । ननु न ब्रह्मणो जगत्कारणत्वं युज्यते, वैषम्यनैर्घृण्यप्रसङ्गात् । तथाहि—कांश्चित् सुखिनो देवादीन् कांश्चित् दुःखिनः तिर्यगादीन् कांश्चित् उभयवतो मनुष्यांश्च सृजन् ईश्वरो विषमः स्यात् । तथा प्रलयकाले अविशेषेण सर्वान् जीवान् उपसंहरन् निर्घृणस्स्यादित्याशङ्क्य तत्तत्प्राण्यनुष्ठितकर्मापेक्षयैव ईश्वरस्य सृष्ट्यादौ प्रवृत्तेः न वैषम्याद्यापत्तिरित्यभिप्रेत्याह—**येन विबुद्धमिति** । **सुखदुःखैः**, सुखं पुत्रलाभादिजन्या सत्त्वपरिणामरूपा अनुकूला चित्तवृत्तिः, दुःखं रोगादिजन्या रजोविकाररूपा प्रतिकूला चित्तवृत्तिः, तदुभयविशिष्टं सकलं जगत् **येन** स्वप्रकाशचिद्रूपेण परमात्मना **विबुद्धं** प्रकाशितमित्यर्थः । अत्र च श्रुतिः—'तस्य भासा सर्वमिदं विभाति'[1] । तस्य सूर्याद्यविषयस्य ब्रह्मणः भासा स्वरूपचैतन्येनेत्यर्थः । अयं भावः—'एष ह्येवैनं साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवैनमसाधु कर्म कारयति तं यमधो निनीषते'[2] इति—एभ्यो लोकेभ्यो नरकतिर्यगादिलोकेभ्यः उन्निनीषते ऊर्ध्वं गन्धर्वादिब्रह्मान्तानां पदं नेतुमिच्छति, अधः तिर्यगादिस्थावरान्तं नेतुमिच्छतीति—श्रुत्या हि तत्तत्प्राण्यनुष्ठितकर्मापेक्षया तत्तत्फलप्रदातृत्वं बोध्यते । न च पुण्ये पापे च स्वेच्छया प्रवर्तयतः ईश्वरस्य पुनश्च वैषम्याद्यापत्तिरिति वाच्यम्; पूर्वपूर्वकर्मापेक्षया उत्तरोत्तरस्मिन् प्रवर्तयतः तदापत्त्यभावात्, संसारस्य च अनादित्वात् । सूत्रकारेण च तस्य वैषम्यनैर्घृण्याद्यभावः सूत्रितः—'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति । न कर्माविभागादिति चेन्नानादित्वात्'[3] । अस्यार्थः—ईश्वरस्य वैषम्यनैर्घृण्ये न भवतः सृष्ट्यादौ प्राणिकर्मापेक्षत्वात् । तथाहि

[1]कठ. ५-१५. [2]कौषी. ३-८. [3]ब्रह्मसू. २-१-३५, ३६.

'एष ह्येव '[1] इत्युक्ता श्रुतिः दर्शयतीति प्रथमसूत्रार्थः । ननु सृष्टेः पूर्वं कर्म नास्ति, तदा अविभागात्, सर्वस्य ब्रह्ममात्रत्वादिति चेत्—न, संसारस्यानादित्वात् सूक्ष्मतया प्रलये स्थितिसंभवाच्चेति द्वितीयसूत्रार्थः । तथा च ब्रह्मणो जगत्कारणत्वे न कोऽपि दोष इति ॥ २ ॥

---

ननु सुखदुःखमोहात्मकस्य वियदादिप्रपञ्चस्य जडस्य सुखदुःखमोहात्मकं सत्त्वरजस्तमोगुणात्मकं जडं प्रधानमेव कारणं अनुमीयते, चिन्मात्रस्य तु ब्रह्मणः तादृशजगत्कारणत्वानुपपत्तेः, कार्यकारणयोः वैलक्षण्यानुपपत्तेश्च, 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपां '[2] इति श्रुतेः—अजां अजन्यां लोहितशुक्लकृष्णां रजस्सत्त्वतमोरूपां सरूपां स्वसमानरूपां बह्वीं प्रजां प्रकर्षेण जायत इति प्रजा वियदादिप्रपञ्चः तामित्यर्थः—इत्याशङ्क्याह—

**सर्वज्ञो यो यश्च हि सर्वः सकलो यो**
**यश्चानन्दोऽनन्तगुणो यो गुणधामा ।**
**यश्चाव्यक्तो व्यस्तसमस्तः सदसद्यः**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ३ ॥**

**यस्सर्वज्ञः**—अत्र च श्रुतिः 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः '[3] इत्यादि । सामान्यतः सर्वं जानातीति सर्वज्ञः, विशेषतोऽपि सर्वं वेत्तीति सर्ववित्, यस्य ज्ञानमयं तपः, न तु जीवानामिव कृच्छ्रादिरूपमिति श्रुतेरर्थः । प्रधानस्य जडत्वेन विविधकर्मफलरूपविविधविन्यासदेहादिप्रपञ्चरचनानुपपत्तेः । किञ्च—

---

[1]कौषी. ३-८. [2]याज्ञि. १२. [3]मु. १-१-९.

सुखादेः बाह्यघटादिधर्मत्वासिद्धेः आन्तरत्वस्यैव प्रतीतेः अचेतनस्य स्वतो लोके प्रवृत्त्यदर्शनात् 'अजाम्'[1] इत्यादिमन्त्रस्य लोहितशुक्लकृष्णगुणवत्तेजोऽबन्नकारणपरमात्माध्यस्ताव्याकृतविषयत्वात् न प्रधानं जगत्कारणम्। बादरायणेनापि 'ईक्षतेर्नाशब्दम्'[2] 'रचनानुपपत्तेश्च नानुमानम्'[3] इत्यादिना प्रधानस्य जगत्कारणत्वं प्रत्यषेधि। 'तदैक्षत बहु स्यां प्रजायेय'[4] इत्यादिश्रुत्या जगत्कारणस्य सतः ईक्षतेः ईक्षणस्य श्रवणात् अशब्दं शब्दागम्यं अनुमानगम्यं प्रधानं न कारणमिति प्रथमसूत्रार्थः। अनुमीयत इत्यनुमानं प्रधानं कारणं न भवति, तस्य जडत्वेन रचनानुपपत्तेः देहादिप्रपञ्चकर्तृत्वानुपपत्तेरिति द्वितीयसूत्रार्थः। श्रुतिसिद्धसर्वज्ञस्य तु ब्रह्मणः तत्संभवतीति भावः। यदुक्तं विलक्षणयोर्न कार्यकारणतेति, तन्न, ऊर्णनाभिस्तन्तोः गोमयाद्वृश्चिकादेः पुरुषात्केशलोमादेश्च दर्शनादित्यभिप्रेत्याह—**यश्च हि सर्व इति**। 'सर्वं खल्विदं ब्रह्म'[5] 'इदं सर्वं यदयमात्मा'[6] इत्यादिश्रुतेः घटस्सन् घटस्स्फुरतीति सर्वस्य प्रपञ्चस्य सत्त्वेन स्फुरणत्वेन ब्रह्मसालक्षण्यानुभवात्। 'यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्संभवन्ति। यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वम्'[7] इत्यादिश्रुत्या विलक्षणकारणत्वे दृष्टान्तप्रदर्शनाच्चेति भावः। नन्वचेतनस्य प्रधानस्य स्वतस्सृष्ट्यादिप्रवृत्त्यसंभवेऽपीश्वराधिष्ठितस्य तस्य प्रवृत्त्या कारणत्वं भवत्विति योगानां सेश्वरसाङ्ख्यानां वा मतमाशङ्क्याह—**सकलो य इति**। सकलः प्रकृतिः अधिष्ठाता च य एवेत्यर्थः। 'सोऽकामयत। बहु स्यां प्रजायेय'[8] इति स्वस्यैव बहुभवनकामनादर्शि-

---

[1]याज्ञि. १२. [2]ब्रह्मसू. १-१-५. [3]ब्रह्मसू. २-२-१. [4]छा. ६-२-३.
[5]छा. ३-१४-१. [6]बृह. ४-४-६. [7]मु. १-१-७. [8]तै. २-६.

नात् 'तदात्मानं स्वयमकुरुत'[1] इति स्वात्मनः जगद्रूपकरण-दर्शनात् 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति'[2] इति 'येनाश्रुतं श्रुतं भवति'[3] 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितं भवति'[4] इत्यादिश्रुतेः एक-विज्ञानेन सर्वविज्ञानप्रतिज्ञायाः प्रकृत्यधिष्ठात्रोर्भेदे प्रकृतिज्ञानेना-धिष्ठातृज्ञानासंभवेन उपरोधप्रसङ्गात्, श्रुत्यसिद्धतटस्थेश्वरस्य लोक-दृष्टसामान्यप्रसाधकेन अनुमानेन सिद्ध्यसंभवाच्च स एव प्रकृति-रधिष्ठाता च । सूत्रकारोऽपि—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरो-धात् । साक्षाच्चोभयाम्नानात् । आत्मकृतेः परिणामात्' 'पत्यु-रसामञ्जस्यात्'[5] ईश्वरस्य प्रकृत्यधिष्ठातृरूपत्वं निमित्तमात्रेश्वरस्या-भावं चाह । सूत्राणामयमर्थः—प्रकृतिः उपादानं, चकारादधि-ष्ठाता चेश्वरः । एवं सति प्रतिज्ञादृष्टान्तयोरनुपरोधात् एकवि-ज्ञानेन सर्वविज्ञानप्रतिज्ञायाः 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्'[6] इति प्रकृतिविषयदृष्टान्तस्य च अनुप-रोधात् उपपत्तेरिति साक्षात् मुखत एव 'बहु स्यां प्रजा-येय'[7] इत्युभयाम्नानात्, प्रकृतित्वस्य च अधिष्ठातृत्वस्य च आम्नानादिति । आत्मकृतेः 'तदात्मानं स्वयमकुरुत'[1] इत्या-त्मन एव जगदाकारेण करणश्रवणात् । कथं कर्तृत्वेन पूर्व-सिद्धस्य क्रियमाणत्वं? तत्राह—परिणामादिति । पूर्वसिद्धस्यापि विकारात्मना स्वात्मनः परिणामयितृत्वात् । पत्युर्निमित्तमात्रभूते-श्वरस्यासामञ्जस्यात् अनुपपत्तेः, लोकदृष्टान्तसाम्येन अनुमितस्य लोकवदेव रागद्वेषादिप्रसक्त्या ईश्वरत्वानुपपत्तेरिति । ततश्च नेश्व-राधिष्ठितं प्रधानमपि कारणमिति भावः ।

---

[1] तै. २-७. [2] मु. १-१-३. [3] छा. ६-१-३.
[4] बृह. ६-५-६. [5] ब्रह्मसू. १-४-२३, २५-२६, २-२-३७.
[6] छा. ६-१-४. [7] छा. ६-२-३.

ननु स्वप्रयोजनरहिते जगत्सर्जनादौ प्रवृत्तेश्वरस्य उन्मत्तादिवत् प्रेक्षाकारित्वाभावप्रसङ्गात्, स्वप्रयोजनोद्देशेन च प्रवृत्तस्य नित्यतृप्तत्व-व्याहतेश्च, नेश्वरो जगत्स्रष्टेत्याशङ्कयाह—**यश्चानन्द** इति ॥ निरन्तरभासमानानवच्छिन्नपरमानन्दस्वरूपः 'आनन्दो ब्रह्म',[1] 'विज्ञानमानन्दं ब्रह्म',[2] 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'[3] इत्यादिश्रुतेः आप्तकामस्येश्वरस्य प्राप्तव्यवस्त्व-भावात् न नित्यतृप्तत्वहानिरित्यर्थः । लोके सार्वभौमादेः प्रेक्षा-कारिणः प्रयोजनोद्देशं विनाऽपि मृगयादौ प्रवृत्तस्य उन्मत्तत्वा-दर्शनात् प्राणिकर्मानुरोधेन जगत्सर्जनादौ प्रवृत्तेः ईश्वरस्य स्वभा-वत्वात् स्वभावे च पर्यनुयोगाभावात् नोन्मत्त ईश्वरः । बादराय-णोऽपि—'न प्रयोजनवत्त्वात्'[4] इत्यनेन सूत्रेण प्रवृत्तेश्च लोके प्रयोजनवत्त्वात् ईश्वरस्य च तदभावात् न स स्रष्टेत्याशङ्क्य 'लोकवत्तु लीलाकैवल्यं'[4] इत्यनेन लोके राजादिवदीश्वरस्यापि लीलाया जगत्सर्जनादिरूपायाः कैवल्यं प्रयोजनराहित्यं उपपद्यत इति समादधौ । तस्मादीश्वरस्स्रष्टैवेति भावः । ननु लोके कुलालादेस्स्रष्टुस्सशरीरस्य शक्तस्य घटादिप्रयोजनपरिज्ञानिनः बाह्य-मृदाद्युपसंहारपूर्वकमेव सर्जने प्रवृत्तिदर्शनात् ब्रह्मणश्च निर्विकल्पस्य अशरीरस्य अत एवासमर्थस्य सृष्टिप्रयोजनापरिज्ञानिनः स्वव्य-तिरिक्तपदार्थाभावेन बाह्यसाधनरहितस्य कथं स्रष्टृत्वमित्याशङ्क्या-ह—**अनन्तगुण** इति । अनन्ताः असङ्ख्याताः सर्वशक्तित्वसर्व-ज्ञत्वादयो गुणा धर्मा यस्य सः । तत्र हेतुमाह—**गुणधामेति**। शुद्धसत्त्वरूपा माया गुणः धाम गृहं उपाधिः यस्य स इत्यर्थः। बाह्यसाधनाभावेऽपि क्षीरादेर्दध्यादिहेतुत्वदर्शनात् देवानां योगिनां च

---

[1] तै. ३-६. [2] बृह. ५-९-२८. [3] बृह. ६-३-३८.
[4] ब्रह्मसू. २-१-३२, ३३.

बाह्यसाधनं विना पुराणादौ योगमहिम्ना सर्गादिदर्शनात् अस्माकं च शरीरान्तरं विनाऽपि शरीराधिष्ठातृत्वदर्शनात् 'पराऽस्य शक्तिर्विविधैव श्रूयते'[1] 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'[2] इत्यादावीश्वरस्य सर्वसाधनपटीयस्याः मायाशक्तेः श्रवणात्, सूत्रकारेण 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि'[3] 'देवादिवदपि लोके',[4] 'सर्वधर्मोपपत्तेश्च'[5] इति सूत्रैः कुलालादेः मृदाद्युपसंहारदर्शनादीश्वरस्य च बाह्यसाधनोपसंहाराभावान्न स स्रष्टेत्याशङ्क्य बाह्यसाधनाभावेऽपि क्षीरस्य दधिहेतुत्ववत् लोके देवादिवच्च प्रपञ्चहेतुत्वोपपत्तेर्मायावशादेव सर्वेषां सर्वज्ञत्वादिधर्माणामुपपत्तेश्च न कोऽपि दोष इति समाधानाच्च अशरीरस्यापि तस्य मायागुणवशादेव सर्वमुपपद्यत इति भावः। ननु तर्हि प्रसिद्धमायावीव किमिति न गृह्यत इत्याशङ्क्याह—**यश्चाव्यक्त इति**। अनिन्द्रियग्राह्य इत्यर्थः। 'अचिन्त्यमव्यक्तं'[6] इत्यादिश्रुतेः 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्'[7] इत्यादिश्रुत्या च रूपाद्यभावान्नेन्द्रियग्राह्यस्सः, किंतु श्रुत्यैकगम्य इति भावः। ननु ब्रह्मण एव सकलजगदाकारत्वे भोक्तृभोग्यविभागो न स्यात्, सर्वस्यापि ब्रह्मकारणकत्वाविशेषादित्याशङ्क्याह—**व्यस्तसमस्त इति**। व्यस्तो भोक्तृभोग्यरूपेण विभक्तो यस्समस्तप्रपञ्चस्तद्रूप इत्यर्थः। लोके यथा समुद्रादेरेकस्यैव फेनतरङ्गबुद्बुदरूपेण विभक्तानेककार्यहेतुत्वं, तद्वदेकस्यापि ब्रह्मणः विभक्तानेकहेतुत्वं संभवति। अत्र च सूत्रम् 'भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्'[8] इति। अस्य चायमर्थः—भोक्तुर्भोग्यत्वापत्तेः भोग्यस्य च भोक्तृत्वापत्तेः अविभागः विभागाभावस्स्यादिति चेन्न,

---

[1]श्वेत. ६-८. [2]श्वेत. ४-१०. [3]ब्रह्मसू. २-१-२४.
[4]ब्रह्मसू. २-१-२५. [5]ब्रह्मसू. २-१-३६. [6]कैवल्य. ६.
[7]कठ. ३-१५. [8]ब्रह्मसू. २-१-१५.

लोकवत्समुद्रवद्विभागोपपत्तेरिति । ततश्च ब्रह्मैव सर्वकारणमिति भावः । ब्रह्मण एव सत्यानृतभोग्यरूपेणावस्थानमाह—**सदसच्च इति** । सत्सत्यम् ; असदसत्यं 'सत्यं चानृतं च सत्यमभवत्'[1] इति श्रुतेः । एकं सत्यपदं ब्रह्म परम्, अपरं व्यावहारिकसत्यवियदादिपरम्, अनृतं शुक्तिरजतादीति ॥ ३ ॥

---

ननु कार्यं स्वन्यूनपरिमाणद्रव्यारब्धं कार्यत्वात् घटवदिति अनुमानेन सर्वस्य कार्यस्य स्वन्यूनपरिमाणद्रव्यारब्धत्वनियमात् परम्परया परमाणव एव जगदुपादानं ; न तु ब्रह्म तस्य विभुत्वादित्याशङ्क्याह—

**यस्मादन्यन्नास्त्यपि नैवं परमार्थं**
**दृश्यादन्यो निर्विषयज्ञानमयत्वात् ।**
**ज्ञातृज्ञानज्ञेयविहीनोऽपि सदा ज्ञः**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ४ ॥**

**यस्मात्** सच्चिदानन्दरूपात् विष्णोः **अन्यत्** परमाण्वादि **नास्ति** 'एकमेवाद्वितीयं' ब्रह्म, 'यस्मात्परं नापरमस्ति किंचित्.'[2] इत्यादिश्रुतेरित्यर्थः—अनुमानस्य च दीर्घविस्तृतक्षौमद्वयारब्धरज्जौ व्यभिचारात् आगमबाधितत्वाच्चेति भावः । ब्रह्म परमार्थतो जगदाकारेण परिणमत इति भास्करादिमतं आशङ्क्य निराकरोति—**अपि नैवं परमार्थमिति** । **एवं** वियदादिजगदाकारेण अवस्थानं **न परमार्थं,** न वास्तवमित्यर्थः । 'निष्कलं निष्क्रियं'[3] इत्यादिश्रुत्या निरवयवब्रह्मणः अंशतो जगद्रूपपरिणा-

---

[1] तै. २-६. [2] श्वे. ३-९. [3] श्वेत. ६-१९.

मानुपपत्तेः, सर्वात्मना च परिणामे ब्रह्माभावप्रसङ्गात्, पुनः प्रलयकाले सच्चिदानन्दाकारेण परिणामे च ब्रह्मणः अनित्यत्वप्रसङ्गात्, समुद्रादेश्च सावयवत्वेन अंशतः फेनादिपरिणामेऽप्यवस्थितिसंभवाच्च, न ब्रह्मणो जगदाकारेण अवस्थानं वास्तवम्। सूत्रकारोऽपि 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा'[1] इति परिणामवादं अदूषयत्। स्पष्टोऽस्यार्थः। 'तदनन्यत्वमारम्भणशब्दादिभ्यः'[2] इति विवर्तवादं च अङ्गीचकार। तदनन्यत्वं परमार्थतः प्रपञ्चस्य तद्व्यतिरेकेण अभाव एव, आरम्भणशब्दादिभ्यः, 'वाचाऽऽरम्भणं विकारो नामधेयम्'[3] इत्यादिश्रुतिभ्य इति तस्यार्थः। ततो जगतो मिथ्यात्वात् न जगत्कारणत्वं ब्रह्मणो वास्तवमिति भावः। ननु सर्वैः परिदृश्यमानस्य जगतः कथं मिथ्यात्वम्? दृश्यत्वादेव शुक्तिरूप्यादिवत् जगतो मिथ्यात्वमिति चेत् तर्हि ब्रह्मणोपि दृश्यत्वात् मिथ्यात्वापत्तिरित्याशङ्क्याह—**दृश्यादन्य इति**। दृश्यात् चैतन्यविषयात् अन्यो यो विष्णुरिति शेषः, 'अदृष्टो द्रष्टा'[4] इत्यादिश्रुतेरित्यर्थः। दृश्यान्यत्वे हेतुमाह—**निर्विषयज्ञानमयत्वादिति**। विषयानपेक्षविज्ञानस्वभावत्वादित्यर्थः, 'विज्ञानघनः'[5] इत्यादिश्रुतेः। कूटस्थज्ञानमात्रस्वरूपस्य कथं सर्वज्ञत्वमित्याशङ्क्याह—**ज्ञातृज्ञानेत्यादि**। **ज्ञातृज्ञानज्ञेयविहीनोऽपि** ज्ञाता ज्ञानाश्रयः, ज्ञानं अविद्यायाः अन्तःकरणस्य वा परिणामविशेषः, ज्ञेयं वियदादि, वस्तुतः तद्रहितोऽपि अविद्याद्युपहितस्सन् **सदा ज्ञः** ज्ञाता 'स वेत्ति वेद्यं न च तस्यास्ति वेत्ता'[6] इत्यादिश्रुतेरित्यर्थः। तस्मात् जगतो मिथ्यात्वात् ब्रह्मणो जगत्कारणत्वं अवास्तवं तटस्थं सत् उपलक्षणं, न तु विशेषणमिति सिद्धम् ॥ ४ ॥

---

[1]ब्रह्मसू. २-१-२६. [2]ब्रह्मसू. २-१-१५. [3]छा. ६-१-४.
[4]बृह. ५-७-२३. [5]बृह. ४-४-१२. [6]श्वेत. ३-१९.

एवं केवलतार्किकानवगाह्यं श्रौतं जगत्कारणं विष्णुं स्तुत्वा इदानीं भक्त्यादिसाधनसम्पन्नैः गुरुशुश्रूषापरायणैरेव अवगाह्यं तं स्तोतुं आरभते—

**आचार्येभ्यो लब्धसुसूक्ष्माच्युततत्त्वाः**
**वैराग्येणाभ्यासबलाच्चैव द्राढिम्ना ।**
**भक्त्यैकाग्र्यध्यानपरा यं विदुरीशं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ५ ॥**

**यं ईश्वरं विदुः** साक्षात् अनुभवन्ति **तं** इति सम्बन्धः। कीदृशाधिकारिणो विदुः? तत्राह—**आचार्येभ्यः** करतलामलकवत् सम्यक् प्रत्यक्षीकृतब्रह्मतत्त्वेभ्यः सर्वकर्मसंन्यासेन समिदाद्युपहारपूर्वकं विधिवत् स्वैरं उपसन्नेभ्यः शान्तेभ्यः केवलं शिष्यकृपयैव तद्बोधने प्रवर्तमानेभ्यो गुरुभ्यः सकाशात् लब्धं प्रथमं ज्ञातं सुसूक्ष्मं अच्युतस्य च्युतरहितस्य कूटस्थनित्यस्य श्रीविष्णोः तत्त्वं यैः ते **लब्धसुसूक्ष्माच्युततत्त्वाः**, 'आचार्यवान् पुरुषो वेद',[1] 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं'[2] 'नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ'[3] इत्यादिश्रुतेः। हे प्रेष्ठ! हे नचिकेतः! एषा ब्रह्मविषया मतिः तर्केण शुष्कतर्केण मूलप्रमाणरहितेन आपनेया प्रापणीया न भवति, किं तु अन्येन सर्वज्ञेन गुरुणा प्रोक्ता प्रकर्षेण युक्तिदृष्टान्तपूर्वकं उक्ता उपदिष्टा सती सुज्ञानाय सम्यक् ब्रह्मविषयाविद्यानिवृत्तये भवतीति कठश्रुतेरर्थः। 'तद्विद्धि प्रणिपातेन'[4] इत्यादिस्मृतेश्च प्रथमज्ञानेन साकल्येन असम्भावनानिवृत्त्यसंभवपक्षे साधनान्तरमप्याह—**वैराग्येणेत्यादिना**। **वैराग्येण** विषयदोष-

[1]छा. ६-१४-२. [2]मुण्ड. १-२-१२. [3]कठ. २-९. [4]भ. गी. ४-३४.

विवेकेन उत्पन्नेन 'ब्रह्मलोकतृणीकारो वैराग्यस्यावधिर्मतः' इत्युक्तपराकाष्ठामापन्नेन विषयविक्षेपरहितकृतो निरन्तरं योऽभ्यासः श्रवणावृत्तिः तेन यद्बलं मननं तेन च—'बाल्येन तिष्ठासेत्'[1] इत्यत्र तथैव व्याख्यानात्—ताभ्यां **द्रढिम्ना** सुदृढया **भक्त्या** अहं ब्रह्मास्मीत्येकत्वेन या भक्तिः भजनं तया **ऐकाग्र्यध्यानपराः** प्रत्यगभिन्नब्रह्मैक्यविषयध्याननिष्ठास्सन्तो यं विदुरित्यर्थः ।

> **नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।**
> **यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम् ॥**[2]

'नायमात्मा बलहीनेन लभ्यः'[3] 'ततस्तु तं पश्यते निष्कलं ध्यायमानः'[4] इति मुण्डकश्रुतेः । प्रवचनं अध्यापनं, मेधा ग्रन्थार्थग्रहणधारणसामर्थ्यं, श्रुतं अनात्मविषयं बहुधा विवक्षितं, एतैः न लभ्यः ; किंतु एष साधकः यं परमात्मानमेव श्रवणादिभिः निरन्तरं प्रार्थयते तेन अयमात्मा लभ्यः । तस्यैवं प्रार्थयमानस्य एष आत्मा स्वां तनूं सच्चिदानन्दात्मिकां वृणुते, प्रकाशयतीत्यर्थः । बलहीनेन तद्विषयमननं अकुर्वाणेनेत्यर्थः । निष्कलं निरवयवं परमात्मानं निरन्तरं ध्यायमानः प्रत्ययसन्तत्या विषयीकुर्वन् पुरुषः तत एव ध्यानानन्तरं पश्यते अप्रतिबन्धेन साक्षात्करोतीत्यर्थः । एतदुक्तं भगवताऽपि—

> **अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ।**[5]
> **भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ॥ इति**[6] **॥५॥**

---

ऐकाग्र्यध्यानपरा विदुरित्युक्तम् । केन क्रमेण केन च प्रकारेण के विदुरित्याकाङ्क्षायामाह—

---

[1]बृह. ५-५-१. [2]मुण्ड. ३-२-३. [3]मुण्ड. ३-२-४.
[4]मुण्ड. ३-१-८. [5]भ. गी. ६-३५. [6]भ. गी. १८-५५.

**प्राणानायम्योमिति चित्तं हृदि रुध्वा**
**नान्यत् स्मृत्वा तत् पुनरत्रैव विलाप्य ।**
**क्षीणे चित्ते भाद्दशिरस्मीति विदुर्यं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ६ ॥**

प्राणान् वागादीनि इन्द्रियाणि **आयम्य** उपसंहृत्य अनन्तरं **ओमिति** जपन्नेव **चित्तं** अन्तःकरणं **हृदि** हृदयाकाशे ब्रह्मणि **रुध्वा** निरुध्य 'ओमित्यात्मानं युञ्जीत,'[1] 'ओमित्येवं ध्यायथ आत्मानं'[2] इति श्रुतेः—आत्मानं चित्तं युञ्जीत निरुन्ध्यादित्यर्थः—'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्'[3] इत्यादिस्मृतेश्च । अथवा—**ओमिति** उच्यमाने ओंकारवाच्ये **हृदि** हृदयाकाशे **चित्तं रुध्वा अन्यत्** रूपरसादीन् न **स्मृत्वा** प्राप्तामपि विषयस्मृतिं विषयदोषदर्शनेन हित्वा,

**संकल्पप्रभवान् कामान् त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥**
**शनैश्शनैरुपरमेत् बुद्ध्या धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥**
**यतोयतो निश्चरति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतत् आत्मन्येव वशं नयेत् ॥**[4]

इति ईश्वरस्मृतेः । **पुनः** पश्चात् ब्रह्मास्मीति अभ्यासव्यग्रं चित्तं **अत्रैव** ब्रह्मात्मन्येव **विलाप्य** लयं प्रापय्य **चित्ते क्षीणे** लीने सति ध्यानव्यापारात् उपरते सति **भाद्दशिरस्मीति** स्वप्रकाशचिद्रूपः परमात्माऽस्मीति **यं** विष्णुं **विदुरि**त्यर्थः । तदुक्तं श्रीभारतीतीर्थैः—

---

[1] महाना. २४-१. [2] मुण्ड. २-२-६.
[3] भ. गी. ८-१३. [4] भ. गी. ६-२४-२६.

**निर्गुणोपासनं पक्वं समाधिस्स्याच्छनैस्ततः ।**
**यस्समाधिर्निरोधाख्यः सोऽनायासेन लभ्यते ॥**
**निरोधलाभे पुंसोऽन्तः असङ्गं वस्तु शिष्यते ।**
**पुनःपुनर्वासितेऽस्मिन् वाक्याज्जायेत तत्त्वधीः ॥**[1]

इति । श्रुतिश्च—

**यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेज्ज्ञान आत्मनि ।**
**ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥**[2]

इति । अस्याश्चायमर्थः—प्राज्ञो विवेकी मुमुक्षुः पुरुषः वाक् वाचं मनसि नियच्छेत् निरुन्ध्यात् । वाग्ग्रहणं सर्वेषां इन्द्रियाणां उपलक्षणम् । प्रथमं वागिन्द्रियव्यापारं विहाय मनोमात्रव्यापारेण अवतिष्ठेतेत्यर्थः । तन्मनः ज्ञाने आत्मनि देहेन्द्रियव्यापारसाक्षिणि चित्प्रकाशे आत्मनि नियच्छेत्, मनआदिषु आत्मबुद्धिं विहाय तत्साक्षिचैतन्ये एव आत्मबुद्धिं कुर्यादित्यर्थः। तदुक्तमाचार्यैः—

**सत्यानन्दस्वरूपं धीसाक्षिणं ज्ञानविग्रहम् ।**
**चिन्तयात्मतया नित्यं त्यक्त्वा देहादिगां धियम् ॥**[3]

इति । ज्ञानं मनआदिसाक्षिचैतन्यं च महति देशकालादिपरिच्छेदशून्ये आत्मनि ब्रह्मणि नियच्छेत् निरुन्ध्यात् एकीकुर्यादित्यर्थः । तत् तं महान्तं आत्मानं साक्षित्वब्रह्मत्वविकल्पत्यागपूर्वकं शान्ते सर्वव्यवहारातीते ‘ अन्यत्रधर्मादन्यत्राधर्मात् ’[4] इत्यादिना प्रक्रान्ते आत्मनि नियच्छेत्, अहंब्रह्मास्मीति वृत्त्युल्लेखं त्यक्त्वा स्वतःप्रकाशमानपरमानन्दपरिपूर्णब्रह्मात्मना अवतिष्ठेतेत्यर्थः। तदुक्तं—

---

[1] वेदान्तपञ्चदश्यां. ९-१२६, १२७. [2] कठ. ३-१३.
[3] वाक्यवृत्तौ. १२. [4] कठ. २-१४.

**दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।**
**यस्तिष्ठति स तु ब्रह्मन् ब्रह्म न ब्रह्मवित्स्वयम् ॥**

इति पराशरेण ॥ ६ ॥

---

'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः'[1] । तं परमात्मानं विज्ञाय विशेषेण ज्ञात्वा धीरः धीमान् विषयानाकृष्टचित्तो वा प्रज्ञां प्रत्ययसन्ततिं कुर्यात् ॥

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥**[2]
**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।**[2]

इत्यादिश्रुतिस्मृतयोऽपि इममर्थं वदन्तीत्याह—

**यं ब्रह्माख्यं देवमनन्यं परिपूर्णं**
**हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममतर्क्यम् ।**
**ध्यात्वाऽऽत्मस्थं ब्रह्मविदो यं विदुरीशं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ७ ॥**

**देवं** स्वप्रकाशं 'अत्रायं पुरुषस्स्वयंज्योतिः'[3] इतिश्रुतेः । **अनन्यं** अन्यवस्तुशून्यं 'यस्मात्परं नापरमस्ति'[4] इति श्रुतेः । **परिपूर्णं** परितः सर्वेषु देशेषु कालेषु च वर्तमानं 'ब्रह्मैवेदममृतं पुरस्तात्'[5] इति श्रुतेः, 'स एवाद्य स उ श्वः'[6] इत्यादिश्रुतेश्च । अत एव त्रिविधपरिच्छेदशून्यतया **ब्रह्माख्यं** ब्रह्मेत्याख्या अभिधा यस्य तं भक्तैः निरन्तरश्रवणादिना आत्मानं भजमानैः पुरुषैः **लभ्यं** प्रापणीयं 'ते सर्वगं सर्वगतं प्राप्य

---

[1]बृह. ६-४-२१. [2]भ. गी. ९-२२, १३-२४. [3]बृह. ६-३-९.
[4]श्वेत. ३-९. [5]मुण्ड. २-२-११. [6]कठ. ४-१३.

धीरा युक्तात्मानः’[1] इत्यादिश्रुतेः । श्रवणादिभिर्युक्तः नियतः आत्मा चित्तं येषामित्यर्थः । **अजं** जन्मरहितं ‘महानजः’[2] इत्यादिश्रुतेः । **सूक्ष्मं** ‘सूक्ष्मात्सूक्ष्मतरम्’[3] इति श्रुतेः । **अतर्क्यं** केवलतर्कागम्यं, किं तु उपनिषदेकगम्यं ‘तं त्वौपनिषदम्’[4] इत्यादिश्रुतेः । **आत्मस्थं** आत्मनि कार्यकरणसङ्घाते जीवत्वेन प्रविश्य स्थितं ‘तदेवानुप्राविशत्’[5] ‘अनेन जीवेनात्मनाऽनुप्रविश्य’[6] इत्यादिश्रुतेः । एवंभूतं यं विष्णुं **ध्यात्वा ब्रह्मविदो** भवन्ति, यं च **हृत्स्थं** सर्वप्राणिनां हृदये अन्तर्यामितया स्थितं ईशं विदुः । अत्र श्रुतिः—‘अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य’[7] इत्यादिः । हृदयोपाधिना अङ्गुष्ठमात्रः, स्वतः पुरुषः पूर्णः, मध्ये देहमध्ये आत्मनि हृदये इत्यर्थः ॥ ७ ॥

---

एवं तावत् भक्त्यादिसाधनसंपन्नैरेव अवगाह्यं तं स्तुत्वा अधुना तत्त्वंपदार्थविवेकसंपन्नैरेव अवगाह्यं विष्णुं स्तोतुमुपक्रमते—

**मात्रातीतं स्वात्मविकासात्मविबोधं**
**ज्ञेयातीतं ज्ञानमयं हृद्युपलभ्य ।**
**भावग्राह्यानन्दमनन्यं च विदुर्यं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ८ ॥**

मीयन्ते अर्था आभिरिति **मात्राः** चक्षुराद्याः ताभ्यः **अतीतं** चक्षुराद्यग्राह्यमित्यर्थः । अत्र श्रुतिः—‘न चक्षुषा

---

[1] मुण्ड. ३-२-५. [2] बृह. ६-४-२२. [3] कैव. १६. [4] बृह. ६-९-२६.
[5] तै. उ. २-६. [6] छा. ६-३-२. [7] कठ. ४-१२.

गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा '[1] इति । अन्यैः वाक्चक्षुर्भ्यामन्यैः इन्द्रियैः तपसा कृच्छ्रचान्द्रायणादिना कर्मणा अग्निष्टोमादिना च न गृह्यते ज्ञातुं न शक्यते, रूपजात्यादिराहित्यादित्यर्थः । तर्हि चक्षुरादिना अग्रहणान्नास्त्येवेति न वाच्यमित्याह—**स्वात्मेति** । **स्वात्मविकासात्मविबोधं** स्वस्य प्रतीचः आत्मा स्वरूपं तस्माद्विकासोऽभिव्यक्तिः यस्य तस्मिन् आत्मनि अन्तःकरणे विबोधो विशेषबोधो यस्य स तथोक्तः तम् । तर्हि बुद्धिग्राह्यमिति प्राप्तं नेत्याह—**ज्ञेयातीतं** ज्ञेयं ज्ञानविषयं वस्त्वतीत्य वर्तमानम् । न हि ज्ञेयातीतं ज्ञेयं भवति 'अन्यदेव तद्विदितात् '[2] 'अप्रमेयमनाद्यं च '[3] इत्यादिश्रुतेः । विदितात् वेदनविषयात् । अप्रमेयं प्रमाया बुद्धिवृत्तेः विषयो न भवतीत्यर्थः, अत्र हेतुमाह—**ज्ञानमयमिति** । ज्ञानस्वरूपत्वादित्यर्थः, 'सत्यं ज्ञानमनन्तं ब्रह्म '[4] 'विज्ञानमानन्दं ब्रह्म '[5] इत्यादिश्रुतेः । ननु तर्हि ज्ञेयातीतस्य कथमन्तःकरणे विशेषबोध इत्याशङ्क्याह—**हृद्युपलभ्येति** । हृदि बुद्धौ भास्यातीतस्यापि सूर्यस्यादर्शे स्फुटं प्रतिबिम्बिततया भानवत् ज्ञेयातीतस्यापि विष्णोः बुद्धौ स्फुटं प्रतिबिम्बिततया स्वतस्स्फुरणं सम्भवति । तथा च श्रुतिः—'मनसैवेदमाप्तव्यं '[6] 'एषोऽणुरात्मा चेतसा वेदितव्यः '[7] 'दृश्यते त्वग्र्यया बुद्ध्या '[8] इत्यादि । न च एतेषु वाक्येष्वात्मनो बुद्धिग्राह्यत्वं प्रतीयत इति वाच्यं, 'अप्राप्य मनसा सह '[9] 'न मतेर्मन्तारं मन्वीथाः '[10] 'यन्मनसा न मनुते येनाहुर्मनो मतम् '[11] इत्यादिश्रुतिविरोधप्रसङ्गात् । कस्तर्हि श्रुतिद्वयस्य परस्पराविरुद्धोऽर्थ इति चेत् शृणु—'मनसैवेदमाप्तव्यम् '[6]

---

[1]मुण्ड. ३-१-८. [2]केन. ३-४. [3]ब्रह्मबि. ९-४. [4]तै. २-१.
[5]बृह. ५-९-२८. [6]कठ. ४-११. [7]मुण्ड. ३-१-९. [8]कठ. ३-१२.
[9]तै. २-४. [10]बृह. ५-४-२. [11]केन. ६.

इत्यादेः आत्मनो वृत्तिव्याप्यत्वं विवक्षितम् । 'अप्रमेयम्' इत्यादिश्रुत्या फलव्याप्यत्वं निषिध्यते । आत्मनो वृत्तिव्याप्यत्वं नाम अन्तःकरणवृत्तौ प्रतिबिम्बिततया स्वत एव स्फुटं भासमानत्वं, फलव्याप्यत्वं फलेन तद्गतचिदाभासेन भास्यत्वम् । तथा च न श्रुतिद्वयविरोधः । तदुक्तं भारतीतीर्थैः—

**स्वप्रकाशोऽपि साक्ष्येष धीवृत्त्या व्याप्यतेऽन्यवत् ।**
**फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ॥**
**अप्रमेयमनाद्यं चेत्यत्र श्रुत्येदमीरितम् ।**
**मनसैवेदमाप्तव्यमिति धीव्याप्यताश्रुता ॥**[1]

इत्यतोऽविषयस्यापि बोधस्सम्भवतीति भावः । 'योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः'[2] इत्याद्यवान्तरवाक्येन देहादिव्यतिरिक्तत्वेन 'अत्रायं पुरुषस्स्वयंज्योतिर्भवति'[3] इत्यादिना स्वयंज्योतिष्ट्वेन 'असङ्गो ह्ययम्'[4] इत्यादिना च असङ्गत्वेन 'यद्वै तं न पश्यति'[5] इत्यादिना च अलुप्तचित्त्वेन प्रतिपाद्यमानं त्वंपदार्थं हृद्युपलभ्य यं विदुरिति सम्बन्धः । तत्पदार्थमाह—**भावग्राह्येति** । भावरूपेण ग्राह्यश्चासावानन्दश्चेति **भावग्राह्यानन्दः**, तम् । 'युवा स्यात्साधु युवाध्यायिकः'[6] इत्यादिश्रुत्या सार्वभौममुपक्रम्य मनुष्यगन्धर्वादिषु स्थानेषु उत्कर्षेण श्रूयमाण आनन्दः यत्र काष्ठां प्राप्तः सोस्ति निरतिशयानन्दः 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चन'[7] इति वाङ्मनसागोचरब्रह्मत्वेन श्रूयमाण इत्येवं भावग्राह्यानन्दामित्यर्थः । **अनन्यं** अन्यत् द्वितीयं यस्मात् न सोऽनन्यः तं, अद्वितीयनिरतिशयानन्दं तत्पदार्थमित्यर्थः ॥ ८ ॥

---

[1] वे. प. ७-९०, ९५. [2] बृह. ६-३-७. [3] बृह. ६-३-९.
[4] बृह. ६-३-१५. [5] बृह. ४-३-५. [6] तै. उ. २-८. [7] तै. २-९.

ननु ब्रह्मणोऽनन्यत्वं कथं? द्वितीयस्य अन्यस्य घटादे-रनुभवात् इत्याशङ्क्य, सर्वस्यापि द्वितीयस्य दृश्यत्वेन शुक्तिका-रजतादिवत् तस्मिन्नारोपितत्वात्, आरोपितस्य च परमार्थभूताधि-ष्ठानमात्ररूपत्वात्, 'सर्वं खल्विदं ब्रह्म'[1] 'आत्मैवेदं सर्वम्'[2] 'ब्रह्मैवेदं सर्वम्'[3] 'इदं सर्वं यदयमात्मा'[4] 'पुरुष एवेदं विश्वम्'[5] इत्यादिश्रुतेश्च न ब्रह्मणः अनन्यपदोक्ताद्वितीयत्वक्षतिरिति अभि-प्रेत्याह—

**यद्यद्वेद्यं वस्तुसतत्त्वं विषयाख्यं**
**तत्तद्ब्रह्मैवेति विदित्वा तदहं च।**
**ध्यायन्त्येवं यं सनकाद्या मुनयोऽजं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ९ ॥**

यद्यत् **विषयाख्यं** विषिणोति विशेषेण पुरुषं बध्नातीति विषयः शब्दादि तद्विषयाख्यं **वस्तुसतत्त्वं** वस्तु परमार्थभूतं ब्रह्मैव सतत्त्वं स्वरूपं यस्य तत् वस्तुसतत्त्वं, तस्मिन् विषया-ख्यस्य सर्वस्यारोपितत्वादित्यर्थः। तत्र हेत्वभिप्रायेणाह—**वेद्य-मिति**। वेद्यस्य दृश्यत्वात् तस्मिन्नारोपितत्वेन विषयाख्यं सर्वं वस्तुसतत्त्वमित्यर्थः। अतः **तत् ब्रह्मैव** न ततोऽतिरिक्तं **इति विदित्वा** ज्ञात्वा **तत्** ब्रह्म **अहं** चकारात् व्यत्यासेन अहं ब्रह्मेति च। **एवं** उक्तप्रकारेण **यमजं** परमात्मानं हरिं **सनका-द्याः** सनकसनन्दनसनत्कुमारसनातनप्रभृतयो **मुनयो** मननशीलाः **ध्यायन्ति** चिन्तयन्ति **तं हरिमीडे** ॥ ९ ॥

---

[1] छा. ३-१४-१. [2] छा. ७-२५-२. [3] बृह. ४-५-१.
[4] बृह. ४-४-५. [5] श्वेत. ३-१५.

ननु अहंप्रत्ययविषय आत्मा प्रसिद्धः । तस्य कथं ज्ञेयातीतत्वसंभावनेत्याशङ्क्याह—

**यद्यद्वेद्यं तत्तदहं नेति विहाय**

**स्वात्मज्योतिर्ज्ञानमयानन्दमवाप्य ।**

**तस्मिन्नस्मीत्यात्मविदो यं विदुरीशं**

**तं संसारध्वान्तविनाशं हरिमीडे ॥ १० ॥**

**यद्यद्वेद्यं** देहाद्यहङ्कारपर्यन्तं **तत्तदहं** आत्मा **न** भवति **इति विहाय** त्यक्त्वा वेद्यस्य घटपटादिवत् अनात्मत्वेन व्याप्तत्वात् अहंकारादि च वेद्यत्वात् आत्मा न भवतीति हित्वेत्यर्थः । अयं भावः—आत्मा अहं प्रत्ययविषय इति वदन् वादी प्रष्टव्यः किं आत्मस्वरूपाहंप्रत्ययविषयः ? उत आत्मनिष्ठाहंप्रत्ययविषयः ? नाद्यः, स्वस्य स्वकर्मत्वानुपपत्तेः । द्वितीयेऽपि किमात्मनिष्ठप्रत्ययो जडः ? उत स्वप्रकाशः ? नाद्यः, जडेन आत्मभानानुपपत्तेः । न द्वितीयः, स्वप्रकाशप्रत्ययविषयस्य घटादिवदात्मत्वायोगात् । न च स्वप्रकाशप्रत्ययस्य आधारतयैव विषयत्वमन्तरेण आत्मा भासत इति वाच्यम् । प्रत्ययव्यतिरिक्तस्य प्रत्ययाधीनप्रकाशस्य प्रत्यय-विषयत्वनियमेन आत्मनः अनात्मत्वदोषतादवस्थ्यात् । तस्मात् योयः प्रत्ययविषयः अहंकारादिः देहान्तः सः अनात्मेति । किं च यद्यत् वेद्यं तत्तत् स्वविलक्षणवेद्यमिति व्याप्तिदर्शनात् स्वयंप्रकाश आत्मा निश्चीयत इत्याह—**स्वात्मेति** । **स्वात्मज्योति-र्ज्ञानमयानन्दं** स्वात्मज्योतिः स्वप्रकाशः ज्ञानमयः ज्ञानस्वरूपो य आनन्दः तं **अवाप्य** परमप्रेमास्पदत्वेन सम्भाव्य **तस्मिन्** स-म्भाविते अहंपदलक्ष्ये **अस्मीत्यात्मविदः** अस्मीति आत्मत्वेन

वेदनं कुर्वन्तः यमीशं ईशपदलक्ष्यं ब्रह्म विदुः साक्षात् अनुभवन्तीत्यर्थः । त्वंपदलक्ष्यज्ञानं विना तस्य ब्रह्मत्वपरिज्ञानासम्भवादिति भावः । तथाच श्रुतिः—

**त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।**
**तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः ॥**[1]

इति । अत्र हि श्रुतौ जाग्रत्स्वप्नसुषुप्तिषु भोग्यस्थूलप्रविविक्तानन्देभ्यो भोक्तृविश्वतैजसप्राज्ञेभ्य उपाधियुक्तेभ्यो विलक्षणः सर्वस्यावभासको यः चिन्मात्रः अहंपदलक्ष्य इति अहंप्रत्ययिनं साक्षात्कृतं अनूद्य तस्य सदाशिवशब्दलक्ष्याद्वयानन्दब्रह्मत्वं बोध्यते, त्वंपदलक्ष्यार्थं असाक्षात्कुर्वतः तस्य ब्रह्मत्वसाक्षात्कारासम्भवात् ॥ १० ॥

---

नन्वेवं देहादिविलक्षणं आत्मानं तस्य ब्रह्मत्वं च जानतामपि केषांचित् मुक्त्यभावः पुनरपि देहादावात्मबुद्धिश्च दृश्यते अतो देहादिव्यतिरिक्तात्मज्ञानं निष्फलमित्याशङ्क्य तेषां अप्रतिबद्धात्मज्ञानाभावादेव मुक्त्यभावः, न तु ज्ञानस्य अतत्साधनत्वेन । प्रतिबन्धः च असत्यप्रपञ्चानात्मदेहादिषु सत्यात्मबुद्धिः पूर्वपूर्ववासनया प्रापितप्रपञ्चदेहादिषु असत्यत्वानात्मत्वभावनया आत्मनः चिन्मात्रभावनया च दीर्घकालं निरन्तरसाक्षात्काराभ्यस्तया निवर्तते, निवृत्ते तस्मिन् ज्ञानेन अज्ञाने नष्टे सति ते सर्वे ब्रह्मैव भवन्तीत्याशयेनाह—

**हित्वाहित्वा दृश्यमशेषं सविकल्पं**
**मत्वा शिष्टं भादृशिमात्रं गगनाभम् ।**

---

[1] कै. १८.

त्यक्त्वा देहं यं प्रविशन्त्यच्युतभक्ताः
तं संसारध्वान्तविनाशं हरिमीडे ॥ ११ ॥

दृश्यं दृशो गोचरं सविकल्पं घटत्वपटत्वब्राह्मण्यादिविकल्पसहितं सर्वमेव बाह्यं आभ्यन्तरं च प्रपञ्चं हित्वा असत्यत्वेन अनात्मत्वेन च भावनया निरस्य देहादेरनात्मत्वं जगतो मिथ्यात्वं च भावयित्वेत्यर्थः । तदुक्तं भारतीतीर्थैः—

आत्मा देहादिभिन्नोऽयं मिथ्या चेदं जगत्तयोः ।
देहाद्यात्मत्वसत्यत्वधीर्विपर्ययभावना ॥
तत्त्वभावनया नश्येत् साऽतो देहातिरिक्तता ।
आत्मनो भावयेत्तद्वत् मिथ्यात्वं जगतोऽनिशम् ॥[1]

इति । शिष्टं परिशिष्टं भादृशिमात्रं स्वप्रकाशचिन्मात्रं स्वच्छत्वासंगत्वविभुत्वादिभिः गगनोपमं मत्वा आत्मत्वेन ज्ञात्वा । तदुक्तं विद्यारण्यगुरुभिः—

पञ्चकोशपरित्यागे साक्षी बोधावशेषतः ।
स्वस्वरूपं स एव स्यात् शून्यत्वं तस्य दुर्घटम् ॥

इति । ततः देहं त्यक्त्वा आत्मत्वेन अभिमतं विष्णुं प्रविशन्ति, तत्र प्रवेशः तदात्मतया अवस्थानमेव ; मुख्यप्रवेशस्यासंभवात् 'ब्रह्म वेद ब्रह्मैव भवति '[2] इति श्रुतेः । अच्युतभक्ताः अच्युते च्युतिरहिते अविनाशिनि ब्रह्मणि आत्मत्वेन या भक्तिः भजनं तद्युक्ता इत्यर्थः 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः'[3] इत्यादिश्रुतेः ॥ ११ ॥

---

[1] वे. प. ७-११२. [2] मु. ३-२-९. [3] बृह. ३-४-१०.

अस्ति हि बृहदारण्यके पञ्चमाध्याये आख्यायिका—जनको ह वैदेहो बहुदक्षिणं यज्ञमारभत, तत्र च नानादेशेभ्यो ब्राह्मणा ब्रह्मविदः यज्ञदिदृक्षया धनादिलिप्सया च समागता बभूवुः। तत्र च ब्रह्मवित्संघदर्शनेन जनकस्य जिज्ञासा भमूव स च तेषां ब्रह्मविदां ब्रह्मिष्ठं पुरुषं ज्ञात्वा तं उपसंपद्य तत्त्वं तत्त्वतो ज्ञास्यामीति मन्वानो गवां सहस्रं सुवर्णरत्नादिभिः सर्वतोऽलङ्कृतं ब्रह्मवित्सभायां अवरुध्य तानुवाच—हे भगवन्तो ब्राह्मणाः! यो वो ब्रह्मिष्ठः तस्मा एतद्गोसहस्रं मया दत्तमिति । ते च भीताः तूष्णीं स्थिताः। अथ याज्ञवल्क्यः तूष्णीं भूतान् तानालक्ष्य स्वान्तेवासिनं उवाच—एता गा अस्मद्गृहं नयेति । स तथा चकार। तद्दृष्ट्वा ब्राह्मणाः चुक्रुधुः। क्रुद्धेषु च तेषु होता आश्वलायनः, आर्तभागः भुज्ज्युः लाह्यायनिः, उषस्तः, कहोलः, इत्येते ब्रह्मविदो याज्ञवल्क्येन व्यूह्य पराजिताः । अथ उद्दालकेन ऋषिणा अन्तर्यामिणं पृष्टो याज्ञवल्क्य उद्दालकाय अन्तर्यामिणं उवाच—सा च श्रुतिरेषा 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः'[1] इति एवमेवयोऽप्सु तिष्ठन् योऽग्नौ योऽन्तरिक्षे यो वायौ यो दिवि य आदित्ये इत्याद्यनेकपर्यायैः सर्वान्तर्यामी विष्णुः निरूपितः । तस्याश्च श्रुतेः अयमर्थः—यः पृथिव्यां तिष्ठति सोऽन्तर्यामी, किं घटपटादिः? नेत्याह—पृथिव्या अन्तरः किमन्तर्वर्तमाना पृथिवी देवता? नेत्याह—यं पृथिवीति । यं पृथिवी देवता न वेद सोऽन्तर्यामी पृथिवीदेवता हि स्वात्मानं जानाति इयमहमस्मीति तस्मात् न सा। किं शरीरी सः? नेत्याह—यस्य पृथिवी शरीर-

---

[1] बृह. ५-७-३.

मिति । यस्य पृथिव्येव शरीरं नियम्यशरीरातिरिक्तशरीरं नास्तीत्यर्थः । एवं यः अन्तरे वर्तमानः पृथिवीं पृथिवीदेवतां यमयति स्वव्यापारे प्रेरयति एषः अमृतः कूटस्थः नित्यः अन्तर्यामी हे उद्दालक ! ते आत्मेति । एवं सर्वपर्यायेषु अर्थो द्रष्टव्यः । एवं ब्रह्मवित्सभायां सर्वान्तर्यामित्वेन सिद्धं विष्णुं स्तौति—

**सर्वत्रास्ते सर्वशरीरी न च सर्वः**
**सर्वं वेत्त्येवेह न यं वेत्ति च सर्वः ।**
**सर्वत्रान्तर्यामितयेत्थं यमयन् यः**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ १२ ॥**

यः सर्वत्र पृथिव्यादिषु उपादानतया **आस्ते** तन्तवः पट इव सर्वं शरीरं यस्य सः **सर्वशरीरी** यः **न च सर्वः** किंतु अधिष्ठानतया सर्वस्यान्तरः यश्च इह पृथिव्यादौ स्थितः **सर्वं वेत्ति** जानाति **यं च सर्वः** पृथिव्यादिः **न वेत्ति** 'स वेत्ति वेद्यं न च तस्यास्ति वेत्ता'[1] इत्यादिश्रुतेः ।

**वेदाहं समतीतानि वर्तमानानि चार्जुन ! ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥**[2]

इति स्मृतेश्च । **यो यमयन्** पृथिव्यादि प्रेरयन् विहितप्रतिषिद्धेषु प्रवर्तयन् निवर्तयंश्च इत्थं उक्तप्रकारेण **सर्वत्रान्तर्यामितया** वर्तते तमित्यर्थः । तथा चोक्तम्—

**जानामि धर्मं न च मे प्रवृत्तिः जानाम्यधर्मं न च मे निवृत्तिः ।**
**श्रीवासुदेवेन हृदि स्थितेन[3] यथा नियुक्तोऽस्मि तथा करोमि ॥**

---

[1] श्वेत. ३-१९. [2] भ. गी. ७-२६.
[3] "केनापि देवेन हृदि स्थितेन" इत्यपि पाठः.

ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥[1]

इतीश्वरस्मृतेश्च ॥ १२ ॥

---

सर्वे हि वेदान्ताः ब्रह्मणः अद्वितीयत्वं प्रत्यगात्मनः तद्रूपत्वं च बोधयन्ति तत्र ऐतरेयश्रुतिस्तावत्—'आत्मा वा इदमेक एवाग्र आसीत्'[2] इत्यवान्तरवाक्येन ब्रह्माद्वितीयत्वं उक्त्वा प्रत्यगात्मनः अद्वितीयब्रह्मत्वं महावाक्येन बोधयति 'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म'[3] इति । तैत्तिरीयकश्रुतिश्च—'सत्यं ज्ञानमनन्तं ब्रह्म'[4] इत्यवान्तरवाक्येन अद्वितीयं ब्रह्म उक्त्वा 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः'[5] इत्यनेन महावाक्येन प्रतीचः तादृग्ब्रह्मत्वं बोधयति । तथा छान्दोग्यश्रुत्या च 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'[6] इत्यनेन तादृशं ब्रह्म उक्त्वा 'तत्त्वमसि'[7] इत्यनेन महावाक्येन जीवब्रह्मणोः अभेदो बोध्यते । एवं प्रतिवेदान्तं च द्रष्टव्यम् । ननु कथं ब्रह्मणः अद्वितीयत्वं, आकाशादेः द्वितीयस्य विद्यमानत्वात् । कथं वा प्रतीचो ब्रह्मत्वं तयोः भेदस्यैव अनुभवादित्याशङ्कायां 'स ईक्षत लोकान्नु सृजा इति स इमाल्लोकानसृजत'[2] 'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः'[4] 'तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत'[6] इत्याद्याः सृष्ट्याद्यर्थवादरूपाः श्रुतयः आकाशादेः सर्वस्य जगतो ब्रह्मण एवोत्पत्तेः, तस्मिन्नेव अवस्थानात्, पुनस्तत्रैव लयात्, मृदुत्पत्तिस्थितिलयकस्य घटादेः मृदभेदवत् कारणब्रह्ममात्रतया अवान्तरवाक्योक्तं ब्रह्मणः अद्वितीयत्वं सम्भावयामासुः । तथा 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत'[8]

---

[1] भ. गी. १८-६१. [2] ऐ. १-१-१. [3] ऐ. ३-३.
[4] तै. उ. २-१. [5] तै. उ. २-८. [6] छा. ६-२-१-२.
[7] छा. ६-८-७. [8] ऐ. १-३-१२.

'तत्सृष्ट्वा । तदेवानुप्राविशत्'[1] 'अनेन जीवेनात्मनाऽनुप्रविश्य'[2] इत्याद्याः श्रुतयः ब्रह्मण एव जीवरूपेण प्रवेशं ब्रुवन्त्यो न तु बहिस्स्थित्वाऽन्तर्गृहे प्रविष्टदेवदत्तवत् जीवब्रह्मणोः अभेदं महावाक्यप्रतिपाद्यं सम्भावयामासुः । तथा नियमनश्रुतिश्च अत्यन्तभेदे नियाम्यनियामकभावानुपपत्तेः तयोरभेदमेव सम्भावयति । तथा 'स वा एष पुरुषोऽन्नरसमयः'[3] 'यदग्ने रोहितं रूपम्'[4] इत्याद्याः तत्त्वंपदार्थपरिशोधनरूपाः श्रुतयः जीवेश्वरोभयगतविरुद्धधर्मनिरासद्वारा तयोरैक्यमेव सम्भावयन्ति । तथा—'ब्रह्मविदाप्नोति परम्'[5] 'अमृतस्समभवत्'[6] इत्याद्याश्च अभेदज्ञानस्य निरतिशयफलप्रदर्शनेन अभेदस्य विवक्षितत्वं ज्ञापयन्त्यः तमेव सम्भावयन्ति । इत्थं सृष्टिस्थितिप्रलयप्रवेशनियमनतत्त्वंपदार्थफलप्रतिपादकैः सप्तविधार्थवादैः अनुगृहीतं सत् महावाक्यं अवान्तरवाक्यसहितं यत् तत्त्वं प्रतिपादयति तदिदानीं स्तौति—

**सर्वं दृष्ट्वा स्वात्मनि युक्त्या जगदेतत्**
**दृष्ट्वाऽऽत्मानं चैवमजं सर्वजनेषु ।**
**सर्वात्मैकोऽस्मीति विदुर्यं जनहृत्स्थं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ १३ ॥**

**सर्वं** वियदादिकं **जगत् एतत्** अनुभूयमानं **स्वात्मनि** स्वस्मिन् **युक्त्या** जडस्य दृक्संबन्धमन्तरेण भानाऽयोगात्, दृग्दृश्ययोश्च संयोगादेः असम्भवात् विषयविषयिभावस्य संयोगादिमुख्यसंबन्धपूर्वकत्वात् सर्वस्य वियदादिजडप्रपञ्चस्य भानान्यथानुपपत्त्या चित्यध्यस्तत्वमेव संबन्ध इत्यादियुक्त्या **दृष्ट्वा** सर्वं जगत् स्वस्मिन् कल्पित-

[1] तै. २-६. [2] छा. ६-३-२. [3] तै. २-२.
[4] छा. ६-४-१. [5] तै. २-१. [6] ऐ. ४-६.

त्वेन ज्ञात्वेत्यर्थः । 'पुरत्रये क्रीडति यस्तु जीवः ततस्तु जातं सकलं विचित्रम्'[1] इति श्रुतेः । पुरत्रये जाग्रदाद्यवस्थात्रये इत्यर्थः । **अजं** जननरहितं अपरोक्षतया अनुभूयमानं **आत्मानं च सर्वजनेषु** सर्वेषु जनिमत्सु अन्तःकरणाद्युपाधिषु प्रतिबिम्बतया वर्तमानं दृष्ट्वा 'यो योनिंयोनिं अधितिष्ठत्येकः'[2] 'इन्द्रो मायाभिः पुरुरूप ईयते'[3]

**अग्निर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च ॥**[4]

इत्यादिश्रुतेः । योनिः माया । रूपशब्दा अन्तःकरणाद्युपाधिपराः । इन्द्रः मरमेश्वरः पुरुरूपः देवतिर्यगाद्यनेकरूपः ईयते लक्ष्यते प्रतिरूपः समानरूपः । इतरत् स्पष्टम् । **सर्वात्मा** सर्वेषां वियदादीनां अधिष्ठानत्वेन स्वस्यैव सर्वशरीरेषु जीवतया प्रविष्टत्वेन च सर्वात्मा सर्वस्वरूपः अत **एकोस्मीऽति यं** अद्वितीयं **जनहृत्स्थं** जनानां हृदि बुद्धौ स्थितं नित्यापरोक्षमित्यर्थः । 'यत्साक्षादपरोक्षाद्ब्रह्म'[5] इत्यादिश्रुतेः । साक्षात् वृत्तिव्यवधानं विना अपरोक्षात् अपरोक्षमित्यर्थः । अत्र च श्रुतिः—

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।**
**संपश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥**
**मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।**
**मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥**[1]

इति । स्पष्टोऽर्थः ॥ १३ ॥

---

**एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।**
**कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च ॥**[2]

---

[1] कै. उ. [2] श्वेत. ५-२; ६-११. [3] बृह. ४-५-१९.
[4] कठ. ५-९. [5] बृह. ३-४-१.

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥[1]

इतीमौ मन्त्रौ आत्मनोऽविद्यया कर्तृत्वादिकं, परमार्थतः तद्राहित्यं च बोधयतः । अनयोश्च एवमर्थः—पुराणप्रसिद्धं ब्रह्मविष्णुरुद्राणां भेदं वारयति—एक इति ॥ देवः स्वप्रकाशचिद्रूपः । स कुत्रेत्याकाङ्क्षायामामाह—सर्वभूतेष्विति । ब्रह्मादिस्तम्बान्तेषु । तर्हि किमिति नानुभूयत इत्यत आह—गूढ इति । अज्ञानेनावृतत्वात् न सामान्यप्रज्ञैरनुभूयत इत्यर्थः । तस्य त्रिविधपरिच्छेदराहित्यमाह—सर्वव्यापीति । देशकालौ जीवेश्वरौ जगदित्येतत्सर्वं व्याप्य स्थातुं शीलमस्येति सर्वव्यापी । तदेव प्रतिपादयन् प्रथमं चेतनप्रतियोगिकभेदाभावमाह—सर्वभूतान्तरात्मेति । चैतन्यमेकमेव सर्वेषु ब्रह्मादिस्थावरान्तेषु प्रविश्यान्तः जीवात्मतया वर्तत इत्यर्थः । तदेव शुद्धसत्त्वमायाप्रतिबिम्बिततया ईश्वरस्सन् सर्वेषां कर्मफलं ददातीत्याह—कर्माध्यक्ष इति । कर्मणां पुण्यपापरूपाणां अध्यक्षः अधिष्ठाय फलदातेत्यर्थः । जडप्रतियोगिकभेदं वारयति—सर्वभूताधिवास इति । सर्वेषां पृथिव्यादिभेदानां अधिवासोऽधिष्ठानमित्यर्थः । आरोपितस्याधिष्ठानाव्यतिरेकात् न तन्निरूपितो भेद इत्यर्थः । जीवेश्वररूपेणावस्थानात् प्राप्तं पुण्यपापादिकर्तृत्वं जगत्स्रष्टृत्वादिकं च वारयति—साक्षीति । स्वसन्निधौ प्रवर्तमानकार्यकरणादेः जगदाकारेण परिणामिन्या अविद्यायाश्च साक्षी साक्षादीक्षिता । साक्षित्वे हेतुमाह—चेता इति । चैतन्यरूप इत्यर्थः । वस्तुतः साक्षित्वादिराहित्यमाह—केवल इति । सकलविशेषशून्य इत्यर्थः । ज्ञानानन्दयोः केचित् गुणत्वं वाञ्छन्ति, तान् निवारयति—निर्गुण इति । 'विज्ञानमानन्दं ब्रह्म'[2]

---

[1] श्वेत. ४-६.

[2] बृह. ५-९-२४.

इत्यादिश्रुतेः ज्ञानानन्दस्वरूपमेवेत्यर्थः । द्वा द्वौ सुपर्णा सुपर्णाविव सुपर्णौ सयुजा सयुजौ नित्यमवियुक्तौ सखाया सखायौ चिद्रूपौ अन्तःकरणोपहितानुपहितौ समानं वृक्षं वृश्च्यते तत्त्वज्ञानेन समूलं छिद्यत इति वृक्षः कार्यकरणोपाधिः तं परिषस्वजाते, आश्रयेते यथा लौकिकौ सुपर्णौ परस्परं सखायौ एकमश्वत्थादिवृक्षमाश्रयेते तद्वत् । तयोर्मध्ये अन्यः एकः पिप्पलं कर्मफलं स्वादु रसवत्—उपलक्षणमेतत्—सुखदुःखरूपमित्यर्थः। अत्ति कर्त्रादिरूपकार्यकरणाविवेकात् भुङ्क्ते । अन्यः कार्यकरणाद्विविक्तः अभिचाकशीति कर्तृभोक्तृभोग्यरूपं कार्यकरणरूपं केवलं पश्यतीत्यर्थः । एवमेताभ्यां मन्त्राभ्यां अविद्याऽवस्थायां कर्त्रादिरूपत्वेन स्वतः साक्षिकूटस्थचिन्मात्रत्वेन प्रतिपादितं विष्णुं स्तौति—

**सर्वत्रैकः पश्यति जिघ्रत्यथ भुङ्क्ते**
**स्प्रष्टा श्रोता बुध्यति चेत्याहुरिमं यम् ।**
**साक्षी चास्ते कर्तृषु पश्यन्निति चान्ये**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ १४ ॥**

**सर्वत्र** ब्रह्मादिस्थावरान्तेषु कार्यकरणसङ्घातेषु प्रविष्टो वस्तुत **एक** एव सन्नपि बहुधा प्रविभक्तः **पश्यति** दर्शनव्यापारं करोति **जिघ्रति** घ्राणेन गन्धं गृह्णाति **भुङ्क्ते** भोजनं करोति **स्प्रष्टा** त्वचा शीतमुष्णं च वेत्ति **श्रोता** श्रोत्रेण शब्दं गृह्णाति **बुध्यति** केवलमन्तस्स्थया बुध्या भूतं भावि च जानाति—**च**कारोऽनुक्तसकलेन्द्रियव्यापारसमुच्चयार्थः—इत्येवं बहुव्यापारवत्त्वेन **यमिमं** अपरोक्षतया अनुभूयमानं अविद्यावस्थायां **आहुः अन्ये** विवेकिनः वास्तवस्वरूपप्रतिपादकमन्त्रा वा **कर्तृषु** कार्यकरणोपाधिषु

स्वव्यापारे प्रवर्तमानेषु पश्यन् कर्तृणि कार्यकरणानि पश्यन् भासयन् **साक्षी** केवलं **आस्ते** परमार्थतो न किंचिदपि स्वयं करोतीति च यमाहुस्तमित्यर्थः । तदुक्तं वासिष्ठरामायणे—

**कुर्वन्नपीह जगतां महतामनन्तं**
**बृन्दं न किंचन करोति कदा चनापि ।**
**स्वात्मन्यनस्तमयसंविदि निर्विकल्पे**
**त्यक्तोदयस्थितिमृतिस्थित एक एव ॥**

इति ॥ १४ ॥

---

नन्वेवं आत्मनः कर्त्रादिरूपत्वतद्रहितत्वोभयप्रतिपादकश्रुतिषु सतीषु अन्यतरमिथ्यात्वं किमित्यङ्गीक्रियते, स्वाभाविकत्वौपाधिकत्वाभ्यां उभयोरपि वास्तवत्वोपपत्तेः; अन्यतरमिथ्यात्वे वा अकर्तृत्वादेरेव मिथ्यात्वं किं न स्यादित्याशङ्क्य, स्वतो विरुद्धद्वयस्य उपाधितोऽपि एकत्र घटनासंभवात्, स्फटिके औपाधिकरक्तिम्नो वास्तवत्वादर्शनात्, कर्तृत्वादेः वास्तवत्वे च सुषुप्त्यादावपि तत्प्रसङ्गात्, कर्तृत्वादेरेव कार्यकरणान्वयव्यतिरेकानुविधानदर्शनात्, सूत्रकारेणापि 'यथा च तक्षोभयथा'[1] इत्यनेन सूत्रेण यथा लोके तक्षा वास्यादिकरणहस्तः कर्ता दुःखी भवति स एव विमुक्तवास्यादिकरणः स्वस्थः सुखी भवति एवं अविद्याप्रत्युपस्थापितकार्यकरणोपाधिक आत्मा स्वप्नजागरितयोः कर्ता दुःखी भवति स तच्छ्रमापनुत्तये स्वात्मानं परं प्रविश्य विमुक्तकार्यकरणसङ्घातः अकर्ता सुखी भवतीति कर्तृत्वस्यैव औपाधिकत्वोक्तेः, औपाधिकत्वस्य च सत्यत्वानुपपत्तेः, अनुभवस्य च तत्परश्रुतिविरोधे भ्रान्तित्वात् कार्यकरणोपाधिकृतं भ्रान्तमेव आत्मनः कर्तृत्वादि न पारमार्थिकमित्यभिप्रेत्याह—

---

[1] ब्रह्मसू. २-३-३९.

**पश्यन् शृण्वन्नत्र विजानन् रसयन् सं-**
**जिघ्रद्भिभ्रद्देहमिमं जीवतयेत्थम् ।**
**इत्यात्मानं यं विदुरीशं विषयज्ञं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥१५॥**

**इमं देहं** कार्यकरणसङ्घातं **जीवतया** प्रविश्य **बिभ्रत्** आत्मा **इत्थं** चक्षुषा उपाधिना **पश्यन्** भवति तथा श्रोत्रोपाधिना **शृण्वन्** शब्दग्राहकः **विजानन्** बुद्ध्युपाधिना निश्चिन्वन् तथा रसनेन **रसयन्** रसं गृह्णन् घ्राणेन गन्धं **जिघ्रन्** भवति न तु स्वतः । तथा च श्रुतिः—‘आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः’[1] इति । अस्याश्चायमर्थः—आत्मशब्देन बुद्धिरुच्यते । बुद्ध्याद्युपाधियुक्तमात्मानं कर्ता भोक्तेत्याहुः । अथ वा—आत्मा जीवः इन्द्रियमनोयुक्तं—प्रथमार्थे द्वितीया छान्दसी—इन्द्रियादियुक्तस्सन् भोक्ता । इति एवं **विषयज्ञमात्मानं यमीशमेव विदुः** स्वेन वास्तवरूपेण तमित्यर्थः ॥ १९ ॥

---

माण्डूक्ये श्रूयते—‘सोयमात्मा चतुष्पाज्जागरितस्थानो बहिःप्रज्ञस्सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः । स्वप्नस्थानोन्तःप्रज्ञस्सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो द्वितीयः पादः । यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थान एकीभूतः प्रज्ञानाघन एवानन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पादः । अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते’[2] इति । अयमर्थः—सोऽयमोङ्कारप्रतिपाद्य आत्मा

---

[1]कठ. ३-४. [2]माण्डू. २...७.

चतुष्पात् चत्वारः पादाः विश्वादिरूपाः यस्य स तथा। तत्र प्रथमं पादं दर्शयति—जागरितेत्यादिना। जागरितं जागरावस्था स्थानं विषयोपलब्धिस्थानं यस्य स तथा। बहिः देहात् बहिर्विषयेषु प्रज्ञा यस्य स तथा। द्यौर्मूर्धा चक्षुरादित्य अग्निर्मुखं प्राणो वायुः देहमध्यमाकाशो वस्तिस्समुद्रः पृथिवी पादौ इति सप्ताङ्गानि यस्य स तथा। एकोनविंशतिमुखः—प्राणपञ्चकं इन्द्रियदशकं अन्तःकरणचतुष्टयं इत्येकोनविंशतिसङ्ख्याकानि मुखानि विषयोपलब्धिद्वाराणि यस्य स तथा। स्थूलभुक्—स्थूलानि पञ्चीकृतभूतकार्याणि घटपटादीनि भुङ्क्ते केवलमुपलभत इति तथा। वैश्वानरः—वैश्वानरग्रहणं व्यष्टिसमष्ट्यभिमानिनोः अभेदविवक्षया—विश्व इत्यर्थः। अयं प्रथमः पादः। स्वप्नः स्थानं वासनामयभोगस्थानं यस्य स तथा। अन्तः देहान्तः वासनामयप्रपञ्चविषया प्रज्ञा यस्य स तथा। प्रविविक्तं सूक्ष्मं वासनामात्ररूपं विषयं भुङ्क्ते इति तथा। तैजसः तेजसि लिङ्गे भवः तदभिमानीत्यर्थः। स द्वितीयः पादः। सुप्तः पुरुषो यत्र यस्यामवस्थायां न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तमिति सुषुप्त्यवस्था निरूपिता। 'कंचन' इत्युक्त्या जागरितमपि स्वप्नमेव मनुते श्रुतिः। सुषुप्तिस्थानः पुमानेकीभूतः एकतां प्राप्तः, बहुधा विभाजकचक्षुरादीनां तदा लीनत्वात्। अतः प्रज्ञानघन एव न विकीर्णप्रज्ञानः। आनन्दमयः आनन्दप्रचुरः, दुःखहेतुलिङ्गस्योपरमात्। आनन्दं स्वरूपानन्दमेव भुङ्क्ते इति तथा आनन्दभोगे साधनमाह—चेतोमुख इति। चेतश्चित्प्रतिबिम्बसहिता ज्ञानवृत्तिरेव मुखमानन्दभोजने द्वारं यस्य स तथा। प्राज्ञः प्रकर्षेणान्तर्बहिर्नै जानातीति तथा। एष तृतीयः पादः। अवस्थात्रयानुस्यूतं शुद्धचैतन्यमेव चतुर्थं पादमाह—अदृश्यमित्यादिना। अदृश्यं ज्ञानेन्द्रियाविषयं अव्यवहार्यं दानादिव्यवहारागोचरं, अग्राह्यं कर्मेन्द्रियाविषयं,

अलक्षणं लक्षणं लिङ्गं तद्रहितं अनुमानाविषयमित्यर्थः, अचिन्त्यं अन्तः-करणागोचरं, अव्यपदेश्यं शब्दाविषयं तत्प्रवृत्तिनिमित्तजात्यादेरभावात्, किंत्वेकात्मप्रत्ययसारं एकोऽद्वितीय आत्मा स्वरूपभूतः प्रत्ययः प्रकाश एव सारो बलं स्वसद्भावे प्रमाणं यस्य स तथा, प्रपञ्चोपशमं प्रपञ्चनिवृत्तिरूपं आरोपितभावस्याधिष्ठानाभिन्नत्वात्, शिवं आनन्दरूपं, अद्वैतं द्वैतरहितं ब्रह्मैव चतुर्थं पादं मन्यन्ते विद्वांस इति । एव-मन्यत्र कैवल्योपनिषदादावपि आत्मनोऽविद्ययाऽवस्थावत्त्वं स्वतस्त-द्रहितत्वं च श्रुतम् । तादृशसर्वश्रुतिसिद्धं विष्णुमिदानीं स्तौति—

**जाग्रद्दृष्ट्वा स्थूलपदार्थानथ मायां**
**दृष्ट्वा स्वप्नेऽथापि सुषुप्तौ सुखनिद्राम् ।**
**इत्यात्मानं वीक्ष्य मुदाऽऽस्ते च तुरीये**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ १६ ॥**

**जाग्रत्** जागरिते वर्तमानो यः **स्थूलपदार्थान्** पञ्चीकृत-भूतकार्यरूपान् **दृष्ट्वा** अनुभूय **अथ** अनन्तरं स्वप्ने **मायां** मि-थ्यारथगजादिरूपां वासनामयीं दृष्ट्वा **सुषुप्तौ सुखनिद्रां** स्वरूप-सुखाभिव्यञ्जककेवलाज्ञानं अनुभूय अविद्यादशायां **इति** एवंप्रकारं **आत्मानं तुरीये** स्थाने समाध्यवस्थायां स्वरूपेण केवलं **वीक्ष्य मुदा** स्वात्मानन्दानुभवजनितसंतोषेण य **आस्ते** तमित्यर्थः ॥१६॥

———

ननु अवस्थात्रयविशिष्टः सुखी दुःखी चात्मा प्रतिदेहं भिन्न एव प्रकाशते, तस्यैकत्वे सुखित्वदुःखित्वादिवैचित्र्यानुपपत्तेः देवदत्तस्य यज्ञदत्तदुःखाद्यनुसन्धानप्रसङ्गाच्च कथमद्वितीयानन्दरूपेण वेदान्तवेद्यतेत्याशङ्क्य तस्य सर्वदेहेषु वस्तुत एकत्वेऽपि अवच्छेद-

कोपाधितोऽनिर्वचनीयभेदस्याङ्गीकारात् एकशरीरावच्छिन्नात्मनि 'पादे मे वेदना शिरसि मे सुखम्' इत्याद्यनुभवानुरोधेन तत्तदवयवावच्छेदेन सुखदुःखवैचित्र्यवत् एकस्मिन्नपि तत्तच्छरीरावच्छिन्ने तदुपपत्तिः, देहभेदेन जन्मान्तरीयसुखदुःखाद्यननुसन्धानवत् देवदत्तस्य यज्ञदत्त-सुखदुःखाद्यननुसन्धानोपपत्तिश्चेत्याह—

**पश्यंच्छुद्धोऽप्यक्षर एको गुणभेदान्**
**नानाकारान् स्फाटिकवद्भाति विचित्रः ।**
**भिन्नश्छिन्नश्चायमजः कर्मफलैर्यः**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ १७ ॥**

यः स्वतश्शुद्धः सुखदुःखादिसंबन्धशून्यः **अक्षरः** नाश-रहितः व्यापको वा **अजः** जनिरहितः **एको**ऽद्वितीयोऽपि **गुण-भेदान्** सत्त्वरजस्तमःपरिणामभेदान् **नानाकारान्** सुरनरतिर्यगाका-रभेदान् **पश्यन्** तत्र तादात्म्याध्यासात् **कर्मफलैः** सुखदुःखैः **विचित्रः** नानारूपः **भिन्नो**ऽनेकः परिच्छिन्नश्च **भाति स्फाटि-कवत्** यथा स्फाटिकशिला अलक्तकाद्युपाधिवशात् विचित्रा अनेक च भाति तथेत्यर्थः **अयं छन्नः** देहान्तरे अज्ञायमानश्च भवति— तथा च श्रुतिः—

**एक एव तु भूतात्मा भूतेभूते व्यवस्थितः ।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥**[1]

भूतः परमार्थ आत्मा भूतेभूते देहेदेहे एकधा स्वेन रूपेण बहुधा उपाध्याहितरूपेणेत्यर्थः । सूत्रकारोऽपि 'असन्ततेश्चाव्यति-करः'[2] इत्यनेन सूत्रेणासन्ततेः उपाधिपरिच्छेदात् अव्यतिकरः

---

[1]ब्रह्मबिन्दु. १२. [2]ब्र. सू. २-३-४९.

जीवानां सुखदुःखाद्यसाङ्कर्यमिति स्वमते सुखदुःखादिवैचित्र्यमुपपाद्य 'अदृष्टानियमात्'[1] इत्यादिसूत्रत्रयेण सर्वगतवास्तवानेकात्मवादिमते सर्वेषु शरीरेष्वपि सर्वेषामात्मनां सन्निधानात्सर्वसन्निधौ उत्पद्यमानस्यादृष्टस्य साधारण्यात् सुखदुःखादिसाङ्कर्यमापादयामास । तत आत्मैकत्वे दोषाभावात् तस्याद्वयानन्दरूपेण वेदान्तवेद्यतोपपद्यत इति भावः ॥ १७

---

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यस्स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः ॥[2]
तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः ।
तदेव शुक्रममृतं तद्ब्रह्म तदापस्स प्रजापतिः ॥[3]
स ब्रह्म स शिवस्स हरिस्सेन्द्रस्सोऽक्षरः परमस्स्वराट् ।
स एव विष्णुस्स प्राणः स कालोऽग्निस्स चन्द्रमाः ॥[4]

इत्यादयो मन्त्रा ब्रह्मण एव सकलदेवतात्मकतयाऽवस्थानमाहुः । शुक्रं ज्योतिष्मत् । ब्रह्म वेदः । अप्छब्देन तदधिष्ठाता वरुण उच्यते । प्राणः वायुः । कालः प्रजासंहर्ता यमः । एतैर्मन्त्रैस्सर्वदेवतात्मकत्वेन सिद्धं विष्णुं स्तौति—

**ब्रह्मा विष्णू रुद्रहुताशौ रविचन्द्रौ**
**इन्द्रो वायुर्यज्ञ इतीत्थं परिकल्प्य ।**
**एकं सन्तं यं बहुधाऽऽहुर्मतिभेदात्**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ १८ ॥**

**ब्रह्मा** अपञ्चीकृतभूतव्यतिरिक्तसकलजगत्स्रष्टा हिरण्यगर्भः **विष्णुः** सत्त्वोपाधिकः सत्त्वसाधनकः सकलजगत्पालकः परमेश्वरः

---

[1] ब्र. सू. २-३-५१. [2] ऋक्सं. १-१६४-४६. [3] श्वेत. ४-२. [4] कै.

रुद्रः सत्त्वोपाधिकः तमस्साधनकः सकलजगत्संहर्ता परमेश्वरः। तस्य तमउपाधिकत्वे जीवत्वापातात् जीवत्वस्य बहुश्रुतिस्मृतीतिहासपुराणविरुद्धत्वेन तद्वादिनः पाषण्डशिरोमणित्वापत्तेः 'सत्त्वं देवा हरादयः' इति वासिष्ठवचनात्,

**इत्यादिष्टस्स गुरुणा भगवान् नीललोहितः।**
**सत्त्वाकृतिस्वभावत्वात्ससर्जात्मसमाः प्रजाः॥**

इति श्रीभागवतवचनाच्च, कुत्रचिच्छ्रूयमाणतमस्संबन्धस्य कार्यार्थत्वेनाऽप्युपपत्तेः। यज्ञ इति भगवतो विष्णोर्मूर्त्यन्तरम्। **मतिभेदात्** बुद्धिवैचित्र्यात्। **मतिभेदा** इति पाठे भिद्यन्त इति भेदाः मत्या भेदाः भिन्नाः मतिभेदाः भिन्नमतय इत्यर्थः ॥ १८ ॥

---

तैत्तिरीयकोपनिषदेवं हि ब्रह्म प्रतिपादयति—प्रथमं 'ब्रह्मविदाप्नोति परम्'[1] इति संहिताद्युपासनादिभिः एकाग्रचित्तमधिकारिणं प्रति ब्रह्मविद्यां सविषयां सफलां सूत्रयामास। ब्रह्मेति विषयनिर्देशः, विदित्यनेन विद्या निर्दिश्यते, परमाप्नोतीति विद्याफलं निर्दिश्यत इति विभागः। तदनन्तरं सूत्रस्यार्थं संक्षेपतः 'सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान्कामांत्सह। ब्रह्मणा विपश्चितेति'[1] अस्या ऋच उदाहरणेन व्याचकार। सत्यमित्यादि सूत्रस्थब्रह्मपदव्याख्यानं, यो वेदेत्यादि वित्पदव्याख्यानं, सोऽश्नुत इत्यादि आप्नोतिपरमिति पदद्वयव्याख्यानमिति विभागः। ऋचोऽयमर्थः—सत्यं कालत्रयबाधाभावोपलक्षितं, ज्ञानं स्वप्रकाशं, अनन्तं—अन्तः परिच्छेदः देशकालवस्तुकृतः, तत्त्रिविधपरिच्छेदाभावोपलक्षितम्। ब्रह्मेति लक्ष्यनिर्देशः,

---

[1] तै. उ. २-१.

सत्यादिपदत्रयं लक्षणम् । गुहायां बुद्धौ यत् कारणत्वेन वर्तमानं परमं व्योम अव्याकृताकाशं तत्र निहितं प्रतिबिम्बिततयाऽवस्थितं यच्चैतन्यं तद्ब्रह्मत्वेन यो वेद स सर्वान् कामान् सार्वभौमादि-हिरण्यगर्भान्तान् सह युगपदश्नुते भुङ्क्ते । केन प्रकारेण? विपश्चिता सर्वज्ञेन ब्रह्मणा सर्वज्ञब्रह्मरूपेण । नोपाधिपरिच्छिन्नरूपेण । ब्रह्मानन्दे स्वल्पानन्दानामन्तर्भावात्, सार्वभौमादिहिरण्यगर्भान्तभोगानां ब्रह्मवि-त्स्वरूपभूतत्वात् चैतन्यभास्यत्वाच्च ब्रह्मविदो युगपत्सर्वभोक्तृत्वमित्यर्थः। अनन्तरं ब्रह्मणः सूत्रव्याख्यानरूपया ऋचा उदीरितानन्त्यसिद्धये आ-काशादेर्ब्रह्मण एवोत्पत्तिं कथयामास । ततः यो वेदेत्याद्युक्तं ब्रह्मणः प्रत्यक्त्वं 'स वा एष पुरुषोऽन्नरसमयः'[1] इत्यारभ्य देहादिपञ्चकोशात्मोपदेशक्रमेण 'ब्रह्म पुच्छं प्रतिष्ठा' इति पुनर्विस्तरेण प्रतिपादयामास । ततः ब्रह्मणः नामरूपातीतस्य प्रत्यक्षाद्यविषयत्वेन असत्त्वशङ्कायां 'सोऽकामयत' इति कामयितृत्वेन स्वर्गकामिवत् 'स तपोऽतप्यत' इत्यालोचकत्वेन मन्त्रिवत् 'इदं सर्वमसृजत' इति स्रष्टृत्वेन कुलालवत् 'तदेवानुप्राविशत्' इति प्रवेष्टृत्वेन सर्पवच्च सत्त्वमुपपाद्य पुनश्च 'को ह्येवान्यात्' इत्यादिना सर्वप्राणिनां जीवनहेतुत्वेन 'यदा ह्येवैषः' इत्यादिना विद्वदविद्वद्भयाभयहेतुत्वेन च तदेव सत्त्वं दृढीचकार । अनन्तरं च 'सैषाऽऽनन्दस्य' इत्यादिनाऽऽनन्दमीमांसा-मारभ्य सार्वभौमादिहिरण्यगर्भान्तानामानन्दानामुत्तरोत्तरशतगुणोत्कर्ष-प्रदर्शनपूर्वकं ब्रह्मविदुषो

**यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।**
**आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चन ॥**

इति वाङ्मनसागोचरनिरतिशयब्रह्मानन्दप्राप्तिं निरतिशयानर्थनिवृत्तिं च प्रतिपाद्य पुनः 'एतं ह वाव'[1] इत्यादिना अनर्थनिवृत्तिं

[1] तै. उ. २-१...९.

प्रपञ्चय निरतिशयानन्दब्रह्मापरोक्षज्ञाने साधनाकाङ्क्षायां ‘भृगुर्वै वारुणिः’[1] इत्यादिना भृगुवरुणसंवादमुपक्रम्य ‘यतो वा’[1] इत्यादिना ब्रह्मणस्तटस्थलक्षणकथनपूर्वकं प्रियाय पुत्राय वरुणेन पित्रा उपदिष्टं तपआख्यं पुनःपुनः विचारमेव ब्रह्मापरोक्ष्याय मुख्यं साधनमुपदिश्य ब्रह्मविदस्तृप्तिगानं चान्ते प्रदर्श्य उपरराम तैत्तिरीयोपनिषत्। इत्थं तया मातृवत्सर्वप्राणिहितैषिण्या प्रतिपादितं विष्णुं स्तौति द्वाभ्याम्—

सत्यं ज्ञानं शुद्धमनन्तं व्यतिरिक्तं
शान्तं गूढं निष्कलमानन्दमनन्यम् ।
इत्याहादौ यं वरुणोऽसौ भृगवेऽजं
तं संसारध्वान्तविनाशं हरिमीडे ॥११॥

सत्यं अबाध्यं ज्ञानं जडविरोधि शुद्धं मलास्पृष्टं अनन्तं त्रिविधपरिच्छेदशून्यं व्यतिरिक्तं कोशपञ्चकभिन्नं तत्साक्षिणं शान्तं निरस्तसर्वोपद्रवम्। अत्र च श्रुतिः—‘यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते’[2] इति । अस्याश्चायमर्थः— यदैव यस्मिन्नेव काले एष साधकः एतस्मिन्नित्यापरोक्ष्ये, अदृश्ये दृश्यप्रपञ्चरहिते, तत्पदलक्ष्ये इत्यर्थः, अनात्म्ये स्थूलदेहरहिते अनिरुक्ते निरुक्तं लिङ्गं तद्रहिते अनिलयने निलीयते प्रपञ्चदेहलिङ्गान्यस्मिन्निति निलयनमज्ञानं तद्रहिते, त्वंपदलक्ष्ये इत्यर्थः। प्रत्यगभिन्ने ब्रह्मणीति पदचतुष्टयार्थः। तस्मिन् अभयं भयरहितं यथा भवति तथा प्रतिष्ठां स्थितिं विन्दते लभते, उक्तरूपं ब्रह्म आत्मतया जानातीत्यर्थः। ‘अथ सोऽभयं गतो भवति।’[2]

---

[1] तै. ३-१. [2] तै. २-७.

अथानन्तरमेव उक्तवेदनानन्तरकाल एव सः ब्रह्मवित् अभयं जननमरणप्रवाहनिमित्तभीतिराहित्यं गतः प्राप्तो भवतीति । गूढं अनवगाह्यं वाङ्मनसागोचरमित्यर्थः, 'यतो वाचः'[1] इति श्रुतेः । निष्कलं निरवयवं आनन्दं परमप्रेमास्पदं अनन्यं श्रोतृस्वरूपम् । अत्र च श्रुतिः—'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः'[1] इति पुरुषे कार्यकरणसंघाते अयमपरोक्षतयाऽनुभूयमानो यः चिद्धातुः साक्षितया वर्तते, यश्चादित्ये अन्तर्यामितया अपरोक्षत्वेन भासमानो वर्तते स उभयत्र वर्तमानः चिद्धातुः एक एव न भिन्न इत्यर्थः । इति एवं आदौ आनन्दवल्ल्यां प्रतिपादितं यं विष्णुं अजं जन्मरहितं असौ वरुणो भृगवे भृगुनामकाय महर्षये पुत्राय आह उक्तवान् 'यतो वा'[2] इत्यादिना, तमित्यर्थः ॥ १९ ॥

---

कथं भृगुर्वेदेत्याकाङ्क्षायां तद्वेदनप्रकारमाह—

**कोशानेतान् पञ्च रसादीनतिहाय**
**ब्रह्मास्मीति स्वात्मनि निश्चित्य दृशिस्थम् ।**
**पित्रा शिष्टो वेद भृगुर्यं यजुरन्ते**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ २० ॥**

रसादीन् अन्नरसविकाररूपस्थूलदेहादीन् पञ्च कोशान् **अतिहाय** अनात्मत्वेन विहाय—पञ्चकोशस्वरूपं तु प्रत्यक्तत्त्वविवेके श्रीविद्यारण्यगुरुभिः प्रदर्शितम्—

स्यात्पञ्चीकृतभूतोत्थो देहस्स्थूलोऽन्नसंज्ञिकः ।
लिङ्गे तु राजसैः प्राणैः प्राणः कर्मेन्द्रियैस्सह ।

---

[1] तै. २-९ ; ८. [2] तै. ३-१.

**सात्त्विकैर्धीन्द्रियैस्साकं विमर्शात्मा मनोमयः ।**
**तैरेव साकं विज्ञानमयो धीर्निश्चयात्मिका ।**
**कारणे सत्त्वमानन्दमयो मोदादिवृत्तिभिः ॥**

इति ज्ञानेन्द्रियाणां संशयनिश्चयो भयहेतुत्वेन मनोमये विज्ञानमये च संबन्धः । **दृशिस्थः** कार्यकरणसङ्घाति साक्षित्वेन यच्चैतन्यं तद्रूपेण स्थितस्सन् स्वात्मन्येव स्वस्वरूप एव 'आनन्दो ब्रह्मेति व्यजानात्'[1] इत्यादिना 'यतो वा'[1] इत्यादिलक्षणयोजनपूर्वकं सर्वप्रतिष्ठाभूतं ब्रह्म **निश्चिस पित्रा शिष्टो भृगुः यजुरन्ते** तैत्तिरीयकोपनिषदि **ब्रह्मास्मीति यं वेद तमित्यर्थः** ॥ २० ॥

---

ननु नास्ति जीवातिरिक्तः कश्चिदीश्वरः जगत्स्रष्टा प्राणिनां भयाभयहेतुः, जगतो नित्यत्वात् सुखदुःखयोश्च पुण्यपापमूलत्वात् वेदान्तानां च कर्मशेषभूतकर्त्रादिस्तावकत्वेन प्रत्यक्षादिविरुद्धाद्वितीयेश्वरे प्रमाणत्वाभावादिति जैमिनीयादिमतमाशङ्क्य सर्वस्य जगतः सावयवत्वादिना कार्यत्वेन अनुमितस्य अधिष्ठातारं परमेश्वरं विना उत्पत्त्यनुपपत्तेः जीवानां च एतादृशजगदुत्पादने ज्ञानसामर्थ्ययोरभावात् चेतनत्वेन स्वतन्त्राणां च तेषां पारवश्यं विना स्वतो दुःखहेतुकर्मानुष्ठानेन तत्फलभोगासम्भवात् कर्मणां च जडत्वेन जगतः सर्जने जीवानां सुखदाने च स्वतोऽधिष्ठातारं विना असमर्थत्वात् वेदान्तैश्च प्राणिकर्मानुरोधेन जगत्स्रष्टुः तत्कर्मफलदातुश्च ईश्वरस्य सिद्धिप्रकारस्य पूर्वमुक्तत्वात् तत्परश्रुतिविरोधे प्रत्यक्षादेराभासत्वात् कर्मविरुद्धात्मप्रतिपादकवेदान्तानां तच्छेषात्मस्तावकत्वानुपपत्तेश्च अस्ति कार्यमङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवदिति कार्यलिङ्गादितर्कानुगृहीतश्रुतिसिद्धः कश्चित्परमेश्वरः इत्यभिप्रेत्याह—

[1] तै. ३-६ ; १.

**येनाविष्टो यस्य च शक्त्या यदधीनः**
**क्षेत्रज्ञोऽयं कारयिता जन्तुषु कर्तुः ।**
**कर्ता भोक्ताऽऽत्माऽत्र हि यच्छक्त्यधिरूढः**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ २१ ॥**

क्षेत्रज्ञो **येन** परमेश्वरेण **आविष्टो** दुष्करमपि कर्म कश्चित्करोति ग्रहाविष्टवत्, आवेशाविनिर्मुक्तश्च न शक्नोति कर्तुं सोस्ति कश्चित् परमेश्वरः, अर्जुनादावीश्वरावेशश्रवणात् । **यस्य च शक्त्या** मायया आविष्टो ज्ञानस्वरूपोऽपि मूढोऽहं न जाने किंचिज्ज्ञ इत्यभिमन्यते सोऽस्ति शक्तिमान् कश्चिदिति गम्यते । अत्र श्रुतिः 'अनीशया शोचति मुह्यमानः'[1] इति । अनीशया आत्मज्ञानावरणेन ईश्वरभावाप्रतिपत्त्या मुह्यमानः देहादिष्वभिनिवेशमानः शोचति वैकल्येन विषीदतीत्यर्थः । तदुक्तं भगवताऽपि 'दैवी ह्येषा गुणमयी मम माया दुरत्यया'[2] इति । अत एव क्षेत्रज्ञोऽयं **यदधीनः** सर्वव्यापारेषु वर्तते अस्ति स ईश्वरो **जन्तुषु** सर्वभूतेषु **कर्तुः कारयिता** इत्यभ्युपगन्तव्यम् । तदुक्तं सूत्रकारेण 'परात्तु तच्छ्रुतेः'[3] इति । परादीश्वरान्निमित्तात् क्षेत्रज्ञः कर्ता तच्छ्रुतेः 'एष ह्येव साधु कर्म कारयति'[4] इतीश्वरस्य प्रयोजकत्वश्रवणादिति सूत्रार्थः । यस्य परमात्मनः चिच्छक्त्यारूढः चित्स्वरूपव्याप्तः **कर्ता भोक्ता आत्मा** इति प्रसिद्धाहङ्कारः **अत्र** कार्यकरणसङ्घाते कृशानुव्याप्तो लोह इव दग्धा, **तमीड** इत्यर्थः ॥ २१ ॥

---

[1] श्वेत. ४-७. [2] भ. गी. ७-१४. [3] ब्रह्मसू. २-३-४१. [4] कौषी. ३-८.

ननु जीवेश्वरयोः प्रवर्त्यप्रवर्तकभावेन भेदादद्वैतवाक्यार्थासिद्धिरित्याशङ्क्य तयोः कल्पितभेदे सत्यपि वास्तवाभेदमादायैव अद्वैतवाक्यार्थोपपत्तिरित्यभिप्रेत्याह—

**सृष्ट्वा सर्वं स्वात्मतयैवेत्थमतर्क्यं**
**व्याप्याथान्तः कृत्स्नमिदं सृष्टमशेषम् ।**
**सच्च त्यच्चाभूत् परमात्मा स य एकः**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ २२ ॥**

सः श्रुत्यन्तप्रसिद्धो यः परमात्मा एकः वस्तुतो जीवाभिन्नः इत्थं अनुभूयमानानेकप्रकारं अतर्क्यं तर्कासहं सर्वमिदं जगत् सृष्ट्वा अथ सृष्टमिदमशेषं सुरनरतिर्यगादिशरीरं कृत्स्नं अन्तः स्वात्मतयैव व्याप्य तत्र प्रविश्य तादात्म्याध्यासेन स्वस्वरूपतया गृहीत्वेत्यर्थः, 'तत्सृष्ट्वा तदेवानुप्राविशत्'[1] 'स एष इह प्रविष्ट आनखाग्रेभ्यः'[2] इतिश्रुतेः। सच्च त्यच्चाभवत् परोक्षप्रत्यक्षरूपोऽभूदिति यावत् । तं परमात्मानमीड इति ॥ २२ ॥

---

एवं तावत् अद्वैतवाक्यं प्राधान्येन स्तुत्वा शास्त्रैस्सर्वैरपि यथारुचि ऋजुवक्रमार्गाभ्यां प्रतिपाद्यमानं विष्णुं स्तौति—

**वेदान्तैश्चाध्यात्मिकशास्त्रैश्च पुराणैः**
**शास्त्रैश्चान्यैः सात्वततन्त्रैश्च यमीशम् ।**
**दृष्ट्वाऽथान्तश्चेतसि बुद्ध्वा विविशुर्यं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ २३ ॥**

---

[1] तै. २-६.

[2] बृह. ३-४-७.

**वेदान्तैः** सच्चिदानन्दाद्वयप्रत्यगभिन्नत्वेन प्रतिपाद्यमानं **आध्यात्मिकशास्त्रैः** आत्मानं जीवमधिकृत्य प्रवर्तमानैः सांख्यादिशास्त्रैः असङ्गचिद्रूपत्वादिरूपेण **पुराणैः** शिवविष्ण्वादिरूपेण **अन्यैश्च शास्त्रैः** वैशेषिकाद्यभिमतज्ञानादिगुणकत्वेन प्रत्यग्भिन्नत्वादिरूपेण च **सात्वततन्त्रैः** सत्त्वरूपमस्यास्तीति सत्वान् वासुदेवः, तस्य भक्तत्वेनाभिमताः सात्वताः, तेषां तन्त्रैः वैष्णवशास्त्रैरित्यर्थः, तैर्वासुदेवादिरूपत्वेन, चकारादन्यैश्च ब्राह्मशैवादितन्त्रैः तेनतेन प्रकारेण प्रतिपाद्यमानं वस्तुतः एकमेव **यमीशं** **दृष्ट्वा** प्रथमं शास्त्राचार्येभ्यो ज्ञात्वा अथ अनन्तरं ध्यानेन **अन्तश्चेतसि बुद्ध्वा** ईशोऽस्मीति साक्षादनुभूय केचन महात्मानः **यं विविशुः** आत्मत्वेन प्राप्ताः तम् ॥ २३ ॥

---

नन्वेवं सर्वे किमिति शास्त्राचार्येभ्य ईशं ज्ञात्वा चेतसि साक्षादनुभूय विष्णुं न प्राप्नुवन्तीत्याशङ्क्य 'श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्यति'

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥**[1]

'ततस्तु तं पश्यते निष्कलं ध्यायमानः'[2] 'शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽत्मन्येवात्मानं पश्येत्'[3] इत्यादिश्रुतेः एतैस्साधनैर्यतमानैरेव विष्णुरात्मत्वेन प्राप्तुं शक्यः, न तु तद्रहितैः शब्दमात्रपण्डितैः 'विदूरकाष्ठा यमुहुः कुयोगिनाम्' इति वचनादित्याह—

**श्रद्धाभक्तिध्यानशमाद्यैर्यतमानैः**
**ज्ञातुं शक्यो देव इहैवाशु य ईशः ।**

---

[1] श्वे. ६-२३. [2] मुण्ड. ३-१-८, [3] बृह. ६-४-२३.

**दुर्विज्ञेयो जन्मशतैश्चापि विना तैः**
**तं संसारध्वान्तविनाशं हरिमीडे ॥२४॥**

**श्रद्धा** श्रुतिगुरुवाक्ययोर्विश्वासः **भक्तिः** गुरौ विष्णौ च प्रेमा **ध्यानं** गुरूपदिष्टार्थे ब्रह्मणि विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहसंपादनं **शमः** अन्तःकरणस्य विषयेभ्यो व्यावृत्तिः **आद्यशब्देन** दमः बाह्येन्द्रियाणां स्वस्वविषयेभ्यो व्यावृत्तिः, उपरतिः विधितः सकललौकिकवैदिककर्मत्यागः, तितिक्षा अपराधिन्यक्रोधः, समाधानं समाध्यनुष्ठानमित्येतानि साधनानि गृह्यन्ते । एतैः साधनैः **यतमानैः** दर्शनयत्नं कुर्वद्भिः **देवः** स्वप्रकाशः **य ईशः** परमेश्वरः **इहैव** अस्मिन्नेव लोके अस्मिन्नेव युगे अस्मिन्नेव जन्मनि अस्मिन्नेव देहे **ज्ञातुं** प्रत्यक्त्वेन साक्षात्कर्तुं **शक्यः**, **तैः** एतैः साधनैः **विना** **जन्मशतैः** शास्त्रशतैः पाण्डित्यशतैरपि **यो दुर्विज्ञेयः** दुःखेनापि ज्ञातुमशक्यः **तमि**त्यर्थः । तथाच श्रुतिः—

**नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।**
**नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ इति ॥**[1]

दुश्चरितात् निषिद्धकृत्यात् अविरतो अनुपरतः पुरुषः अशान्तः विषयेभ्यः अव्यावृत्तचित्तः असमाहितः समाध्यनुष्ठानरहितः अशान्तमानसः सति निमित्ते क्रोधाधिकं कुर्वन्वा, अपिशब्दात् स्थितप्रज्ञादिषूक्तलक्षणरहितो गृह्यते । प्रज्ञानेन प्रकृष्टं असंभावनाद्यप्रतिबद्धं ज्ञानं प्रज्ञानं तेन एनं उक्तसाधनसहितैः अपरोक्षतयाऽनुभूयमानं अपरिमितानन्दं आत्मानं नाप्नुयात् । संभावनायां लिङ् । तादृशस्य पुंसः तत्प्राप्तिसंभावनाऽपि नास्तीति श्रुतेरर्थः ॥२४॥

———

[1]कठ. २-२४.

यदुक्तं वेदान्तैरीदृशं दृष्टेति तत्स्फुटयति—

**यस्यातर्क्यं स्वात्मविभूतेः परमार्थं**
**सर्वं खल्वित्यत्र निरुक्तं श्रुतिविद्भिः ।**
**तज्जादित्वादब्धितरङ्गाभमभिन्नं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ २५ ॥**

**स्वात्मविभूतेः** स्वात्मन एव साधनान्तरनिरपेक्षतया विभूतिः विविधजगदाकारभवनं यस्य स तथा तादृशस्य **यस्य** परमेश्वरस्य **अतर्क्यं** तर्कागम्यं अत एव **परमार्थं** अविकारि वास्तवरूपम् । परमेश्वरस्य तर्कागम्यत्वे इमौ मन्त्रौ साक्षिणौ— 'को अद्धा वेद क इह प्रवोचत् । कुत आजाता कुत इयं विसृष्टिः । अर्वाग्देवा अस्य विसर्जनाय । अथा को वेद यत आ बभूव । इयं विसृष्टिर्यत आ बभूव । यदि वा दधे यदि वा न । यो अस्याध्यक्षः परमे व्योमन् । सो अङ्ग वेद यदि वा न वेद'[1] इति । अनयोश्चायमर्थः—इह अस्मिन् संसारमण्डले कः पुमान् अद्धा निश्चयेन वेद जानीयात् प्रवोचत् प्रब्रूयात्—कुतो हेतोः इयं विसृष्टिः विसृज्यत इति विसृष्टिः विविधा सृष्टिर्विसृष्टिः अनुभूयमानमिदं सकलं जगत् आजाता आ समन्तात् उत्पन्ना कुतश्च हेतोः स्थितिमनुभवति तं को वेदेत्यर्थः । देवा महाप्रभावाः ज्ञास्यन्तीत्याशङ्क्याह—अर्वागित्यादिना । अस्य परमेश्वरस्य विसर्जनेन हेतुना—अस्येति कर्तरि षष्ठी—अनेन परमेश्वरेण विसृष्टत्वात् देवाः ब्रह्मादयः अर्वाक् अर्वाचीनाः; अतो न तेषां स्वपूर्वतनपरिज्ञाने सामर्थ्यमित्यर्थः । अथैवं सति यत इदं आबभूव तं परमेश्वरं को वेद? न कोऽपीत्यर्थः । इदमेव परमेश्वरस्य

---

[1] तै. ब्रा. २-८-९

दुर्ज्ञानत्वं प्रपञ्चयति उत्तरो मन्त्रः—इयं विसृष्टिः यतः कारणादाबभूव यदि वा अथवा यः दधे जगद्धारयति यदि वा प्रलयकाले न दधे न स्थापयति तं को वेद? किं बहुना, ईश्वरोऽपि स्वमहिमानं परिच्छेत्तुं शक्नोति न वेति संशय इत्याह—अस्य परिदृश्यमानस्य जगतः योऽध्यक्षः अधिष्ठाता यः प्रवर्तकः परमेश्वरः परमे अविद्यातत्कार्येभ्यः परस्मिन् व्योमन् व्योम्नि स्वस्वरूपचिदाकाशे प्रतिष्ठितः सोपि स्वमहिमानं वेद जानाति यदि वा न वेद न जानाति, अपरिच्छिन्नस्वप्रकाशचिद्रूपस्य परिच्छेदाभावेनाविषयत्वेन च दुर्ज्ञानत्वात् सगुणस्वरूपस्य च गुणानामानन्त्येन तथात्वात् ईश्वरस्य सर्वज्ञत्वप्रसिद्धेश्च श्रुतेस्संशयः ईश्वरस्य स्वस्वरूपे इयत्तापरिज्ञानमस्ति न वेति। वयं तु निर्णयामो नास्तीति। कुतः? उभयस्याप्यानन्त्यादेव। न च तस्य सर्वज्ञत्वव्याहतिः, स्वस्वरूपे इयत्ताया असत्त्वात्। न हि शशविषाणाज्ञानेन तस्यासर्वज्ञत्वमिति एवमपि 'सर्वं खल्विदं ब्रह्म'[1] इत्यत्र श्रुतौ श्रुतिविद्भिः आचार्यैः कथंचित् सर्वाधिष्ठानत्वेन निरुक्तं यस्य पारमार्थिकं रूपं कथमित्याकांक्षायामाह—**तज्जादित्वादिति**। तत्र श्रुतौ 'तज्जलान्'[1] इति पदद्वयेन, यत इदं जगत् तज्जलान् ततो जायते लीयते च अनिति चेत्येवमर्थकेन, **अब्धितरङ्गाभं** समुद्रतरङ्गतुल्यमिदं कार्यजातं तज्जत्वात् तल्लत्वात् तदनत्वाच्च **अभिन्नं** ब्रह्मणो अभेदेन अलब्धसत्ताकं ततोऽनृतं, तदधिष्ठानभूतं वस्तुतो निष्प्रपञ्चसच्चिदानन्दाद्वयं ब्रह्मैव परमार्थमित्येवं निरूपितं तमीड इत्यर्थः ॥ २९ ॥

---

नन्वेवं ब्रह्मणो निखिलजगदधिष्ठानतया अद्वितीयत्वे तस्य प्रत्यगभिन्नत्वे च सर्वज्ञभगवत्कपिलादिस्मृत्यनवकाशप्रसङ्गः। तासु हि स्मृतिषु प्रधानादेः कारणत्वं जीवपरयोः जीवानां च परमार्थतो

---

[1] छा. ३-१४-१.

भेदः जगतः परमार्थत्वमित्येते अर्थाः प्रतिपाद्यन्ते । न च तासां स्मृतीनां निरवकाशत्वं युक्तमङ्गीकर्तुं, सर्वज्ञकपिलादिप्रणीतत्वात् इत्याशङ्क्य ' विरोधेऽनपेक्षं स्याद्सति ह्यनुमानम् '[1] इति सूत्रेण श्रुतिस्मृत्योः परस्परं विरोधे स्मृतेः प्रामाण्यं अनपेक्षं अनङ्गीकार्यं, असति विरोधे अनुमानं स्मृतिप्रमाणमिति जैमिनिना प्रतिपादितन्यायात् श्रुतिविरोधेन तासामप्रामाण्यस्येष्टत्वे स्थितेऽपि स्मृतिविरोधं शङ्कमानाय स्मृत्यन्तरविरोधोपन्यासेनैव उत्तरं दास्यामीति मन्वानो बह्वीनां स्मृतीनां 'यद्वै किञ्च मनुरवद्त्तद्भेषजम् '[2] इत्यादिश्रुत्यवगतमाहात्म्यसर्वज्ञमन्वादिप्रणीतानां जीवपराभेदजगन्मिथ्यात्वप्रतिपादिकानां उपनिषन्मूलकत्वेन बलवतीनां बहुलतरदृढतरानुकूलतर्कानुगृहीतानां अनवकाशदोषस्य प्राबल्यमभिप्रेत्य स्वतस्सिद्धसर्वज्ञश्रीभगवदीश्वरस्मृतावपि अद्वैतमेव परमार्थं निरूपितमित्याह—

**दृष्ट्वा गीतास्वक्षरतत्वं विधिनाऽजं**
**भक्त्या गुर्व्या लभ्य हृदिस्थं दृशिमात्रम् ।**
**ध्यात्वा तस्मिन्नस्म्यहमित्यत्र विदुर्यं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ २६ ॥**

गीतासु ' अक्षरं ब्रह्म परमम् '[3] इत्यादिषु **अजं अक्षरतत्त्वं** सर्वव्यापकब्रह्मरूपं **विधिना** ' तद्विद्धि प्रणिपातेन '[4] इत्युक्तेन **दृष्ट्वा** आचार्येभ्यो ज्ञात्वा **गुर्व्या** महत्या **भक्त्या** अन्वयव्यतिरेकाभ्यां आत्मानात्मविषयाभ्यां त्वंपदार्थशोधनरूपा या भक्तिः भजनं तया **अहमस्मि** **अत्र** वेद्यानात्मांशप्रहाणेन **दृशिमात्रं** चैतन्यमात्रं **हृदिस्थं** बुद्धौ साक्षित्वेन स्थितं आत्मत्वेनोपलभ्य तयोश्च दृश्यक्षरयोः एकलक्षणत्वेन ऐक्यं **ध्यात्वा** ज्ञात्वा

[1] मी. सू. १-३-३. [2] तै. सं. २-२-१०. [3] गी. ८-३. [4] गी ४-३४.

अत्रानुभूयमानप्रत्यगभिन्ने तस्मिन् अक्षरे अहमित्यस्मीत्यभेददर्शनेन यं विदुः तमित्यर्थः ।

ये त्वक्षरमनिर्देश्यं अव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥[1]
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥[2]
ज्ञेयं यत्तत् प्रवक्ष्यामि यत् ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥[3]

इत्यादौ आऽध्यायपरिसमाप्तेः—

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥[4]

इत्यादौ सर्वत्र गीतासु ब्रह्मणोऽसङ्गत्वाद्वितीयत्वप्रत्यगभिन्नत्वादिकं सम्यक्प्रतिपादितमिति भावः ॥ २६ ॥

———

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
तरतमतश्चकास्त्यनलवत्स्वकृतानुकृतिः ।
अथ वितथास्वमूष्ववितथं तव धाम समं
विरजधियोऽन्वयन्त्यभिविपन्यव एकरसम् ॥

एकस्त्वमात्मा पुरुषः पुराणः
सत्यः स्वयंज्योतिरनन्त आद्यः ।
नित्योऽक्षरोऽजस्रसुखो निरञ्जनः
पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः ॥

तस्मादिदं जगदशेषमसत्स्वरूपं
स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ।
त्वय्येव नित्यसुखबोधतनावनन्ते
मायात उद्यदपि यत्सदिवावभाति ॥

[1]गी. १२-३. [2]गी. १३-३. [3]गी. १३-१२. [4]गी. १८-२०.

न स जीवश्शिवादन्यो यो भुङ्क्ते कर्मणां फलम् ।
भेदाभावाच्च तच्चैत्यं न कर्मफलमर्हति ।
अतस्सर्वजगत्साक्षी चिद्रूपः परमेश्वरः ॥
अद्वितीयो महानन्दः क्रीडया भोगमर्हति ।
जीवरूप इव स्थित्वा यः क्रीडति पुरत्रये ॥
न स जीवस्सदा शम्भुः सत्यमेव न संशयः ॥
स सत्योऽसत्यसाक्षित्वात्सदा सच्चित्सुखं तथा ।
प्रेमास्पदत्वादद्वैतो भेदाभावात्सुरर्षभाः ॥

इत्यादौ सर्वत्र शिवविष्णुपुराणेष्वपि अद्वैतो विष्णुः प्रत्यगभिन्नः प्रतिपाद्यत इत्यभिप्रेत्याह—

**क्षेत्रज्ञत्वं प्राप्य विभुः पञ्चमुखैर्यो**
**भुङ्क्तेऽजस्रं भोग्यपदार्थान् प्रकृतिस्थः ।**
**क्षेत्रेक्षेत्रेऽप्स्विन्दुवदेको बहुधाऽऽस्ते**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ २७ ॥**

**यो विभुः** परमात्मा **प्रकृतिस्थः** अविद्यातत्कार्येषु प्रतिबिम्बिततया **क्षेत्रज्ञत्वं** जीवभावं **प्राप्य** गत्वा **पञ्चमुखैः** पञ्चभिः मुखैः विषयभोगद्वारभूतैः इन्द्रियैः **भोग्यपदार्थान्** शब्दादीन् **अजस्रं** सदा **भुङ्क्ते** उपलभते यश्च **क्षेत्रक्षेत्रे** प्रत्यन्तःकरणाद्युपाधिषु **बहुधा** **अप्सु** अनेकपात्रस्थितासु **इन्दुवत्** चन्द्रवत् **आस्ते** वर्तते **तमीड** इत्यर्थः । तदुक्तं—

एक एव हि भूतात्मा भूतेभूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥[1]

इति । उक्तोऽस्यार्थः ॥ २७ ॥

---

[1] ब्रह्मबिन्दु.

ननु सर्वे वादिनः द्वैतमेव परमार्थमवलम्बन्ते, युक्तिभिश्च बह्वीभिः तदेवोपपादयन्ति, तथैव सर्वैरनुभूयते च, श्रुतिमपि द्वैतानुगुण्येनैव योजयन्ति । भवानेक एव तु अद्वैतं परमार्थं ब्रूते । अतो बहुप्रतिपक्षत्वात् त्वत्पक्षे कथं विश्वासः स्यात् इत्याशङ्कच न वादिबहुत्वैकत्वं वस्तुनिर्णये प्रयोजकं, किंतु प्रमाणयुक्तिबाहुल्यमेव । न हि अन्धानां सहस्रं चक्षुष्मत एकस्य रूपविषये प्रतिवादी भवितुमर्हति । प्रमाणयुक्तिबाहुल्यं च अस्मत्पक्ष एव । इतरत्र च प्रमाणयुक्त्याभासबाहुल्यम् । तच्च सर्वज्ञभगवद्बादरायणप्रणीतब्रह्मसूत्रपर्यालोचनेन अतिस्फुटं ज्ञातुं शक्यत इत्यभिप्रेत्याह—

**युक्त्याऽऽलोड्य व्यासवचांस्यत्र हि लभ्यः**
**क्षेत्रक्षेत्रज्ञान्तरविद्भिः पुरुषाख्यः ।**
**योऽहं सोऽसौ सोऽस्म्यहमेवेति विदुर्यं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ २८ ॥**

**व्यासवचांसि** 'अथातो ब्रह्मजिज्ञासा' इत्यादीनि 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' इत्यन्तानि ब्रह्मसूत्राणि तत्तच्छ्रुतिमूलानि **आलोड्य** सम्यग्विचार्य **युक्त्या** तर्केण—उपलक्षणमेतत्—प्रमाणेन चाबाधितेन **क्षेत्रक्षेत्रज्ञान्तरविद्भिः** क्षेत्राणां देहाद्यहंकारपर्यन्तानां आन्तराणां पृथिव्याद्यव्याकृतान्तानां बाह्यानां च क्षेत्रक्षेत्रज्ञयोः जीवेश्वररूपयोश्च विवेकं ये विदन्ति तैः तत्तदुपाधिनिराकरणेन शोधितपदार्थद्वयविद्भिरित्यर्थः । **पुरुषाख्यः** त्रिविधपरिच्छेदशून्यतया पूर्णत्वेन पुरुष इत्याख्या यस्य सः परमात्मा **अत्र हि** अत्रैव देहेन्द्रियसङ्घाते तत्साक्षी प्रत्यक्त्वेन **लभ्यः** विद्यया प्राप्तुं शक्यः । तद्वेदनप्रकारमाह—**योऽहमित्यादिना** । योऽहं देहे-

न्द्रियादिसाक्षी सोऽसौ परमेश्वरोऽस्मीति यश्च परमेश्वरः सोऽस्म्यह-मेवेति **यं विदुः** प्रत्यगात्मनो भ्रान्तिसिद्धाब्रह्मत्वव्यावृत्तये ब्रह्म-णश्च आरोपितपरोक्षत्वनिवृत्तये च परस्परव्यतिहारेण यं विदुरित्यर्थः, 'तत्त्वमेव त्वमेव तत्'[1] इत्यादिश्रुतेः । अयं भावः—सूत्रकारो हि भगवान् बादरायणः—'अथातो ब्रह्मजिज्ञासा' इति त्रिविधपरि-च्छेदशून्यप्रत्यगभिन्नब्रह्मणो मुमुक्षुपुरुषविचार्यत्वं प्रतिज्ञाय जिज्ञास्य-ब्रह्मणः किं लक्षणं किं प्रमाणमित्याकांक्षायां 'जन्माद्यस्य यतः' इति सूत्रेण लक्षणं 'शास्त्रयोनित्वात्' इति सूत्रेण प्रमाणं चोपन्यस्य शास्त्रस्य कार्यपरत्वेन कथं सिद्धब्रह्मपरत्व-मित्याकांक्षायां 'तत्तु समन्वयात्' इति चतुर्थसूत्रेण कार्यपरत्व-निरासपूर्वकं सिद्धब्रह्मपरत्वं बहुविधानेकन्यायैरुपपाद्य पश्चात् 'ई-क्षतेर्नाशब्दम्' इत्यधिकरणेन जगतः प्रधानकारणकत्वं दूरीकृत्य ब्रह्मण्येव सर्वेषां वेदान्तानां गतिसामान्यं च प्रतिज्ञाय तदेव गतिसामान्यं 'आनन्दमयोऽभ्यासात्' इत्यारभ्य प्रथमद्वितीयतृतीय-पादैः अन्यार्थत्वशङ्कानिरसनपूर्वकमुपपाद्य चतुर्थपादे कैश्चिदधिकरणैः प्रधानस्याशब्दत्वं प्रपञ्च्य प्रमाणोपन्यासानन्तरं तच्च ब्रह्म प्रकृ-तित्वेन जगतो निमित्तत्वेन च 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुप-रोधात्' इत्यधिकरणे व्यवस्थाप्य प्रथमाध्यायं समापयामास । अनन्तरं द्वितीयाध्याये प्रथमपादेन स्वपक्षे सांख्ययोगवैशेषिकादि-स्मृतिविरोधं परिहृत्य तैरुद्भावितसकलतर्कविरोधं अद्वैतसमन्वयस्य सम्यक्परिजहार । तदनु द्वितीयपादेन साङ्ख्यवैशेषिकनैयायिकबौद्ध-त्र्यक्षपणकपाञ्चरात्रादिपक्षाणां बहुलतरासारतरयुक्त्याभासकल्पितत्वं स्फुटं कैश्चिदधिकरणैः प्रदर्श्य तटस्थेश्वरं च प्रमाणयुक्तिशून्य-तया प्रतिचिक्षेप । ततः तृतीयपादेन भूतभोक्तृश्रुतीनां चतुर्थेन लिङ्गदेहश्रुतीनां च परस्परविरोधं सम्यगपाचकार । एवं द्वितीया-

[1] छै.

ध्यायेन अद्वयसमन्वयविरोधं प्रतिचिक्षेप । तृतीयाध्याये प्रथमपादेन संसारिण इहामुत्र च गत्यागतिनिरूपणपूर्वकं संसारदोषविवेचनेन वैराग्यमधिकारिविशेषणं दृढीकृत्य तदनु द्वितीयपादेन वाक्यार्थज्ञानाङ्गत्वेन जाग्रदाद्यवस्थाभ्यो विविच्य त्वंपदार्थं प्रदर्श्य तत्पदार्थमपि सकलद्वैतप्रपञ्चनिरासपूर्वकं विविच्य प्रदर्शयामास । ततः तृतीयपादेन विद्याभेदाभेदाभ्यां गुणोपसंहारानुपसंहारौ प्रदर्शयन् विधिरूपावान्तरवाक्यस्य निषेधरूपावान्तरवाक्यस्य च परिमाणन्यायेन अविरोधं प्रदर्श्य ततः चतुर्थपादेन 'पुरुषार्थोऽतश्शब्दादिति बादरायणः' इति प्रथमाधिकरणेन ब्रह्मज्ञानस्य कर्मनिरपेक्षस्यैव मोक्षसाधनत्वं प्रसाध्य तस्य चोत्पत्तौ अन्तरङ्गसाधनं संन्यासशान्त्यादिकं बहिरङ्गसाधनं यज्ञादिकं च प्रदर्श्य ज्ञानसाधनमनुतिष्ठतश्च असति प्रतिबन्धे इहैव फलं सति च तस्मिन्नमुत्र च इत्यन्तिमाधिकरणेनोक्त्वा तृतीयाध्यायं समापयामास । ततः चतुर्थाध्याये प्रथमपादे 'आवृत्तिरसकृदुपदेशात्' इत्यधिकरणेन ब्रह्मसाक्षात्कारपर्यन्तं श्रवणाद्यावृत्तिं कर्तव्यतया प्रदर्श्य 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इत्यधिकरणेन वाक्यार्थं च जीवब्रह्माभेदं सम्यक्प्रदर्श्य ततः सगुणोपासकस्य क्रममुक्तिमभिधाय द्वितीयपादेन पुनस्तस्यैव उत्क्रान्तिप्रकारमुपवर्ण्य तदनु तृतीयेन उत्तर मार्गचिन्तापूर्वकं तस्यैव कार्यब्रह्मप्राप्तिं प्रदर्श्य निर्गुणब्रह्मविदश्च गत्युत्क्रान्ती प्रतिषिध्य ततः चतुर्थेन निर्गुणविद्याफलं ब्रह्मात्मनाऽवस्थानमुपवर्ण्य सगुणविद्याफलं च ब्रह्मलोके ऐश्वर्यमुपपाद्य तेषां सगुणविदुषां अन्ते 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' इति ब्रह्मोपदेशेन मुक्तिं प्रदर्श्य उपरराम । इत्थं सर्वज्ञबादरायणप्रणीतायां चातुर्लक्षण्यां मीमांसायां परिशीलितायां भेदवादिशुनां भषितैः अद्वैतकनकाचलस्य न काऽपि क्षतिरिति ॥ २८ ॥

ननु किमयमधिकारी स्वदेहेन्द्रियादिसाक्षिचैतन्यस्यैव ब्रह्मत्वं जानीयात्? उत सर्वशरीरादिसाक्षिणामपि? आद्ये किं पुरुषान्तरचैतन्यं परमार्थमिति जानाति? उत कल्पितमिति? नाद्यः, द्वैतप्रसङ्गात्; न द्वितीयः, तद्दृष्टान्तेन स्वस्यापि कल्पितत्वप्रसङ्गात्; यदि द्वितीयः, न तदोक्तदोषद्वयम्; किं तु स्वस्य ब्रह्मत्वज्ञानेन संसारनिवृत्तिवत् अन्येषामपि स्वज्ञानकाले तन्निवृत्तिप्रसङ्ग इत्याशङ्क्य स्वसाक्षिचैतन्यवत् पुरुषान्तरचैतन्यस्यापि ब्रह्मत्वं जानातीति द्वितीयं पक्षमवलम्ब्याह—

**एकीकृत्यानेकशरीरस्थमिमं ज्ञं**
**यं विज्ञायेहैव स एवाशु भवन्ति ।**
**यस्मिन् लीना नेह पुनर्जन्म लभन्ते**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ २९ ॥**

**अनेकशरीरस्थं** अनेकेषु शरीरेषु देवतिर्यगादिषु साक्षितया स्थितं **इमं ज्ञं** चैतन्यं **एकीकृत्य** परमात्माभिन्नतया ज्ञात्वा ततः सर्वात्मभूतं **यं** परमात्मानं **विज्ञाय** देहेन्द्रियादिसाक्षिप्रत्यगभिन्नतया अपरोक्षीकृत्य **इहैव** अस्मिन्नेव देहे **आशु** तत्काल एव **स एव** सर्वात्मभूतपरमात्मैव **भवन्ती**त्यर्थः । अत्र च श्रुतिः—

यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।
सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥[1]

'ब्रह्म वेद ब्रह्मैव भवति'[2] इति 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्'[3] इति । अत्र हि मन्त्रे श्रोतुः प्रत्यगात्मानमनूद्य ब्रह्मादिस्तम्बपर्यन्तप्रत्यग्भूतसकलजगदधिष्ठानब्रह्मत्वं बोध्यते । न च

---

[1]कै. [2]मुण्ड. ३-२-९. [3]बृह. १-४-१०.

सर्वेषां प्रतीचां ब्रह्मत्वज्ञाने स्वस्मिन्निव परेष्वपि संसारनिवृत्तिप्रसङ्गदोषः;—किं ब्रह्मविद्दृष्ट्या तन्निवृत्तिरापाद्यते ? उत परदृष्ट्या ? नान्त्यः परेषां स्वात्मनो ब्रह्मत्वज्ञानाभावेन तद्दृष्ट्या न तेषु संसारनिवृत्तिः । ब्रह्मविद्दृष्ट्या संसारनिवृत्तिस्त्विष्टैव । यदा ब्रह्मवित् स्वदेहेन्द्रियादिसाक्षिणं असङ्गनिर्विकारासंसारिब्रह्मत्वेन पश्यति तदा परदेहेन्द्रियादिसाक्षिणमपि तथैव पश्यति । तदुक्तं ब्रह्मगीतायां—

स्वशरीरेऽन्यदेहेषु समं निश्चित्य तद्दृढम् ।
तथाकारा न जायन्ते ह्यमृताश्च भवन्ति हि ॥

बद्धो मुक्तो महान् विद्वानज्ञ इत्यादिभेदतः ।
एक एव सदा भाति चेतनः स्वप्नवत्स्वयम् ॥

अतस्स्वमुक्त्या चान्येषामाभासानामपि ध्रुवम् ।
मुक्तिं जानाति हे देवा आत्मनामात्मविद्वरः ॥

संसारस्य दशायां तु स्वभ्रान्त्या सर्वदेहिनाम् ।
आभासानां च संसारं वेद मुक्तिं तथैव च ॥

इति । अतो ब्रह्मादिस्तम्बपर्यन्तं प्रत्यग्भूतं सर्वाधिष्ठानब्रह्मात्मत्वेन जानतः पुरुषस्य स्वदेहे परदेहे वा न संसार इति भावः । ननु ब्रह्मज्ञानान्निवृत्तस्यापि संसारस्य कदाचित् पुनरुद्भवस्स्यात् सुषुप्तिप्रळययोर्निवृत्तस्य प्रबोधे पुनरुद्भवदर्शनादित्याशङ्कयाह—**यस्मिन्नित्यादिना** । **यस्मिन्** ब्रह्मणि **लीना** उपाधिपरित्यागेन एकीभूताः इह संसारे **पुनः जन्म न लभन्ते** न प्राप्नुवन्ति तमित्यर्थः, 'न स पुनरावर्तते'[1] इत्यादिश्रुतेः । सुषुप्त्यादौ संसारकारणाज्ञानानिवृत्तेः अत्र च तत्त्वज्ञानेन तन्निवृत्तेः दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः ॥ २९ ॥

---

[1] छा. ८-१५-१.

बृहदारण्यके चतुर्थाध्याये मधुब्राह्मणे एवं श्रूयते—'इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्, इमा आपः, अयमग्निः, अयं वायुः, अयमादित्यः' इत्येवं बहवः पर्यायाः श्रूयन्ते। तत्र प्रथमपर्यायस्यायमर्थः—इयं महापृथिवी सर्वेषां प्राणिनां मधु मधुवदुपभोग्यं यथा मक्षिकाणां एकं मधुपटलं तद्वत्। तथा अस्यै पृथिव्यै अस्याः पृथिव्याः सर्वाणि भूतानि मधु। अनेन पृथिव्या भूतानां च परस्परभोग्यत्वेन परस्परकार्यकारणत्वमुक्तं, ततस्तदुभयं मिथ्येत्यर्थः। तदुभयोपहितपुरुषस्य एकत्वमाह—यश्चेत्यादिना। यश्चायमस्यां पृथिव्यां तेजोमयः चैतन्यप्रकाशरूपः: अमृतमयः उपाधिनाशेपि स्वयममरणधर्मा पुरुषः यश्चायमध्यात्मं शारीरः स्थूलशरीरोपाधिकः तेजोमयोऽमृतमयः पुरुषः अयमेव सः पृथिव्याद्युपाधिकः पुरुषः। अयंशब्दार्थमाह—योऽयमात्मेति। आत्मा स्थूलशरीरोपाधिकः। अध्यात्माधिदैवतोपाधिभेदादेवानयोर्भेदः न स्वरूपत इत्यर्थः। इदमुपाधिद्वयोपहितचैतन्यं अमृतं अविनाशि। तत इदं ब्रह्म जगत्कारणभूतम्। अतः तदुपाधिद्वयोपहितचैतन्यमेव सर्वं सकलं जगत्, न तद्व्यतिरेकेण सर्वमस्तीत्यर्थः। एवं सर्वेषु पर्यायेषु द्रष्टव्यम्। अप्पर्याये तु अम्बुरेतउपहितयोरेकत्वं, ततः अग्निवागुपहितयोः, ततस्सूर्यचक्षुरुपहितयोः। सवं सर्वत्र पर्यायेषु अध्यात्माधिदैवतोपहितद्वन्द्वानामेकत्वकथनपूर्वकं यत्सर्वात्मकं ब्रह्म प्रतिपादितं तं विष्णुमिदानीं स्तौति—

**द्वन्द्वैकत्वं यच्च मधुब्राह्मणवाक्यैः**

**कृत्वा शक्रोपासनमासाद्य विभूत्या।**

---

[1] बृह. ४-५-१.

**योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्यं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ३० ॥**

**मधुब्राह्मणवाक्यैः** 'यश्चायमस्याम्'[1] इत्यादिभिः प्रतिपर्यायं अध्यात्माधिदैवतं **यद्द्वन्द्वैकत्वं** उक्तं द्वन्द्वानां पृथिवीशरीराग्निवागाद्युपहितानां यदैक्यं कथितं तत् **कृत्वा** गृहीत्वा तद्ग्रहणप्रयुक्तया **विभूत्या** ईश्वरभावप्रतिपत्त्या **शक्रोपासनं** शक्रेण इन्द्रेण स्वस्योपासनं **आसाद्य** प्राप्य 'यस्त्वेवं ब्राह्मणो विद्यात् । तस्य देवा असन्वशे'[2] —असन्नित्यस्य आसन्नित्यर्थः—इति श्रुत्युक्तदेवपशुत्वव्यावृत्त्या ईश्वराभेदेन देवैरुपास्यत्वं प्राप्येत्यर्थः । **योऽसौ** सर्वात्मा परमेश्वरः **सोऽहं** योऽहं बुद्ध्यादिसाक्षी **सोहमस्मि** परमेश्वर इति परस्परव्यतिहारेण यं परमेश्वरं **विदुः** साक्षादनुभवन्ति तमीडे इत्यर्थः । शक्रोपासनमासाद्य यं विदुरिति प्रयोगो मुखं व्यादाय स्वपितीति वद्द्रष्टव्यः ॥ ३० ॥

---

'तद्योऽहं सोऽसौ योऽसौ सोऽहं त्वं वाऽहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते'[3] इत्यादिश्रुतिभिः परस्परव्यतिहारेणोपास्यत्वेन प्रतिपादितं विष्णुं स्तौति—

**योऽयं देहे चेष्टयिताऽन्तःकरणस्थः**
**सूर्ये चासौ तापयिता सोऽस्म्यहमेव ।**
**इत्यात्मैक्योपासनया यं विदुरीशं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ३१ ॥**

---

[1]बृह. ४-५-१. [2]तै. आ. ३-१३. [3]

**यो देहे** शरीरे **चेष्टयिता** चेष्टाहेतुः वर्तते जडदेहे चेष्टा-लिङ्गगम्यो यः तद्धेतुत्वेन चेतनो वर्तते । असङ्गस्य तस्य चेष्टाहेतु-त्वमुपपादयति—**अन्तःकरणस्थ इति** । अन्तःकरणोपाधिक इत्यर्थः । **असौ** अन्तःकरणोपाधिक एव **सूर्ये च तापयिता** तपतस्सूर्यस्य प्रयोजककर्तृत्वेन अन्तर्यामी भवति । यश्च सूर्ये तापयिता सोऽह-मेवास्मीत्यनेन प्रकारेण आत्मैक्योपासनया परस्परव्यतिहारेणात्मै-क्यचिन्तनेन **यं ईशं विदुः तमीडे** इत्यर्थः ॥ ३१ ॥

———

उपास्यत्वाभिधानेन वेद्यत्वाशङ्का प्राप्ता, तामपाकरोति—

**विज्ञानांशो यस्य सतः शक्त्यधिरूढो**
**बुद्धेर्बुध्यत्यत्र बहिर्बोध्यपदार्थान् ।**
**नैवान्तस्स्थं बुध्यति यं बोधयितारं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ३२ ॥**

**सतः** परमार्थसद्रूपस्य **यस्य** परमेश्वरस्य **विज्ञानांशः** विज्ञानस्य स्वरूपज्ञानस्य अंश इवांशः ब्रह्मणो निरवयवत्वात् **शक्त्यधिरूढो** ब्रह्मणः अविद्याशक्तिप्रतिबिम्बितो जीवः **बहिः** —उपलक्षणं—अन्तश्च **बोध्यपदार्थान्** बुद्धिधर्मान् घटपटादींश्च **अत्र** जगति **बुध्यति** जानाति **बुद्धेस्तु अन्तस्स्थं** स्वस्यान्तर्वर्तमानं **बोधयितारं** बाह्यपदार्थबोद्ध्र्याः स्वस्या बोद्धृत्वप्रदातारं—चैतन्य-संबन्धं विना जडायाः स्वस्या बोद्धृत्वानुपपत्तेः—**यं** स्वप्रकाश-चिद्रूपं **न बुध्यति** न जानाति तमित्यर्थः । अत्र श्रुतिः— ‘विज्ञातारमरे केन विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयात्’ ‘न विज्ञातेर्विज्ञातारं विजानीयाः’ इत्यादि ।

अस्याश्चायमर्थः—अरे मैत्रेयि! विज्ञातारं बाह्याभ्यन्तरपदार्थानां स्वप्रकाशचिदात्मस्वरूपेणैव भासयितारं केन करणेन विजानीयात् पुरुषः, करणस्य मनआदेर्ज्ञेयविषयत्वेन ज्ञातृविषयत्वाभावादित्यर्थः। करणस्यापि स्वतो विज्ञातृत्वं नास्ति, किंतु चैतन्यबलेनैवेत्याह—येनेत्यादिना। इदं सर्वं जगत् येन बुद्ध्याद्यारूढचैतन्येन विजानाति पुरुषः तं केन विजानीयात् न केनापीत्यर्थः। विज्ञातेः बुद्धेः विज्ञातारं बोद्धारं न विजानीयाः विज्ञानेन न विषयीकुर्या इत्युषस्तिं प्रति याज्ञवल्क्यवचनं, पूर्ववाक्यं मैत्रेयीं प्रति तस्यैवेति। 'दृश्यते त्वग्र्यया बुद्ध्या' इत्यादेस्तु एतच्छ्रुत्यविरुद्धोऽर्थः पूर्वमुक्त एव द्रष्टव्यः। उपास्यत्वमप्यात्मनः तादृशवृत्तिप्रवाहव्याप्यत्वमेव, न तु तत्प्रतिबिम्बितचैतन्यविषयत्वमिति द्रष्टव्यम् ॥३२॥

---

न केवलमुक्तश्रुत्यैवात्मनो ज्ञातृत्वसिद्धिः, किं तु श्रुत्यनुकूलतर्कतोऽपि, ज्ञेयस्य घटपटादिवदनात्मत्वेन ज्ञातृत्वायोगात् तत्सिद्ध्यतीत्याह—

**कोऽयं देहे देव इतीत्थं सुविचार्य**
**ज्ञाता श्रोता मन्तयिता चैष हि देवः।**
**इत्यालोच्य ज्ञांश इहास्मीति विदुर्यं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥३३॥**

देहे कार्यकरणसङ्घातमध्ये **कोऽयं देवः** को वा ज्ञाता? किं शरीरं उत इन्द्रियाणि अथवा प्राणः यद्वा अन्तःकरणं **इतीत्थं** अनेन प्रकारेण **सुविचार्य** सुष्ठु सम्यग्विचार्य देहादीनां वेद्यत्वेन घटवत् ज्ञातृत्वाभावं निश्चित्य **एषः** अपरोक्षतया नित्यं

भासमानो देवः स्वप्रकाशचिद्धातुरेव **ज्ञाता श्रोता मन्तयिता च इत्यालोच्य** आलोचनेन ज्ञात्वा इह एषु देहादिषु मध्ये **ज्ञांशः** चैतन्यांशः **अस्मीति यं विदुः** तमित्यर्थः । 'अदृष्टो द्रष्टाऽश्रुतश्श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता '[1] इत्यादिश्रुत्या स्वयं दर्शनाद्यविषयस्यैव द्रष्टृत्वाद्युपपादनादिति भावः ॥ ३३ ॥

---

'को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति '[2] इति तैत्तिरीयकश्रुतिः । अस्यायमर्थः—यत् यदि एष आकाश आ समंतात्काशत इति आकाशः चैतन्यं, यद्वा—आकाशवदसङ्गत्वविभुत्वादिधर्मयोगादाकाशः चिद्धातुः आनन्दः सुखरूप आत्मा न स्यात् तदा को हि पुरुष अन्यात् अननं कुर्यात् प्राण्यात् प्राणनव्यापारं कुर्यात्—उपलक्षणमेतत्—सकलकार्यकरणव्यापारं कः कुर्यादित्यर्थः । रथाद्यचेतनप्रवृत्तेश्च तदधिष्ठातृचेतननिबन्धनत्वदर्शनात् जीवनस्य च आनन्दपूर्वकत्वदर्शनात् दुःखे सति देहस्य प्राणादिवियोगादेरेव दृष्टेरिति भावः । तदेवाह—एष ह्येव आकाश एव हि यस्मात् आनन्दयाति आनन्दयति अतः सर्वो जनः प्राणिति च अपानिति च । यदि प्राणिनां कदाचित् स्वरूपानन्दोऽभिव्यक्तो न स्यात् अतिदुस्सहसंसारदुःखं सोढ्वाऽपि जीवनप्रार्थना न स्यात्, तदाशयैव जीवनमाशास्ते सर्वो जन इत्यनया श्रुत्याऽपि चेष्टाजीवनहेतुत्वेन चिद्रूपानन्दात्मा साध्यत इत्याह—

**को ह्येवान्यादात्मनि न स्यादयमेषः**
**ह्येवानन्दः प्राणिति चापानिति चेति ।**
**इत्यस्तित्वं वक्त्युपपत्त्या श्रुतिरेषा**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ३४ ॥**

---

[1] बृह. ५-७-२३.

[2] तै. २-७.

**आत्मनि** कार्यकरणसङ्घाते **अयं** चिद्रूपानन्द आत्मा यदि **न स्यात्** तर्हि **को ह्येव** पुरुषः **अन्यात्** प्राणनादिव्यापारं कुर्यात्, जडप्रवृत्तेः चेतनपूर्वकत्वात् जीवनस्यानन्दहेतुत्वाच्चेत्यर्थः। अतः **एष ह्येवानन्दः** परमात्मा जीवभावमापन्नः **प्राणिति च अपानिति च**। इति एवं हेतुत्वेन यस्य **अस्तित्वं उपपत्त्या एषा** तैत्तिरीयकश्रुतिः **वक्ति** तमित्यर्थः॥ ३४॥

---

ऐतरेयश्रुतिर्भवति—'आत्मा वा इदमेक एवाग्र आसीत्'[1] इत्यद्वितीयं ब्रह्मोपक्रम्य तस्याद्वितीयत्वसिद्धये 'स ईक्षत' इत्यादिना ईक्षणपूर्वकतयैव लोकसृष्टिमुक्त्वा ततः 'स ईक्षतेमान्' इत्यादिना कार्यकरणदेवतानां सृष्टिमुक्त्वा ततो वैराग्यार्थं तासां देवतानां अशनायापिपासादिमत्संसारार्णवपतनं दर्शयित्वा ततोऽशनायादिनिवृत्तये 'अन्नमेभ्यस्सृजे' इत्यादिना अन्नसृष्टिमुक्त्वा तदनु विचार्य अपानस्यैव तदन्नं प्रति भोक्तृत्वं प्रदर्श्य सृष्टानां तेषां कार्यकरणदेवतानां ईश्वरप्रवेशं विना स्वस्वकार्ये असमर्थत्वेन मूर्धसीमाविदारणेन ईश्वरस्यात्र प्रवेशमुक्त्वा पुनस्तत्र प्रविश्य तादात्म्याभिमानेन संसारवतो जीवरूपमापन्नस्य परमेश्वरस्य अनन्तपूर्वजन्मकृतपुण्यपुञ्जपरिपाकवशात् विविदिषायां सत्यां 'यदि वाचाऽभिव्याहृतम्' इत्यादिना वागादीनामात्मत्वनिराकरणपूर्वकं 'अथ कोऽहम्' इत्यात्मविचारमुपक्रम्य 'तस्य त्रय आवसथास्त्रयस्स्वप्नाः' इत्यवस्थात्रयस्य मिथ्यात्वमुक्त्वा 'स एतमेव पुरुषम्' इत्यनेन वागादिभ्योऽवस्थात्रयाच्च विविक्तं तत्सकलसाक्षिणं चिन्मात्रमादाय 'ब्रह्म ततमपश्यत्' इति तस्य ब्रह्मत्वबोधनं जीवस्योक्त्वा पुनश्च एतमेवार्थं 'पुरुषे ह वा अयमादितो गर्भो भवति' इत्यादिना वैराग्योपपादनपूर्वकं 'कोऽयमात्मेति वयमुपा-

---

[1] ऐतरेयोपनिषत्.

स्महे "[1] इति वाक्येन मूर्धप्रपदनद्वारा प्रविष्टयोः जीवप्राणयोः चित्क्रियाशक्त्यात्मकयोः मध्ये 'कतरस्स आत्मा' इति विमृश्य 'येन वा पश्यति' इत्यादिना चैतन्यस्यैव त्वंपदार्थत्वं निर्धार्य ततः 'एष ब्रह्म' इत्यादिना सर्वात्मकं तत्पदार्थं ब्रह्मोपदिश्य 'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' इति तयोरैक्यमुक्त्वा प्रपञ्चयामास। इत्थमैतरेयश्रुत्या विचारपूर्वकं संग्रहविस्तराभ्यां प्रतिपादितं विष्णुं स्तौति श्लोकद्वयेन—

**प्राणो वाऽहं वाक्छ्रवणादीनि मनो वा**
**बुद्धिर्वाऽहं व्यस्त उताथापि समस्तः ।**
**इत्यालोच्य ज्ञप्तिरिहास्मीति विदुर्यं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ३५ ॥**

बुभुक्षितः पिपासितोऽहं वच्मि शृणोमि पश्यामि मन्ये बुद्ध्ये इत्याद्यनुभवात् प्राणादीति प्रत्येकं अहं, तत्समुदायो वा? उत एतत्सकलसाक्षी? इत्यालोच्य प्राणादिभिन्ना तत्साक्षिणी ज्ञप्तिरेवास्मीति यं विदुः तमित्यर्थः ॥ ३५ ॥

---

ननु प्राणादिष्वपि अहमित्यात्मत्वानुभवात् कथं चैतन्यस्यैवात्मत्वमित्याशङ्क्याह—

**नाहं प्राणो नैव शरीरं न मनोऽहं**
**नाहं बुद्धिर्नाहमहङ्कारधियौ च ।**
**योऽत्र ज्ञांशस्सोऽस्म्यहमेवेति विदुर्यं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ३६ ॥**

---

[1] ऐत. २.

अत्र धीशब्देन चित्तमुच्यते। प्राणादि चित्तपर्यन्तं अनात्मा, दृश्यत्वात् भौतिकत्वात् सावयवत्वात् ममेदंबुद्धिविषयत्वात् सुषुप्त्यादावात्मनि सत्यपि तेषामदर्शनात् उपचयापचयादिधर्मवत्त्वाच्च, घटादिवत्। किंतु योऽत्र दृश्यत्वादिधर्मरहितः प्राणादिसकलसाक्षी तेषु व्यभिचरत्सु स्वयमव्यभिचारी चिद्धातुः स एवाहमस्मि। वच्मीत्यादिप्रतीतिस्तु रक्तस्फटिक इतिवत् भ्रान्त्याऽप्युपपद्यत इति। यं विदुः तमित्यर्थः॥ ३६॥

---

तथा भगवती छान्दोग्यश्रुतिश्च उद्दालकश्वेतकेतुसंवादमुखेन 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्'[1] इति एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदेव 'कथं नु भगवः स आदेशो भवति' इत्याशङ्कापूर्वकं 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिना दृष्टान्तैरुपपाद्य ततो दार्ष्टान्तिकं प्रपञ्चयितुं 'सदेव सोम्येदमग्र असीदेकमेवाद्वितीयम्' इति सजातीयविजातीयस्वगतभेदशून्यं सद्वस्तूपक्रम्य 'तद्धैक आहुः' इत्यसद्वादमाशङ्क्य 'कथमसतस्सज्जायेत' इति तत्प्रतिषिध्य सद्रूपस्य ब्रह्मणो जडविजातीयभेदाभावमुपपादयितुं 'तदैक्षत बहु स्यां प्रजायेय' इत्यादिना वियदादेः सर्वस्य जडस्य तत एव सृष्टिमुक्त्वा सजातीयभेदनिराकरणाय तस्यैव जीवरूपेण प्रवेशं चाभिधाय त्रिवृत्करणपूर्वकं नामरूपसृष्टिं चोक्त्वा ततो ब्रह्मणः स्वकार्याकाशादितो भेदव्यावृत्तये 'यदग्ने रोहितं रूपम्' इत्यादिना वियदादेः सर्वस्य जगतो मिथ्यात्वमुक्त्वा ततो देहवाक्प्राणमनसामन्नादिकार्यत्वेन अनात्मत्वमुक्त्वा 'स य एषोणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' इत्यादिना श्वेतकेतुं

---

[1] छा. ६.

द्वारीकृत्य मुमुक्षूणा जीवानामात्मत्वेन सदद्वितीयं अतिसूक्ष्मं सर्वात्मकं परमार्थसत्यं ब्रह्म तत्तदाशङ्कानिराकरणपूर्वकं नवकृत्वः पुनःपुनरुपदिदेश । तथा हि—'प्रयतो वाङ्मनसि'[1] इत्यादिना सुषुप्त्युत्क्रान्त्याद्यवस्थासु येन रूपेण जीवः संपद्यते तत्स्वरूपं ब्रह्म तत्त्वमसीति पित्रा उपदिष्टे सुषुप्तौ सत्संपन्नाः प्रजाः तद्ब्रह्मात्मत्वं किमिति न विदुरिति श्वेतकेतोराशङ्कां 'यथा सोम्य मधुकृतः' इत्यादिना मधुकरैर्मधुत्वेन संभृतनानावृक्षरससमुदायवत् विवेक्तुमशक्यत्वेन सुषुप्त्यादौ प्राप्तमपि ब्रह्म न ज्ञायत इति निरस्य तदेव तत्त्वमुपदिदेश । ननु सुषुप्त्यादौ करणाभावादविज्ञानं, उत्थितास्तु ब्रह्मणो वयमुत्थिता इति कस्मान्न जानीयुः इत्याशङ्कां 'इमास्सोम्य नद्यः' इत्यादिना यथा जलधरैः अम्भोधित आकृष्य विसृष्टानां नदीनां रसान्यत्वेन समुद्रादागमनं दुर्ज्ञानं एवं ब्रह्मण उत्थितानां संसारिणां तद्वैलक्षण्यात् तदात्मनाऽनवस्थानात् उत्थिता वयमिति न ज्ञानमिति परिहारेण पुनस्तदेवोपदिश्य तथा सुषुप्तौ जीवस्य कारणभावापत्तौ समुद्रवीच्यादिवत् नाशशङ्कायां 'अस्य सोम्य महतः' इत्यादिना यथा वृक्षस्य परश्वादिना उच्छेदे रसस्रावित्वात् सजीवत्वं तथा सुषुप्तौ देहेऽपि लोहितदर्शनात् न जीवनाश इति परिहारेण प्रागुक्त एवार्थे स्थापिते पुनः कथं सूक्ष्मात् ब्रह्मणः स्थूलजगदुत्पत्तिरिति शङ्कां 'न्यग्रोधफलमत आहर' इत्यादिना वटधानान्तर्गतसूक्ष्मरूपात् वटोत्पत्तिवत् जगदुत्पत्तिसंभवेन निराकृत्य पुनः तस्मिन्नेवार्थे स्थापिते पुनः जगन्मूलकारणं ब्रह्म किमिति नोपलभ्यत इति शङ्किते 'लवणमेतदुदकेऽवधाय' इत्यादिना उदकप्राक्षिप्तलवणघनस्य दर्शनस्पर्शनाभ्यामनुपलम्भेऽपि रसनात् लवणसद्भावनिश्चयवत् चक्षुराद्यदृश्यमपि ब्रह्म कार्यलिङ्गादस्तीत्युक्त्वा तदेवोपदिष्टम् । ततो ब्रह्मसाक्षात्कारे क उपायः इत्या-

[1] छा. ६-८....

शङ्कायां 'यथा सोम्य पुरुषं गन्धारेभ्यः'[1] इत्यादिना गंधारदेशात् अरण्ये चोरैर्निक्षिप्तस्य बद्धचक्षुषः पुरुषस्य नेत्रबन्धनिर्मोक्षकगन्धारोपदेशवत् आचार्यकृतादुपदेशात् ब्रह्मसाक्षात्कारः अविद्यानिवृत्तिश्च इत्युक्त्वा तदेवोपदिष्टम् । ततः स विद्वान् केन प्रकारेण ब्रह्म संपद्यत इत्यपेक्षायां 'पुरुषं सोम्योपतापिनम्' इत्यादिना मनआदेर्लये सति ज्ञानदीपप्रकाशितं ब्रह्मैव प्रतिपद्यते नार्चिरादिकमपेक्षते, अविद्वांस्तु देहान्तरं गृह्णातीत्युक्त्वा तदेवोपदिदेश । तदनु यदि मरिष्यमाणो मोक्ष्यमाणश्च तदा ब्रह्म संपद्यते तर्ह्यविद्वानिव विद्वानपि किमिति नावर्तत इत्याशङ्कायां 'पुरुषं सोम्योत हस्तगृहीतमानयन्ति' इत्यादिना तप्तं परशुं गृह्णतोः स्तेनास्तेनयोः तप्तपरशुकरतलसंयोगाविशेषेऽपि सत्यव्यवहितहस्ततलत्वात् अस्तेनो न दह्यते स्तेनस्तु दह्यते एवमेवान्त्यकाले विद्वदविदुषोस्समानायामपि सत्संपत्तौ सत्यब्रह्माभिसन्धिः पुनर्देहं न गृह्णाति अनृतदेहाद्यात्मबुद्धिस्तु पुनश्शरीरमुपादत्त इति परिहारपूर्वकं तदेव 'तत्त्वमसि' इत्युपदिदेश । स्वगतभेदस्तु ब्रह्मणि निरवयवे निर्धर्मके न संभवतीति श्रुत्या उपेक्षितः । एवं छन्दोगश्रुत्या भगवत्या सानुक्रोशं क्रमेणैक एवाद्वितीयो नवभिः पर्यायैः सन्मात्रप्रत्यगभिन्नो यो विष्णुः प्रतिपादितः तमिदानीं स्तौति—

**सत्तामात्रं केवलविज्ञानमजं सत्**
**सूक्ष्मं नित्यं तत्त्वमसीत्यात्मसुताय ।**
**साम्नामन्ते प्राह पिता यं विभुमाद्यं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ३७ ॥**

**सत्तामात्रं** अस्तिप्रत्ययवेद्यं 'सदेव सोम्य'[2] इति श्रुतेः

[1] छा. ६-१४....

[2] छा. ६-२.

**केवलविज्ञानं** विषयविनिर्मुक्तचिद्रूपं 'वाचारम्भणम्'[1] इत्यादि-श्रुत्या विषयस्य मिथ्यात्वात् 'तदैक्षत'[1] इति श्रुतेश्च नाचिद्रूपस्येक्षणं संभवति **अजं** जन्मरहितं 'अग्र आसीत्' इति श्रुतेः **सत्** सत्यं 'तत्स-त्यम्' इति श्रुतेः **सूक्ष्मं** इन्द्रियाद्यविषयं 'स य एषोऽणिमा' इति श्रुतेः **नित्यं** नाशरहितं 'न जीवो म्रियते' इति श्रुतेः **विभुं** व्यापकं 'स आत्मा' इति श्रुतेः **आद्यं** जगतो निमित्तोपादानकारणं 'तदैक्षत बहु स्यां प्रजायेय' इति श्रुतेः एवम्भूतं विष्णुं **साम्नामन्ते** सामोपनिषदि **पिता** उद्दालकनामा ऋषिः **आत्मसुताय** स्वपुत्राय श्वेतकेतुनाम्ने हे श्वेतकेतो! **तत्त्वमसि** उक्तरूपं ब्रह्म भवसि **इति** एवं **प्राह** प्रकर्षेण पुनःपुनराह उपदिष्टवान् **तमीड** इत्यर्थः ॥ ३७ ॥

---

बृहदारण्यके मूर्तामूर्तब्राह्मणे—'द्वे वाव ब्रह्मणो रूपे मूर्तं च'[2] इत्युपक्रम्य अनन्तरं च 'तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षा-च्च' इति मूर्तपदं व्याख्याय तदनु 'अथामूर्तं वायुश्चान्तरिक्षं च' इत्यमूर्तपदं व्याख्याय ततो यथाक्रमं नित्यानित्यपरिच्छिन्नव्या-पकप्रत्यक्षपरोक्षरूपेण एतद्द्वयं प्रदर्श्य ततः समष्टिव्यष्ट्यात्मकस्थूल-सूक्ष्मशरीरद्वयं च मूर्तामूर्तात्मकपञ्चभूतकार्यत्वेन प्रदर्श्य अरूपं प्रपञ्चय अन्ते तद्रूपद्वयमपोदितम् 'अथात आदेशो नेति नेति न ह्येतस्मादिति'। "नेतिनेति" इत्यपवादवाक्यस्य चायमर्थः—अथ ब्रह्म-द्वयनिरूपणानन्तरं यतोऽरूपब्रह्म निरूपयितव्यं तदर्थमेव रूपद्वय-निरूपणात् अतो हेतोः आदेशः उपदेशः ब्रह्मणः क्रियत इति शेषः। कथं? नेति नेति। इतिशब्दौ प्रत्यक्षादिसन्निधापितमूर्तामूर्ततदुत्थलि-ङ्गपुरुषपरौ यथाक्रमं द्रष्टव्यौ नञ्पदद्वयनिषेध्यसमर्पकौ, तयोरेव प्रकृतत्वात् विशेष्यत्वेन। ब्रह्मणस्तु विशेषणत्वात् प्रकृतत्वेऽपि न

---

[1]छा. ६-१. [2]बृह. ४-३.

निषेध्यत्वेन संबन्धः । तथाच नञ्पदद्वयेन उक्तरूपद्वयनिषेधेन ब्रह्मोपदिश्यते । ननु कथमनेन ब्रह्मोपदिश्यते रूपद्वयनिषेधमात्रस्यैव प्रतीतेः? तत्राह—न हीति । एतस्मात् निषेधरूपादुपदेशादन्य उपदेशो नास्ति, ब्रह्मणो निर्विशेषत्वेन विधिशब्दागोचरत्वादित्यर्थः । विधिः श्रोतव्यादिः । ननु तर्हि ब्रह्म नास्तीति प्राप्तं तत्राह—अन्यत्परमस्तीति । निरवधिकनिषेधायोगात् मूर्तामूर्तरूपद्वयनिषेधावधिभूतं अन्यद्रूपद्वयव्यतिरिक्तं ब्रह्मास्तीति गम्यत इत्यर्थः । अथवा—नेति नेतीति वीप्सा । तया च यद्विषयत्वेन प्राप्तं तत्सर्वं नेति नेतीति निषिध्यते । शेषं पूर्ववत् । इत्थं विषयत्वेन प्राप्तं सर्वं निषिध्य निर्विशेषोऽविषयः प्रत्यगभिन्नो यो विष्णुः मूर्तामूर्तब्राह्मणेन प्रतिपादितस्तमिदानीं स्तौति—

**मूर्तामूर्ते पूर्वमपोह्याथ समाधौ**
**दृश्यं सर्वं नेति च नेतीति विहाय ।**
**चैतन्यांशे स्वात्मनि सन्तं च विदुर्यं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥३८॥**

**समाधौ** समाधीयते चित्तमस्मिन्निति समाधिः विष्णुः **चैतन्यांशे** चैतन्यमेव अंश इवांशो जडांशपरित्यागेन अवशिष्यमाणं चिन्मात्रमित्यर्थः । तस्मिन् **स्वात्मनि** प्रत्यगभिन्ने विष्णौ आरोपिते ये **मूर्तामूर्ते** पञ्चभूतात्मके ते **नेति नेतीति अपोह्य** निषिध्य—नेति नेतीति वाक्यस्यार्थान्तरमाह—**अथेत्यादिना** । अथशब्दः पक्षान्तरे, अथवेत्यर्थः । **नेतिनेतीतिवीप्सया दृश्यं सर्वं विहाय** दृश्यत्वेन प्राप्तं सर्वं निषिध्येत्यर्थः । एवमेतन्निषेधावधिभूतत्वेन **सन्तं** विद्यमानं **यं विदुः** । चकारात्पूर्वोक्तसत्यादिवाक्येन विधिमुखेन च यं विदुरित्यर्थः । तदुक्तं सूत्रकारेण—'प्रकृतैतावत्त्वं हि

प्रतिषेधति ततो ब्रवीति च भूयः' इति। प्रकृतं यदेतावत्त्वं रूपेयत्तारूपद्वयमित्यर्थः—तदेव नेतिनेतीति वाक्यं प्रतिषेधति, न तु ब्रह्मेत्यर्थः। हि यस्मात् ततः परं च भूयः पुनः ब्रवीति 'अन्यत्परमस्ति'[2] इति तस्माद्रूपद्वयस्यैव निषेधो न ब्रह्मण इति सूत्रार्थः ॥ ३८ ॥

---

बृहदारण्यके याज्ञवल्क्येन उषस्तकहोळादीनां पराजये गार्गी नाम ब्रह्मविदुषी काचित् ब्राह्मणी आगम्य ब्राह्मणेभ्योऽनुज्ञां प्राप्य याज्ञवल्क्यं पप्रच्छ, उत्तरदाने अवाच्यवचनं नाम निग्रहस्थानं, तददाने च अप्रतिभा नाम निग्रहस्थानमित्युभयथा याज्ञवल्क्यस्य पराजयं मन्वाना। हे याज्ञवल्क्य! सर्वमिदं जगत् भूतं भवच्च भविष्यच्च यत्राव्याकृताकाशे वर्तते सोऽव्याकृताकाशः कुत्राध्यस्त इति। याज्ञवल्क्यश्च तस्या अभिप्रायं ज्ञात्वा एकदैव दोषद्वयं परिहरन्नाह—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहम्'[3] इत्यादि। ब्राह्मणा अभिवदन्तीत्यनेन स्वस्यावाच्यवचनदोषः परिहृतः। स्थौल्यादिसकलधर्मरहिताक्षरकथनेन अप्रतिभा च परिहृता। ततो नेतरसकलनिषेधमात्रात् अक्षरासिद्धिरिति शङ्कायां सकलनिषेधावधित्वेन तत्सत्त्वमभिप्रेत्य 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः'[3] इत्यादिना द्यावापृथिव्यौ निमेषादिकालाश्च नद्यस्समुद्रा देवाः पितरश्चाक्षरस्य शासने वर्तन्त इति सकलमर्यादाविधारकत्वेन अक्षरसत्त्वमुक्त्वा 'यो वा एतदक्षरं गार्ग्यविदित्वा'[3] इत्यादिना च यदज्ञानात्संसारकार्पण्यं यज्ज्ञानाच्च तन्निवृत्तिरस्तीति तदक्षरमित्युक्त्वा कुतस्तर्हि तन्नानुभूयत इत्याकांक्षायां द्रष्टचाद्य-

---

[1]ब्र. सू. ३-२-२१. [2]बृह. ४-३-६. [3]बृ. ५-८.

विषयत्वेऽपि सर्वसाधकत्वेन स्वयं भासमानं तदस्तीति द्रष्ट्रन्तरं च निषेधयन् 'अदृष्टं द्रष्टृ'[1] 'नान्यदतोऽस्ति द्रष्टृ'[1] इत्यादिना अक्षरसद्भावं गार्गीं प्रति प्रसाधयामासेति तदक्षरब्राह्मणसिद्धं तत्त्वं स्तौति—

**ओतं प्रोतं यत्र च सर्वं गगनान्तं**
**योऽस्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञः ।**
**ज्ञाताऽतोऽ यो नेत्युपलभ्यो न च वेद्यः**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ३९ ॥**

गगनान्तं अव्याकृताकाशपर्यन्तं सर्वं इदं जगत् **यत्र** विष्णौ ओतं च प्रोतं च तन्तुषु पटवत्कल्पितमित्यर्थः । **यश्च** अस्थूलानण्वादिषु 'अस्थूलमनण्वह्रस्वम्'[1] इत्यादिवाक्येषु **अक्षर-संज्ञः** नाशरहिततया सर्वव्यापकत्वेन वा अक्षर इति संज्ञा यस्य सः सिद्धः प्रसिद्धः सर्वेष्वपि क्षेत्रेषु, **अतः** अक्षरादन्यो ज्ञाता नास्ति सर्वस्य तद्दृश्यत्वादित्यन्यप्रतिषेधेन **उपलभ्यः** ज्ञातव्यः न तु विषयतया वेद्यः 'अविज्ञातं विज्ञातृ' 'नान्यदतोऽस्ति विज्ञातृ'[1] इति श्रुतेः । तमीडे इत्यर्थः ॥ ३९ ॥

---

ननु प्रत्यक्षादिप्रमाणैः सिद्धे द्वैते उपलभ्यमाने कथमितर-प्रतिषेधेनोपलभ्यं ब्रह्मेत्याशङ्क्याह—

**तावत् सर्वं सत्यमिवाभाति यदेतत्**
**यावत् सोऽस्मीत्यात्मनि यो ज्ञो न हि दृष्टः ।**

---

[1]बृह. ५-८.

**दृष्टे यस्मिन् सर्वमसत्यं भवतीदं**

**तं संसारध्वान्तविनाशं हरिमीडे ॥ ४० ॥**

**यावत्** यदा **आत्मा** कार्यकरणसङ्घाते यः ज्ञः चिद्धातुः साक्षित्वेन वर्तते स यावत् ब्रह्मास्मीति ब्रह्मतया **न दृष्टः** नावलोकितः **तावदेव यदेतत् दृश्यते** जगदिदं सर्वं भ्रान्त्या सत्यमिव **आभाति** प्रबोधात्पूर्वं स्वप्नवत्, **यस्मिन्** प्रत्यगभिन्ने ब्रह्मणि **दृष्टे सर्वमिदं** बाह्यं वियदादि आन्तरं कर्तृत्वादिकं च **असत्यं भवति** पूर्वमप्यसत्यमेव तत् तदा असत्यमिति ज्ञातं भवति प्रबोधानन्तरं स्वप्नवदित्यर्थः, 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्'[1] इत्यादिश्रुतेः । यत्र विद्यावस्थायां अस्याधिकारिणः सर्वं जगत् आत्मैवाभूत् विद्यया आत्ममात्रतया ज्ञातमभूत् तत् तदा केन करणेन कं विषयं को वा पश्येत्, न किंचिदपि, सर्वस्यात्ममात्रतया ज्ञातृज्ञानज्ञेयानामभावादित्यर्थः । प्रत्यक्षादिप्रमाणानां व्यावहारिकविषयत्वेन तद्विषयप्रपञ्चस्य निषेधमुखेन तात्त्विकप्रमाणभूतया श्रुत्या ब्रह्मोपलब्धुं शक्यत इति भावः । ननु—'सत्यकामस्सत्यसङ्कल्पः'[2] 'सर्वगन्धस्सर्वरसः'[3] इत्यादौ ब्रह्मणस्सप्रपञ्चत्वस्यापि श्रुतिसिद्धत्वात् कथं निष्प्रपञ्चवाक्येन तन्निषेधः । न च परमार्थतो ब्रह्मणस्सप्रपञ्चनिष्प्रपञ्चोभयरूपत्वं परस्परविरोधेन वक्तुमशक्यमिति वाच्यम् । स्वतो निष्प्रपञ्चस्य ब्रह्मणः पृथिव्याद्युपाधित एव सप्रपञ्चत्वोपपत्तिरिति चेत्—न, स्वतो विरुद्धयोः द्वयोरुपाधितोऽपि परमार्थत एकत्र संबन्धानुपपत्तेः । न हि स्वतो धवळे स्फटिके जपाकुसुमोपाधिवशात् प्रतीयमानो रक्तिमा परमार्थतो दृश्यते, न वा सूर्यतमसोः परमार्थसंबन्धघटकः कश्चिदुपाधिरस्ति । तदुक्तं सूत्रकारेण 'न स्था-

---

[1]बृह. ४-४-१३. [2]छा. ८-१. [3]छा. ३-४.

नतोऽपि परस्योभयलिङ्गं सर्वत्र हि'[1] । स्थानतोऽपि उपाधिद्वाराऽपि परस्य ब्रह्मणः उभयलिङ्गं निष्प्रपञ्चसप्रपञ्चोभयरूपत्वं न संभवति, उक्तयुक्तेरेव । सर्वत्र वेदान्तेषु 'अशब्दमस्पर्शम्'[2] 'अस्थूलमनणु'[3] 'यत्तदद्रेश्यमग्राह्यम्'[4] 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने'[5] 'अदृष्टमव्यवहार्यं'[6] 'स वा एष महानज आत्मा'[7] 'अजरोऽमरः'[7] 'यतो वाचो निवर्तन्ते'[8] 'स एष नेतिनेत्यात्मा'[7] 'अथात आदेशो नेति नेतीति'[9] 'यत्र नान्यत्पश्यति'[10] 'यत्र त्वस्य सर्वमात्मैवाभूत्'[11] इत्यादिषु सर्वत्र निष्प्रपञ्चब्रह्मण एव श्रुतत्वाच्चेति सूत्रार्थः । अपरमार्थतस्तु परस्परविरुद्धमपि रूपद्वयं एकत्र भवत्येव स्फटिकादौ दर्शनात् । नन्वन्यतरमिथ्यात्वे सप्रपञ्चश्रुत्यनुरोधेन निष्प्रपञ्चत्वस्यैव आरोपितत्वं किं न स्यादिति चेन्न—तस्य प्रतिवेदान्तं उपक्रमादिभिः षड्विधलिङ्गैः तात्पर्येणावगम्यमानत्वात्, 'द्वे वाव ब्रह्मणो रूपे'[9] इति सप्रपञ्चत्वं प्रपञ्च्य 'नेतिनेतीति'[9] निषेधात् सप्रपञ्चत्वश्रुतेः निषेध्यसमर्पकतया निषेधश्रुतिशेषत्वावगमाच्च । ननु किमर्थं सप्रपञ्चत्वं ब्रह्मण उक्त्वा श्रुत्या निषिध्यते 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायेन ब्रह्मणः प्रपञ्चसंबन्धावचनस्यैव युक्तत्वादिति चेत्, शृणु तर्हि श्रुतेरभिप्रायम्—आदित एव 'एकमेवाद्वितीयं ब्रह्म' इत्युक्ते आकाशादौ द्वितीये सति कथमद्वितीयत्वं ब्रह्मण इत्याशङ्का जायते, अतस्तन्निवृत्त्यर्थं ब्रह्मण एवोपादानात् वियदादिसर्वप्रपञ्चोत्पत्तिकथने कार्यस्योपादानात् अन्यत्र अनवस्थानेन ब्रह्मण्येवावस्थानमुक्त्वा अनन्तरं च 'नेह नानाऽस्ति'[7] इत्यादिवाक्येन प्रपञ्चे निषिद्धे 'एकमेवाद्वितीयं ब्रह्म' इत्येतत्प्र-

---

[1]ब्रह्मसू. ३-२-११. [2]कठ. ३-१५. [3]बृह. ५-८. [4]मुण्ड. १-१-६. [5]तै. २-७. [6]माण्डू. ७. [7]बृह. ६-४. [8]तै. २-४. [9]बृह. ४-३. [10]छा. ७-२४. [11]बृह. ६-५-१५.

तिष्ठितं भवति । अन्यथा ब्रह्मणः सृष्टिवाक्यैः सप्रपञ्चत्वमनुक्त्वा प्रथमत एव नेह नानाऽस्तीति निषेधे इह निषिध्यमानघटस्य अन्यत्र सत्त्ववत् अन्यत्र प्रपञ्चसत्त्वशङ्का स्यादिति श्रुतिर्मन्यते । सप्रपञ्चब्रह्मोपासनं तु 'वाचं धेनुमुपासीत'[1] इत्यादिवदारोपितप्रपञ्चविषयत्वेनापि उपपद्यते । न चैवं निष्प्रपञ्चब्रह्मण एवारोपितत्वेन उपासनविषयत्वं किं न स्यादिति वाच्यम्, तस्यानुपास्यत्वात्, 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'[2] इत्युपास्यत्वनिषेधात्, निष्प्रपञ्चवाक्येषूपासनविध्यश्रवणात्, आरोपितरूपेणैव उपासनोपपत्तौ प्रतिवेदान्तं तात्पर्येण प्रपञ्चनिषेधानुपपत्तेश्च । निष्प्रपञ्चत्वस्यैव परमार्थत्वं सूत्रकारेणाप्युक्तं 'अरूपवदेव हि तत्प्रधानत्वात्'[3] इति । अरूपवदेव हि ब्रह्म परमार्थतो भवितुमर्हति सर्वासां श्रुतीनां उपक्रमादिभिः तत्प्रधानत्वात् निष्प्रपञ्चब्रह्मपरत्वादिति सूत्रार्थः । तस्मात्परमार्थतो निष्प्रपञ्चमेव ब्रह्मेत्यलं सङ्ग्रहव्याख्याने अतिविस्तरेण ॥ ४० ॥

---

नन्वेवं सहस्रशः प्रतिपादितेऽपि तत्त्वे रागादिदोषविनिर्मुक्त आत्मा नोपलभ्यते, तत् कथं परमात्माऽस्मीति साक्षात्कुर्यादित्याशङ्क्याह—

**रागामुक्तं लोहयुतं हेम यथाऽग्नौ**
**योगाष्टाङ्गैरुज्ज्वलितज्ञानमयाग्नौ ।**
**दग्ध्वाऽऽत्मानं ज्ञं परिशिष्टं च विदुर्यं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥४१॥**

**रागामुक्तं** रागादिना कलुषीकृतं **आत्मानं दग्ध्वा** प्रताप्य विशोध्य **परिशिष्टं च ज्ञं** चिद्धातुं **यं विदुरिति** संबन्धः ।

---

[1] बृह. ७-८-१. [2] केन. ५. [3] ब्र. सू. ३-२-१४.

क्व दग्ध्वेत्याकांक्षायामाह—योगेति । योगाष्टाङ्गैरुज्ज्वलितज्ञानमयाग्नौ योगः प्रत्यग्ब्रह्मणोरैक्यं तत्प्राप्तौ साधनभूतैः अष्टाङ्गैः निर्गुणविषयैः यमनियमादिभिरष्टाभिरङ्गैः—निर्गुणयोगाष्टाङ्गानि च आत्मयोगग्रन्थे योगविशेषणानि उक्तानि,

देहाक्षादौ विरक्तिः यम इह नियमः स्वात्मतत्त्वेऽनुरक्तिः
बाह्यौदासीन्यमेवासनमसुनियतः त्वक्षरार्थो मृषार्थात् ।
प्रत्याहारः स्वबुद्धेर्विषयविमुखता धारणा स्वात्मनिष्ठा
ध्यानं ब्रह्माहमस्मीत्यहगनहममोहात्मसंवित् समाधिः ॥

इति । तैःकाष्ठस्थानीयैः उज्ज्वलितो यो ज्ञानमयोऽग्निः तत्र । तथाऽन्यत्राप्युक्तम्—

देहेन्द्रियादिवैराग्यं यम इत्युच्यते बुधैः ।
अनुरक्तिः परे तत्त्वे नियमः परिकीर्तितः ॥
सर्ववस्तुष्वुदासीना वृत्तिरासनमात्मनः ।
जगत्सर्वमिदं मिथ्या प्रतीतिः प्राणसंयमः ॥
चित्तस्यान्तर्मुखीभावः प्रत्याहारस्स उच्यते ।
चित्तस्य निश्चलीभावो धारणाऽसौ निगद्यते ॥
सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते ।
ध्यानस्य विस्मृतिस्सम्यक् समाधिरभिधीयते ॥

इति । अथवा—अपरिपक्वचित्तस्य पतञ्जलिना सूत्रितानि प्रसिद्धान्येव यमनियमादीनि योगाष्टाङ्गानि, तैरुज्ज्वलितः प्रकाशितः यो ज्ञानमयोऽग्निः तस्मिन्नित्यर्थः । तानि च सूत्राणि इमानि—‘ अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः । शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः ’[1] । स्वाध्यायः प्रणवजपः । ईश्वरप्रणिधानमीश्वरभक्तिः । ‘स्थिर-

[1]योगसू., २ पा.

सुखमासनम् "[1]—यादृशेन देहस्थापनेन यस्य पुरुषस्य अवयवव्यथाऽनुत्पत्तिलक्षणं सुखं देहचलनराहित्यलक्षणं स्थैर्यं च संपद्यते तदेव तस्य पद्मस्वस्तिकाद्यन्यतमं मुख्यमासनमित्यर्थः । 'तस्मिन् सति श्वासप्रश्वासयोः गतिविच्छेदः प्राणायामः "[1]—आसने दृढे सति दशविंशतित्रिंशदादिक्रमेण प्रणवजपैः प्रतिपक्षं प्रतिमासं स्वाभाविकवायुगतिविच्छेदः प्राणायाम इत्यर्थः । 'स्वविषयासंप्रयोगे चित्तस्वरूपानुकारे इन्द्रियाणां प्रत्याहारः "[1]—इन्द्रियाणां शब्दस्पर्शादिस्वस्वविषयैः असंप्रयोगे निरुद्धचित्तरूपानुकार इव यत्तूष्णीमवस्थानं स प्रत्याहार इत्यर्थः । ' देशबन्धश्चित्तस्य धारणा "[1]—देशे आधारादौ आत्मनि वा चित्तस्य स्थापनं धारणेत्यर्थः । 'तत्र प्रत्ययैकतानता ध्यानम् "[1]—तत्रात्मादौ प्रत्ययसान्तत्यं ध्यानमित्यर्थः । 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः "[1]—ध्यानमेव ध्यातृध्याने विहाय ध्येयमात्रगोचरं सत् समाधिरित्युच्यते । तदा ध्यानस्वरूपं शून्यमिव भाति ध्यानविषयाभावादित्यर्थः । एतत्साध्यो यस्त्वंपदार्थसाक्षात्कारः तस्मिन् अग्नौ । शोधने दृष्टान्तमाह—**लोहयुतं हेम यथाऽग्नाविति** । अयोमिश्रं सुवर्णं अग्नौ प्रताप्य अयो विहाय सुवर्णं यथा गृह्णन्ति तद्वदित्यर्थः ॥ ४१ ॥

---

इदानीं भक्तेः फलाभिधानपूर्वकं स्तौति—

**यं विज्ञानज्योतिषमाद्यं सुविभान्तं**
**हृद्यर्केन्द्वग्न्योकसमीड्यं तटिदाभम् ।**
**भक्त्याऽऽराध्येहैव विशान्त्यात्मनि सन्तं**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ४२ ॥**

---

[1]योगसू. २ पा.

**हृदि** हृदये **तटिदाभं** तटिद्विद्युत् तद्वदाभा यथा भवति तथा **सुविभान्तं** प्रत्यक्त्वेन सुष्ठु प्रकाशमानं **विज्ञानज्योतिषं** विज्ञानप्रकाशरूपं न तु जडज्योतीरूपं, 'ज्योतिषां ज्योतिः'[1] इति श्रुतेः । **आद्यं** सर्वकारणं **अर्केन्द्वग्न्योकसं** अर्केन्द्वग्नयः ओकांसि उपलब्धिस्थानानि यस्य । तत्रैव हि उपास्यमानः परमेश्वरः प्रसन्नो भवति । **ईड्यं** स्तुत्यं **भक्त्या** श्रवणादिभिः अष्टाङ्गयोगैः उपासनादिभिश्च या भक्तिर्भजनं तया **यमाराध्य आत्मनि** स्वस्मिन् स्वरूपतया **सन्तं** वर्तमानं **इहैव** जीवत्येव देहे **विशन्ति** तदात्मानो भवन्तीत्यर्थः, अन्यस्य प्रवेशस्यासंभवात् । **तमीडे** ॥ ४२ ॥

---

इदानीं स्तुतिकर्तुः फलाभिधानपूर्वकं स्तौति—

**पायाद्भक्तं स्वात्मनि सन्तं पुरुषं यो**
**भक्त्या स्तौतीत्याङ्गिरसं विष्णुरिमं माम् ।**
**इत्यात्मानं स्वात्मनि संहृत्य सदैकः**
**तं संसारध्वान्तविनाशं हरिमीडे ॥ ४३ ॥**

**यो** विष्णुः इमं भक्तं **पायात्** रक्षतु **तमीड** इति संबन्धः । कथंभूतं ? **स्वात्मनि सन्तं** विष्णुरस्मीत्यभेदेन वर्तमानं **भक्तं**—स एव मुख्यो भक्तः, 'चतुर्विधा भजन्ते माम्'[2] इत्युपक्रम्य 'ज्ञानी त्वात्मैव मे मतम्'[2] इति स्तुतत्वात् ।

तक्षादिनीचैस्सुकृतानसत्यान् पाषाणमृद्दारुमयांश्च देवान् ।
भजन्ति ये माधवनिन्दकास्ते पूर्णस्सदानन्दमयो हि विष्णुः ॥

इति भेददर्शिनां निन्दितत्वाच्च । केनाभिप्रायेण विष्णोस्तद्रक्षणे

---

[1] बृह. ६-४-१६. [2] भग. ७-१६-१८.

प्रवृत्तिस्तत्राह— **आत्मानं** स्वान्तःकरणं **स्वात्मनि** स्वस्य स्वरूपे मयि **संहृत्य** निरुध्य आङ्गिरसं अङ्गानां रसभूतं स एवाङ्गिरसः, 'अङ्गानां रसः'[1] इति श्रुतेः, देहाद्यनात्मत्यागेन परिशिष्टं चिदानन्दरूपमित्यर्थः । **इमं मां सदा भक्त्या इति स्तौति** प्रत्यगभिन्नत्वेन स्तौतीत्याभिप्रायेण विष्णुः पायादिति संबन्धः । **तमीडे** ॥ ४३ ॥

---

इदानीं स्तोत्रपाठकानां सोत्रार्थमजानतां पाठमात्रादेव विष्णोर्लोकं प्राप्य क्रममुक्तिं, एतत्स्तोत्रार्थं जानतां इहैव परिपूर्णपरमानन्दचित्प्रकाशरूपेणावस्थानरूपमुक्तिं च फलं दर्शयन् स्तोत्रमुपसंहरति—

**इत्थं स्तोत्रं भक्तजनेड्यं भवभीति-**
**ध्वान्तार्काभं भगवत्पादीयमिदं यः ।**
**विष्णोर्लोकं पठति शृणोति व्रजति ज्ञो**
**ज्ञानं ज्ञेयं स्वात्मनि चाप्नोति मनुष्यः॥ ४४**

यो नर **इत्थं** उक्तप्रकारेण **इदं स्तोत्रं**—भक्तानामिहाधिकार इत्याह—**भक्तजनेड्यं** विष्णोर्भक्तिमद्भिः जनैः पाठ्यमिति यावत्, **भवभीतिध्वान्तार्काभं** संसारदुःखतमसश्चण्डभास्करं **भगवत्पादीयं** सर्वज्ञश्रीशङ्करभगवत्पादैः सकललोकानुजिघृक्षया प्रणीतं **पठति** उच्चैरुच्चारयति **शृणोति** पठत्सु सत्सु श्रुत्वा तिष्ठति स **विष्णोः** अनन्तकल्याणगुणमणिगणसागरस्य अनन्तलीलाविहारपरवशीकृतभक्तलोकस्य शुद्धसत्त्वरूपस्य सर्वज्ञस्य सर्वशक्तेः भगवतः परमेश्वरस्य **लोकं** वैकुण्ठाख्यं **व्रजति** गच्छति । **ज्ञो** यः एतदर्थ-

---

[1] बृह. ३-३-१९.

परिज्ञानी पठति स **स्वात्मनि ज्ञानं** तत्त्वसाक्षात्कारं **ज्ञेयं** तद्विषयं ब्रह्म च **मनुष्य** एव सन् इहैव **आप्नोति** स्वयमेव स्वप्रकाशपरिपूर्ण-परमानन्दब्रह्मात्मनाऽवतिष्ठत इत्यर्थः । 'ब्रह्म वेद ब्रह्मैव भवति'[1] इति श्रुतेरिति ॥ ४४ ॥

वाचा यया श्रुतिवचांसि च भेदवादि-
कौलेयकैर्मलिनितानि विशोधितानि ।
तस्यामशुद्धमिह दुर्वचनं मदीयं
सम्मिश्रय शङ्करगुरोर्विबुधाः क्षमन्ताम् ॥

यस्याक्षिपातपदवीं सकृदप्यवाप्य
भूयो न संसृतिकुमार्गमवाप्नुवन्ति ।
लोकास्तमात्मसुखमग्नमनःप्रचारं
कैवल्ययोगिगुरुमाभजतां मनो मे ॥

इन्दीवरेन्द्रमणिसुन्दरमिन्दिरेशं
मन्दीकृतेन्द्ररिपुबृन्दममन्दवीर्यम् ।
मन्दस्मितप्रसरनन्दितलोकबृन्दं
वन्दे दिनेन्द्रकुलनन्दनरामचन्द्रम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीकैवल्यानन्द-
योगीन्द्रपादकमलभृङ्गायमानस्वयंप्रकाशाख्य-
यतिविरचिता श्रीशङ्करभगवत्पादकृत-
हरिस्तुतिव्याख्या हरितत्त्वमुक्तावली-
समाख्या समाप्ता.

---

[1]मु. ३-२-९.

# दशश्लोकी

## सिद्धान्तबिन्दुसहिता.

श्रीशङ्करावार्यनवावतारं विश्वेश्वरं विश्वगुरुं प्रणम्य ।
वेदान्तशास्त्रश्रवणालसानां बोधाय कुर्वे कमपि प्रयत्नम् ॥

इह खलु साक्षात्परम्परया वा सर्वान् जीवान् समुद्दिधीर्षुः भगवान् श्रीशङ्करोऽनात्मभ्यो विवेकेन आत्मानं नित्यशुद्धबुद्धमुक्तस्वभावं संक्षेपेण बोधयितुं दशश्लोकीं प्रणिनाय ॥

ननु इदङ्कारास्पदेभ्योऽनात्मभ्यो विवेकेनाहङ्कारास्पदमात्मानं सर्वो लोकोऽहमस्मीति प्रत्येति दुःखं चानुभवति । तेन ज्ञातज्ञापकत्वान्निष्प्रयोजनत्वाच्च आत्मतत्त्वप्रतिपादनं व्यर्थमिति चेत्—

न, चिद्भास्यत्वेन लक्षणेन इदङ्कारास्पदानामपि देहेन्द्रियमनसां प्रतिभासतः अहङ्कारास्पदत्वेन तदविवेकात् तेन च शुद्धेऽप्यात्मनि दुःखित्वाद्यभिमानात् शास्त्रीयेण च ब्रह्मात्मैक्यज्ञानेन समूलस्य तस्य निवृत्तेः । तस्मादज्ञातज्ञापकत्वात् सप्रयोजनत्वाच्च आत्मतत्त्वप्रतिपादनं न व्यर्थम् ॥

तस्य चात्मतत्त्वस्य 'तत्त्वमसि'[1] 'अहं ब्रह्मास्मि'[2] इत्यादिवेदान्तमहावाक्यमेव प्रमापकम् । वाक्यं च पदार्थज्ञानद्वारैव ज्ञापकमिति तत्त्वंपदार्थयोः प्रकृतवाक्यार्थानुकूलयोः अन्यतोऽसिद्धत्वात् तावपि शास्त्रेणैव प्रमातव्यौ यूपाहवनीयादिपदार्थवत् । ततश्च 'यतो वा इमानि भूतानि जायन्ते । येन जातानि

---

[1] छा. ६-८-७.    [2] बृह. ३-४-६.

जीवन्ति '[1] इत्याद्याः सृष्ट्यादिश्रुतयः तत्पदवाच्यार्थस्य समर्पिकाः । 'सत्यं ज्ञानमनन्तम्'[2] इत्यादयस्तु लक्ष्यार्थस्य । एवं जाग्रत्स्वप्न-सुषुप्त्यादिश्रुतयः 'तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वं चैवापरं चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं च'[3] इत्याद्याः त्वंपदवाच्यार्थस्य समर्पिकाः । 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः'[4] 'न दृष्टेर्द्रष्टारं पश्येः'[5] इत्यादयस्तु लक्ष्यार्थस्य । तेन प्रथममवान्तरवाक्येभ्योऽनुभूतयोः शुद्धयोः जीवब्रह्मणोः तत्त्वमस्यादिवाक्ये मुख्यार्थान्वयानुपपत्त्या लक्षणया स्मरणोपपत्तिः । सुषुप्तौ निर्विकल्पकसाक्षिचैतन्यानुभवा-ङ्गीकाराच्च अद्वितीयब्रह्मविजिज्ञापयिषया प्रवृत्तानां सत्यज्ञानादिप-दानां उपाधिविशिष्टचैतन्ये शक्तत्वेऽपि चैतन्यमात्रे तात्पर्येण तत्रैव तदंश एव संस्कारोद्बोधाच्च । इच्छन्ति हि आकाशादिपदादपि निर्विकल्पं स्मरणं, तात्पर्याधीनत्वाच्छब्दवृत्तेः । तेन प्रमितिप्रमात्रोः महावाक्यार्थबोधे भानमपास्तम् । असंप्रज्ञातसमाधेः श्रुतिस्मृति-सिद्धत्वाच्चेति पारोक्ष्यसद्वितीयत्वाभ्मां च न तत्त्वंपदार्थमात्रानुभ-वादेव कृतकृत्यता । वाच्यार्थभेदावभासान्न पौनरुक्त्यम् । लक्ष्यस्य च अर्थस्यैकत्वादखण्डार्थता । पदजन्यस्मरणस्य निर्विक-ल्पकवाक्यार्थानुकूलस्य निर्विकल्पकत्वं अनुभववेदवाविरुद्धम् । सविक-ल्पकवाक्यार्थबोधे च सविकल्पकपदार्थोपस्थितिरङ्गम् । प्रकृते च निर्विकल्पको वाक्यार्थबोधः, तस्यैव प्रमात्वेन अज्ञाननिवर्तन-सामर्थ्यात् । अतो न लक्ष्यतावच्छेदकमन्तरेण लक्षणानुपपत्तिः; प्रकृ-तवाक्यार्थानुकूलपदार्थोपस्थितेरेव शक्तिलक्षणासाध्यत्वात् ॥

ननु तर्हि वेदान्तवाक्येभ्य एव पदार्थोपस्थितौ वाक्यार्थः

---

[1] तै. उ. ३-१. [2] तै. २-१. [3] बृह. ६-३-१८.
[4] बृह. ६-३-७. [5] बृह. ५-४-२.

बोधे च सति तस्य स्वत एव प्रामाण्यात् तेन अज्ञानतत्कार्य-निवृत्त्युपपत्तौ किं विचारेणेति चेत्—

सत्यम्, वेदान्ता यद्यपि स्वतःप्रामाण्यात् निर्विकल्पकमात्मसाक्षात्कारं जनयन्ति, तथाऽपि तस्य मन्दबुद्धीनां वादिविप्रतिपत्तिज-संशयप्रतिबन्धेन अज्ञाननाशकत्वासामर्थ्यात् । विचारेण तु संशयनिवृत्तौ निरपवादमज्ञाननिवृत्तिरिति संशयबीजभूतवादिविप्रतिपत्तिनिरासार्थं विचार आरभ्यते । तत्र त्वम्पदार्थे प्रथमं विप्रतिपत्तयः प्रदर्श्यन्ते—तत्पदार्थस्य शास्त्रतात्पर्यविषयतया अभ्यर्हितत्वेऽपि त्वम्पदार्थस्य शास्त्रफलमोक्षभागितया ततोऽप्यभ्यर्हितत्वात् । तत्र देहाकारेण परिणतानि चत्वारि भूतान्येव त्वम्पदार्थ इति चार्वाकाः । चक्षुरादीनि प्रत्येकमित्यपरे । मिलितानीत्यन्ये । मन इत्येके । प्राण इत्यपरे । क्षणिकं विज्ञानमिति सुगताः । शून्यमिति माध्यमिकाः । देहेन्द्रियातिरिक्तो देहपरिमाण इति दिगम्बराः । कर्ता भोक्ता जडो विभुरिति वैशेषिकतार्किकप्राभाकराः । जडो बोधात्मक इति भाट्टाः । भोक्तैव केवलबोधात्मक इति साङ्ख्याः, पातञ्जलाश्च । अविद्यया कर्तृत्वादिभाक् परमार्थतो निर्धर्मकः परमानन्दबोध एवेत्यौपनिषदाः । एवं सामान्यतोऽहम्प्रत्ययसिद्धे चिदात्मनि वादिविप्रतिपत्तिभिः सन्दिग्धे अहम्प्रत्ययस्यालम्बनविशेषनिर्णयायाह भगवानाचार्यः—

**न भूमिर्न तोयं न तेजो न वायुः**
**न खं नेन्द्रियं वा न तेषां समूहः ।**
**अनैकान्तिकत्वात् सुषुप्त्येकसिद्धः**
**तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १ ॥**

अहं अहम्प्रत्ययालम्बनम् । एकः अद्वितीयः । **अवशिष्टः** सर्वद्वैतबाधेऽप्यबाधितः । शिवः परमानन्दबोधरूपः, तस्यैव मङ्गलरूपत्वात् । केवलो निर्धर्मकः । तेनाद्वितीयः सर्वप्रमाणाबाध्यः परमानन्दबोध एवाहम्प्रत्ययालम्बनमित्यौपनिषदपक्ष एव श्रेयानित्यर्थः । एतदुपपादनायेतरवादिमतानि निराकरिष्यन् प्रथमं देहात्मवादं निराकरोति—**न भूमिर्न तोयं न तेजो न वायुर्न खमिति** । अत्राहमिति सर्वत्र नञा सम्बध्यते । या भूमिः साऽहं न भवामि, योऽहं स भूमिर्न भवतीति च परस्परतादात्म्याभावो द्रष्टव्यः ॥

यद्यपि वादिना प्रत्येकं भूम्यादिरात्मत्वेन नाभ्युपेयते, सङ्घातस्यैव तदभ्युपगमात् । तथाऽपि तन्मते अवयव्यनङ्गीकारात्, पञ्चमतत्त्वाभ्युपगमप्रसङ्गेन च संयोगादिसम्बन्धानभ्युपगमात्, संहन्त्रभावाच्च सङ्घातो नोपपद्यते इत्यभिप्रेत्य प्रत्येकभूतनिराकरणेन भौतिकदेहात्मवादो निराकृतः ॥

यद्यपि भूतचतुष्टयतत्त्ववादिनो मते आवरणाभावत्वेनाभिमतस्य स्थिरस्यासत आकाशस्य देहानुपादानत्वम् । तथाऽपि सिद्धान्ते तस्य भावत्वदेहोपादानत्वाद्यङ्गीरात् तत्राप्यात्मत्वप्रसक्त्या तन्निराकृतम् । अथवा—न वायुरित्यन्तमेव देहात्मवादस्य निराकरणम् । न खमिति शून्यवादस्य, खशब्दस्य शून्यवाचकत्वात् ॥

**नेन्द्रियमिति** प्रत्येकमिन्द्रियाणामात्मत्वनिरासः । **न तेषां समूह** इति मिलितानां भूतानां देहावयव्याकारेण परिणतानामिन्द्रियाणां च मिलितानां निरासः । पूर्वं सङ्घातमनभ्युपगम्य प्रत्येकं भूतानि निराकृतानि । अधुना सङ्घातमभ्युपगम्यापि निराकृतानीति भेदः । भूतनिराकरणेन भौतिकयोः प्राणमनसोर्निरासः । मनोनिराकरणेन मनोवृत्तेः क्षणिकविज्ञानस्य देहा-

तिरिक्तस्य कर्तृत्वभोक्तृत्वादिविशिष्टस्य च निरासः; सिद्धान्ते ज्ञानेच्छासुखादीनां अन्तःकरणाश्रयत्वाभ्युपगमात्; कामसङ्कल्पादीन्प्रकृत्य 'मन एव' इति श्रुतेः । तेन देहमारभ्य केवलभोक्तृपर्यन्तानां तत्तद्वाद्यभ्युपगतानामनात्मत्वं प्रतिज्ञातं भवति । तत्र हेतुमाह—**अनैकान्तिकत्वादिति** । व्यभिचारित्वात् विनाशित्वादिति यावत् । आत्मनो देशकालापरिच्छिन्नत्वात् तत्परिच्छिन्नानां घटादिवदनात्मत्वात् ध्वंसप्रागभावयोश्च ग्रहीतुमशक्यत्वात् अनात्मनां जडत्वात् स्वभिन्नस्य च आत्मत्वाभावात् आत्मन एकत्वेऽपि सुखदुःखाद्याश्रयाणामन्तःकरणानां भेदाभ्युपगमात् व्यवस्थोपपत्तेः । स्वेनैव स्वाभावग्रहणे विरोधात् ग्राह्यकाले ग्राहकासत्त्वात् ग्राहकसत्त्वे ग्राह्याभावात् कृतहान्यकृताभ्यागमप्रसङ्गाच्च न तस्य ध्वंसप्रागभावौ, सद्रूपस्यात्मनः सर्वत्रानुगमाच्च नात्यन्ताभावसम्भवः, द्वैतस्य मिथ्यात्वेन अधिष्ठानसत्तादात्म्यापन्नतयैव सिद्धत्वात् शुक्तिरजतादिवत् अध्यस्तस्य तत्तादात्म्याभावानुपपत्तिः । तेन आत्मा नाभावप्रतियोगी, अभावप्रतियोगिनश्च देहेन्द्रियादयः, तेन ते नात्मानः, किन्तु स्वप्रकाशबोधरूपे आत्मनि अद्वैतेऽपि अनाद्यनिर्वचनीयाविद्याकल्पिता अनिर्वचनीया एवेति सिद्धान्तरहस्यम् ॥

ननु बोधरूप आत्मेति तवाभ्युपगमात् सुषुप्तौ च बोधाभावात् 'गाढं मूढोऽहमासं न किञ्चिदवेदिषम्' इति सुप्तोत्थितस्य परामर्शात् कथमव्यभिचारिता तस्येत्याशङ्क्याह—**सुषुप्त्येकसिद्ध इति** । अयमर्थः—आत्मनः सुषुप्तिसाक्षित्वान्न तत्र तदभावः । अन्यथा मूढोऽहमासमिति परामर्शानुपपत्तेः, मातृमानमितिमेयानां व्यभिचारित्वेऽपि तद्भावाभावसाक्षिणः कालत्रयेऽप्यव्यभिचारात् ॥

ननु प्रमाश्रयः प्रमाता, स एव कर्ता भोक्ता प्रदीपवत्

स्वपरसाधारणसर्वभासकश्चेति न घटादिवत् साक्षिसापेक्ष इति चेत्—न, विकारित्वेन स्वविकारसाक्षित्वानुपपत्तेः, दृश्यस्य द्रष्टृत्वानुपपत्तेः, प्रमातुश्च परिणामित्वेन दृश्यत्वात्, एकस्य कूटस्थस्यैव सर्वसाक्षित्वात् ॥

ननु एकः कूटस्थो निर्धर्मकः साक्षी नाद्रियते, अप्रामाणिकत्वादिति चेत्—न, 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति,' 'न दृष्टेर्द्रष्टारं पश्येः,' 'अदृष्टो द्रष्टा नान्योऽतोऽस्ति द्रष्टा' इत्यादि वदता वेदान्तप्रमाणराजेन तस्यैव सर्वसाक्षित्वेन अभिषिक्तत्वात् ॥

ननु महदेतदिन्द्रजालं प्रमाश्रयान् अकूटस्थान्विहाय कूटस्थमप्रमाश्रयमेव प्रमाणराजः सर्वसाक्षिणं करोतीति । बाढम्, इन्द्रजालमेवैतत् स्वभवदविद्याविलसितत्वात् ॥

तथाऽपि दृश्यस्य घटादिवत् जडत्वेन कथं प्रमाश्रयत्वमिति चेत्—न, दर्पणादिवत्स्वच्छत्वेन चित्प्रतिबिम्बग्राहकत्वात् चित्तादात्म्याध्यासात् ॥

ननु नीरूपस्य निरवयवस्य कथं प्रतिबिम्ब इति चेत्—काऽत्रानुपपत्तिः? विभ्रमहेतूनां विचित्रत्वात् । जपाकुसुमरूपस्य नीरूपस्यापि स्फटिकादौ प्रतिबिम्बदर्शनात्, शब्दस्यापि प्रतिशब्दाख्यप्रतिबिम्बोपलम्भात्, तयोः सम्प्रतिपन्नप्रतिबिम्बवैलक्षण्यानिरूपणात् ॥

तथाऽपीन्द्रियग्राह्यस्यैव प्रतिबिम्ब इति चेत्—न, व्यभिचारात् । अनिन्द्रियग्राह्यस्य साक्षिप्रत्यक्षस्य आकाशस्यापि जलादौ प्रतिबिम्बोपलम्भात् । अन्यथा जानुमात्रेऽप्युदके अतिगम्भीरताप्रतीतिः न स्यात् । आकाशप्रतिबिम्बस्य साक्षिभास्यत्वेऽपि अधिष्ठानग्रह-

णार्थं चक्षुषोऽपेक्षणात् । एतेन नीलं नभ इत्यादि विभ्रमेऽपि चक्षुरन्वयव्यतिरेकौ व्याख्यातौ, तत्र सालोकस्याकाशस्याधिष्ठानत्वात् । तस्मात् चाक्षुषप्रतिबिम्बमेव रूपसापेक्षम्, नान्यदित्यवधेयम् ॥

तथाऽपि आत्मनः प्रतिबिम्बे किं प्रमाणमिति चेत्, शृणु—'रूपं रूपं प्रतिरूपो बभूव' 'तदस्य रूपं प्रतिचक्षणाय' 'मायाभासेन जीवेशौ करोति' इत्यादि श्रुतिः। 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इति स्मृतिः । 'स एष इह प्रविष्टः' 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' 'तत्सृष्ट्वा । तदेवानुप्राविशत्' इत्यादिप्रवेशश्रुत्यर्थापत्तिः । 'आभास एव च' 'अत एव चोपमा सूर्यकादिवत्' इत्यादिसूत्राणि च तत्र मानानि । तस्य च प्रतिबिम्बस्य सत्यत्वमेवेति प्रतिबिम्बवादिनः । मिथ्यात्वमेवेत्याभासवादिनः । स्वरूपे तु न विवाद एवेत्यन्यदेतत् । अचेतनविलक्षणत्वं तु श्रुतिसिद्धं, अनुभवसिद्धं च । तस्मात्सिद्धमन्तःकरणस्य प्रतिबिम्बाध्यासद्वारा प्रमातृत्वम् ॥

ननु अध्यासोपि नोपपद्यते । तथा हि—आत्मनि वा अनात्माऽध्यस्यते? अनात्मनि वा आत्मा? नाद्यः, तस्य निस्सामान्यविशेषत्वेन सर्वदा भासमानत्वेन सादृश्यादिरहितत्वेन च अधिष्ठानत्वासम्भवात् । नापि द्वितीयः; तस्य मिथ्यात्वाभ्युपगमात्, मिथ्यावस्तुनोधिष्ठानत्वे शून्यवादप्रसङ्गात् । तस्य च सत्यत्वे तदनिवृत्तेरनिर्मोक्षप्रसङ्गाच्च । न हि सत्यं क्वचिन्निवर्तते, निवर्त्यमानं वा ज्ञानेन । श्रुतयश्च—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥

'तमेवं विदित्वाऽतिमृत्युमेति । नान्यःपन्था विद्यतेऽयनाय' 'तरति शोकमात्मवित्' इत्याद्याः ज्ञानात्सर्वसंसारनिवृत्तिं दर्शयन्त्यः तस्य च मिथ्यात्वं सूचयन्ति । 'एकमेवाद्वितीयम्' 'अतोऽन्यदार्तं' 'नेह नानास्ति किंचन' 'अथात आदेशो नेतिनेति' इत्याद्याः श्रुतयः साक्षादेव मिथ्यात्वं प्रतिपादयन्ति । दृश्यत्वेन शुक्तिरजतादिवत् मिथ्यात्वानुमानाच्च । आत्माध्यस्ततयैवानात्मनि सिद्धे तत्रात्माध्यासः, अनात्माध्यासेन चात्मनो दोषसादृश्यादिसम्भवात् तत्र च अनात्माध्यास इत्यात्माश्रयादिदोषप्रसङ्गाच्च । एतेन आत्मानात्माध्यासस्य अविद्यात्मकत्वान्न विकल्पावसर इत्यपास्तम् । स्वप्रकाशात्मनि अविद्याया अप्यनुपपत्तेः । तथा हि—साऽप्यध्यस्ता? अनध्यस्ता वा? तत्राद्ये कथं नात्माश्रयादिदोषप्रसङ्गः । अन्त्ये तस्यानुच्छेदात् अनिर्मोक्षप्रसङ्गः । सर्वस्याध्यासमूलत्वे भ्रमप्रमादिव्यवस्था च न स्यात् । एकस्यैवात्मनः प्रमाणप्रमेयप्रमितिप्रमातृरूपता च विरुद्धा । अविरोधाभ्युपगमे वा सौगतमतापत्तिरिति ॥

अत्रोच्यते—अहं मनुष्यः कर्ता भोक्तेत्यादिप्रतीतिस्तावत् सर्वजनसिद्धा । सा च न स्मृतिः; अपरोक्षावभासत्वात् भेदाग्रहपूर्वकत्वाच्च । नापि प्रमा श्रुतियुक्तिबाधितत्वात् । तथा च श्रुतयः 'योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' 'अयमात्मा ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'य आत्मा अपहतपाप्मा' 'यत्साक्षादपरोक्षात् ब्रह्म' 'य आत्मा सर्वान्तरः' 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' 'स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुषः' इत्याद्या अकर्तृभोक्तृपरमानन्दब्रह्मरूपतामात्मनो दर्शयन्ति । युक्तयश्च—विकारिणः परिच्छिन्नत्वेन अनात्मत्वापत्तेः । स्वेनैव

